अत्रेदानीमयं वेदो नाट्यसंज्ञः प्रयुज्यताम् ।
ततस्तस्मिन् ध्वजमहे निहतासुरदानवे ॥५५॥
प्रहृष्टामरसंकीर्णे महेन्द्रविजयोत्सवे ।
नान्दी कृता मया पूर्वमाशीर्वचनसंयुता ॥५६॥
अष्टाङ्गपदसंयुक्ता विचित्रा देवसंमता[1] ।
तदन्तेऽनुकृतिर्बद्धा यथा दैत्याः सुरैर्जिताः ॥५७॥
सम्फेटविद्रवकृता छेद्यभेद्याहवात्मिका ।

ततो ब्रह्मादयो देवाः प्रयोगपरितोषिताः ॥५८॥
प्रददुर्हृष्टमनसः सर्वोपकरणानि मे ।
प्रीतस्तु प्रथमं शक्रो दत्तवान् स्वध्वजं शुभम् ॥५९॥
ब्रह्मा कुटिलकं चैव भृङ्गारं वरुणस्तथा ।
सूर्यश्छत्रं शिवः सिद्धिं वायुर्व्यजनमेव च ॥६०॥
विष्णुः सिंहासनं चैव कुबेरो मुकुटं तथा ।
*श्राव्यत्वं प्रेक्षणीयस्य ददौ देवी सरस्वती ॥६१॥
शेषा ये देवगन्धर्वा यक्षराक्षसपन्नगाः ।
तस्मिन् सदस्यभिप्रीता नानाजातिगुणाश्रयान् ॥६२॥
अंशांशैर्भाषितान् भावान् रसान् रूपं क्रियाबलम्[1] ।
दत्तवन्तः प्रहृष्टास्ते मत्सुतेभ्यो दिवौकसः ॥६३॥

एवं प्रयोगे प्रारब्धे दैत्यदानवनाशने ।
अभवन् क्षुभिताः सर्वे दैत्या ये तत्र संगताः ॥६४॥
विरूपाक्षपुरोगांस्तु विघ्नान् प्रोत्साह्य तेऽब्रुवन् ।
नेत्थमीक्षामहे[1] नाट्यमेतदागम्यतामिति ॥६५॥

55-58 (B 55b-58a ; G 54-56) [1] B दैत्यनिर्जिता. 58-61 (B 58b-61 ; G. 57-59) 62-63 (B. *same*, G. 60-61) [1] G reads 63b as सदुर्धनसुतेभ्यश्च विश्वामरचं मह्. 64-65 ( B. *same* ; G. 62-63 ) [1] B. नेत्थमिच्छा-(मीक्षा-?)महे G. न वयमिच्छामहे,

तवस्तैरसुरैः सार्धं विघ्ना मायामुपाश्रिताः ।
वाचश्चेष्टा स्मृतिं चैव स्तम्भयन्ति स्म नृत्यताम् ॥६६॥

तथा विध्वंसनं दृष्ट्वा [1]तत्र तेषां स देवराट् ।
कस्मात् प्रयोगवैषम्यमित्युक्त्वा ध्यानमाविशत् ॥६७॥

अथापश्यत् सदो विघ्नैः समन्तात् परिवारितम् ।
सहेतरैः सूत्रधारं नष्टसंज्ञं जडीकृतम् ॥६८॥

उत्थाय त्वरितं शक्रो गृहीत्वा ध्वजमुत्तमम् ।
सर्वरत्नोज्ज्वलतनुः कोपादुद्वृत्तलोचनः ॥६९॥

रंगपीठगतान् विघ्नानसुरांश्चैव देवराट् ।
जर्जरीकृतदेहांस्तानकरोज्जर्जरेण सः ॥७०॥

गतेषु[1] तेषु विघ्नेषु सर्वेषु सह दानवैः ।
संप्रहृष्य ततो वाक्यमाहुः सर्वे दिवौकसः ॥७१॥

अहो प्रहरणं दिव्यमिदमासादितं त्वया ।
नाट्यविध्वंसिनः[2] सर्वे येन ते जर्जरीकृताः ॥७२॥

तस्माज् जर्जर इत्येव नामतोऽयं भविष्यति ।
[शेषा][3] ये चैव हिंसार्थमुपयास्यन्ति विघ्नकाः ॥७३॥

दृष्ट्वैव जर्जरं तेऽपि गमिष्यन्त्येवमेव तु ।
एवमेवास्त्विति ततः शक्रः प्रोवाच तान् सुरान् ॥७४॥

रक्षाभूतश्च सर्वेषां भविष्यत्येष जर्जरः ।

प्रयोगे प्रस्तुते ह्येवं स्फीते शक्रमहे पुनः ॥७५॥
त्रासं सञ्जनयन्ति स्म विघ्ना [1][शेषा]स्तु नृत्यताम् ।
दृष्ट्वा तेषां व्यवसितं [2]मदर्थे विघ्नकारजम् ॥७६॥

66 (B. same, G 64) 67-68 (B same, G 65-66) [1]Bth तत्र तत्र, B G. सूत्रधारः. 69-70 (B. same, G 67-68) 71-73 (B 71 72, 73b G 69-70, 71b) [1] B G. निहतेषु च सर्वेषु विघ्नेषु [2] we with Bn, for this B G जर्जरीकृतदेहास्तु दानवा [illegible] कृतः दक्षादतेन त त्रिधा : काद्यजर्जरीकृता, we follow Bth [3] mss. सर्वा 73 75 (B. 74a-75; G. 72-73) 75-76 (B 76; G. 74) [1] mss सर्वाः [2] G. दैत्यानां.

उपस्थितोऽहं ब्रह्माणं सुरैः सर्वैः समन्वितः ।
निश्चिता भगवन् विघ्ना नाट्यस्यास्य विनाशने ॥७७॥
अतो रक्षाविधिं सम्यगाज्ञापय सुरेश्वर ।
ततः स विश्वकर्माणं ब्रह्मोवाच प्रयत्नतः ॥७८॥
कुरु लक्षणसम्पन्नं नाट्यवेश्म महामते ।
कृत्वा यथोक्तमेव तु गृहं पद्मोद्भवाज्ञया ॥७९॥
प्रोक्तवान् द्रुहिणं गत्वा सभायां तु कृताञ्जलि¹ ।
सज्जं नाट्यगृहं देव तदवेक्षितुमर्हसि ॥८०॥

ततः सह महेन्द्रेण सुरैः सर्वैश्च सेतरैः ।
आगच्छत् त्वरितो द्रष्टुं द्रुहिणो नाट्यमण्डपम् ॥८१॥
दृष्ट्वा नाट्यगृहं ब्रह्मा प्राह सर्वान् सुरांस्ततः ।
अंशभागैर्भवद्भिस्तु रक्ष्योऽयं नाट्यमण्डपः ॥८२॥
रक्षणे मण्डपस्याथ विनियुक्तस्तु चन्द्रमाः ।
लोकपालास्तथा दिक्षु विदिक्ष्वपि च मारुताः ॥८३॥
नेपथ्यभूमौ मित्रस्तु निक्षिप्तो वरुणोऽम्बरे ।
वेदिकारक्षणे[1] वह्निर्भाण्डे सर्वे दिवौकसः ॥८४॥
वर्णाश्चत्वार एवाथ स्तम्भेषु विनियोजिताः ।
आदित्याश्चैव रुद्राश्च स्थिताः स्तम्भान्तरेष्वथ ॥८५॥
धारणीषु स्थिता भूताः शालास्वप्सरसस्तथा ।
सर्ववेश्मसु यक्षिण्यो महीपृष्ठे महोदधिः ॥८६॥
द्वारशालानियुक्तौ तु कृतान्तः काल एव च ।
स्थापितौ [2]द्वारपार्श्वे तु [3]नागमुख्यौ महाबलौ ॥८७॥
देहल्यां यमदण्डस्तु शूलं चोपरि संस्थितम् ।
द्वारपालौ स्थितौ चोभौ नियतिर्मृत्युरेव च ॥८८॥

76-78 (B. 77-78; G. 75-76) 78-79 (B. 79; G. 77). 79-81 (B. 81-82, G. 79-80) [1] For 79b B G. ततोऽचिरेण कालेन विश्वकर्मा महद्गृहम् (शुभलक्षणं?) सर्वलक्षणसम्पन्नं नाट्यवेश्म चकार ह. We with Bh. 82-88 (B. 83-89a; G. 81-87a)
[1] Gg. वेदिकां पालक, पातु म ए. [2] B. द्वारपार्श्वे C. नागराजौ ।

पार्श्वे तु रङ्गपीठस्य महेन्द्रः स्थितवान् स्वयम् ।
स्थापिता मत्तवारण्यां विद्युद् दैत्यनिषूदनी ॥८६॥
स्तंभेषु मत्तवारण्याः स्थापिताः परिपालने ।
भूता यक्षाः पिशाचाश्च गुह्यकाश्च महाबलाः ॥६०॥
जर्जरे चैव निक्षिप्तं वज्रं दैत्यनिबर्हणम्' ।
तत्पर्वसु विनिक्षिप्ताः सुरेन्द्रा ह्यमितौजसः ॥६१॥
शिर पर्वास्थितो ब्रह्मा द्वितीये शंकरस्तथा ।
तृतीये च स्थितो विष्णुश्चतुर्थे स्कन्द एव च ॥६२॥
पञ्चमे च महानागाः शेषवासुकितक्षका' ।
एवं विघ्नविनाशाय स्थापिता जर्जरे सुराः ॥६३॥
रङ्गपीठस्य मध्ये तु स्वयं ब्रह्मा प्रतिष्ठितः ।
इत्यर्थं[1] रङ्गमध्ये तु क्रियते पुष्पमोक्षणम् ॥६४॥
पातालवासिनो ये च यक्षगुह्यकपन्नगा ।
अधस्ताद्रङ्गपीठस्य रक्षणे ते नियोजिता' ॥६५॥
नायकं रक्षतीन्द्रस्तु नायिकां तु सरस्वती ।
विदूषकमथोकारः शेषास्तु प्रकृतीर्हरः ॥६६॥
यान्येतानि नियुक्तानि दैवतानीह रक्षणे ।
एतान्येवाधिदैवानि भविष्यन्तीत्युवाच सः ॥६७॥

एतस्मिन्नन्तरे देवैः सर्वैरुक्तः पितामहः ।
साम्ना तावदिमे विघ्नाः स्थाप्यन्तां वचसा त्वया ॥६८॥
पूर्वं साम प्रयोक्तव्य द्वितीयं दानमेव च ।
तयोरुपरि भेदस्तु ततो दण्डः प्रयुज्यते ॥६६॥
देवानां वचनं श्रुत्वा ब्रह्मा वचनमब्रवीत् ।
कस्माद्भवन्तो नाट्यस्य विनाशाय समुत्थिता. ॥१००॥

'89-93 (B 89b-93a ; G 87b-92a). [1] B reads bet. 91a and 91b पञ्च-भूतपिशाचाश्च सुरेन्द्रैश्चामितौजसा। वीरमष्टोऽस्य भगवान् गुह्यकाश्च तथैव च. 93-94 (B.94-95a ; *G.92b-93)* [2]*B.* रक्षार्थं. *95 (B 95b-96a ; G 94) 96 ( B 96b-97a ; G.95).* 97 ( B. 97b-98a ; G 96). 98-99 (B.98b-100a ; G 97-98). 100 (B.100b-101a ; G. 99).

ब्रह्मणो वचनं श्रुत्वा विरूपाक्षोऽब्रवीद्वचः ।
दैत्यैर्विघ्नगणैः सार्धं सामपूर्वमिदं ततः ॥१०१॥
योऽयं भगवता सृष्टो नाट्यवेदः सुरेच्छया ।
प्रत्यादेशोऽयमस्माकं सुरार्थं भवता कृतः ॥१०२॥
तन्नैतदेवं कर्तव्यं त्वया लोकपितामह ।
यथा देवास्तथा दैत्यास्त्वत्तः सर्वे विनिर्गताः ॥१०३॥

विरूपाक्षवचः[1] श्रुत्वा ब्रह्मा वचनमब्रवीत् ।
अलं वो मन्युना दैत्या विषादं त्यजतानघाः ॥१०४॥
भवतां देवतानां च शुभाशुभविकल्पकः ।
कर्मभावान्वयापेक्षी नाट्यवेदो मया कृतः ॥१०५॥
नैकान्ततोऽत्र भवतां देवानां चात्र भावनम् ।
त्रैलोक्यस्यास्य सर्वस्य नाट्यं भावानुकीर्तनम् ॥१०६॥
क्वचिद्धर्मः क्वचित्क्रीडा क्वचिदर्थः क्वचिच्छमः ।
क्वचिद्धास्यं क्वचिद्युद्धं क्वचित्कामः क्वचिद्वधः ॥१०७॥
धर्मोऽधर्मप्रवृत्तानां कामः कामोपसेविनाम् ।
निग्रहो दुर्विनीतानां विनीतानां दमक्रिया ॥१०८॥
क्लीबानां धार्ष्ट्यकरणमुत्साहः शूरमानिनाम् ।
अबुधानां विबोधश्च वैदुष्यं विदुषामपि ॥१०९॥
ईश्वराणां विलासश्च स्थैर्यं दुःखार्दितस्य च ।
अर्थोपजीविनामर्थो धृतिरुद्विग्नचेतसाम् ॥११०॥
नानाभावोपसंपन्नं नानावस्थान्तरात्मकम् ।
लोकवृत्तानुकरणं नाट्यमेतन्मया कृतम् ॥१११॥

101-103 (B.101b-104a; G 100-102) 104-105 (B 104b-106a; G.103-104) [1] B.विमानां वचनं. 106 (B 106 ; G 105) 107 (B.106b-107a, G.106). 108-109(B. 109b-111a ; G.107-108) B G. धर्मो ऽधर्म-; we with Bh. 110 (B. 111b-112a ; G 109). 111 (B 112b-113a ; G.110)

उत्तमाधममध्यानां नराणां कर्मसंश्रयम् ।
हितोपदेशजननं धृतिक्रीडासुखादिकृत् ॥११२॥
*एतद्रसेषु भावेषु सर्वकर्मक्रियासु च ।
*सर्वोपदेशजननं नाट्यमेतद्भविष्यति ॥११३॥
दुःखार्तानां श्रमार्तानां शोकार्तानां तपस्विनाम् ।
विश्रामजननं लोके नाट्यमेतद्भविष्यति ॥११४॥
धर्म्यं यशस्यमायुष्यं हितं बुद्धिविवर्धनम् ।
लोकोपदेशजननं नाट्यमेतद्भविष्यति ॥११५॥
न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला ।
न स योगो न तत्कर्म नाट्येऽस्मिन् यन्न दृश्यते ॥११६॥
*सर्वशास्त्राणि शिल्पानि कर्माणि विविधानि च ।
*अस्मिन्नाट्ये समेतानि तस्मादेतन्मया कृतम् ॥११७॥
तन्नात्र मन्युः कर्तव्यो भवद्भिरमरान् प्रति ।
सप्तद्वीपानुकरणं नाट्ये ह्यस्मिन् प्रतिष्ठितम्[1] ॥११८॥
वेदविद्येतिहासानामाख्यानपरिकल्पनम् ।
*श्रुतिस्मृतिसदाचारपरिशेषार्थकल्पनम् । ॥११९॥
विनोदजननं लोके नाट्यमेतद् भविष्यति
देवनानामसुराणा[1] राज्ञामथ कुटुम्बिनाम्[2] ॥१२०॥
कृतानुकरणं लोके नाट्यमित्यभिधीयते ।
योऽयं स्वभावो लोकस्य सुखदुःखसमन्वितः ॥१२१॥
सोऽङ्गाद्यभिनयोपेतः नाट्यमित्यभिधीयते ।
एतस्मिन्नन्तरे देवान् सर्वानाह पितामहः ॥१२२॥

112 (B 113b-114a ; G.111) 113 ( B 114b-115a ; G 112 ). 114-115 (B.115b-117a ; G.113-114). 116 ( B 117b-118a ; G 115) 117-118 (B. 118b-120a ; C.116) [1] B reads after this वेदानुकरणं नाट्यमेतत् तवन्मयाकृतम्. 119 ( B 123b-124a ; G.119) 120 ( B 123b, 124b-121 ; G.117) [1] G. देवानामसुराणां च राज्ञां लोकस्य चैव हि. [2] B G. ब्रह्मर्षीणां च विज्ञेयं नाट्यं वृत्तान्तदर्शकम् 121 ( B 121b-122a , G 118 ). 122 (B.122b, 125a ; G, 120).

कुरुध्वमत्रविधिवद् यजनं नाट्यमण्डपे ।
बलिप्रदानैर्होमैश्च मन्त्रौषधिसमन्वितैः ॥१२३॥
जप्यैर्भक्ष्यैश्च पानैश्च बलिः समुपकल्प्यताम् ।
मर्त्यलोकगतः[1] सर्वे शुभां पूजामवाप्स्यथ ॥१२४॥
अपूजयित्वा रङ्गं तु नैव प्रेक्षां प्रवर्तयेत् ।
अपूजयित्वा रङ्गं तु यः प्रेक्षां कल्पयिष्यति ॥१२५॥
तस्य तन्निष्फलं ज्ञानं तिर्यग्योनिं च यास्यति ।
यज्ञेन संमितं ह्येतद् रङ्गदैवतपूजनम् ॥१२६॥
नर्तकोऽर्थपतिर्वापि यः पूजा न करिष्यति ।
न कारयिष्यन्त्यन्यैर्वा प्राप्स्यत्यपचयं तु सः ॥१२७॥
यथाविधि यथादृष्टं यस्तु पूजां करिष्यति ।
स लप्स्यते शुभानर्थान् स्वर्गलोकं च यास्यति ॥१२८॥
एवमुक्त्वा तु भगवान् द्रुहिणः सह दैवतैः ।
रङ्गपूजां कुरुष्वेति मामेवं समचोदयत् ॥१२९॥

इति भारतीये नाट्यशास्त्रे नाट्योत्पत्तिर्नाम प्रथमोऽध्यायः ।

123 (B.125b-126a ; G 121) 124 (B 126b-127a ; G. 122). [1]C. [illegible] पूजामवाप्स्यति. 125 (B 127b-128a; G 123). 126 (B 128b 129a ; G.124). 127 (B 130 ; G 125). 128 (B 131 , G 126) 129 (B 132 ; G,127).

# द्वितीयोऽध्यायः

भरतस्य वचः श्रुत्वा प्रत्यूचुर्मुनयस्ततः ।
भगवञ्छ्रोतुमिच्छामो यजनं रङ्गसंश्रयम् ॥१॥
अथवा याः क्रियास्तत्र लक्षणं यच्च पूजनम् ।
भविष्यद्भिर्नरैः कार्यं कथं तन्नाट्यवेश्मनि ॥२॥
इहादिर्नाट्ययोगस्य कीर्तितो नाट्यमण्डपः ।
तस्मात्तस्यैव तावत् त्वं लक्षणं वक्तुमर्हसि ॥३॥
तेषां तु वचनं श्रुत्वा मुनीना भरतोऽब्रवीत् ।
लक्षणं पूजनं चैव श्रूयतां नाट्यवेश्मनः ॥४॥
दिव्यानां मानसी सृष्टिर्गृहेषूपवनेषु च ।
नराणां यत्नतः कार्या लक्षणाभिहिताः क्रियाः[1] ॥५॥
श्रूयतां तद्यथा यत्र कर्तव्यो नाट्यमण्डपः ।
तस्य वास्तु च पूजा च यथा योज्या प्रयत्नतः ॥६॥
इह प्रेक्षागृहाणां तु धीमता विश्वकर्मणा ।
त्रिविधः सन्निवेशश्च शास्त्रतः परिकल्पितः ॥७॥
विकृष्टश्चतुरस्रश्च त्र्यस्रश्चैव हि मण्डपः ।
तेषां त्रीणि प्रमाणानि ज्येष्ठं मध्यं तथाऽवरम् ॥८॥
प्रमाणमेषां निर्दिष्टं हस्तदण्डसमाश्रयम् ।
शतं चाष्टौ चतुःषष्टिर्द्वात्रिंशच्चेति निश्चितः ॥९॥
अष्टाधिकं शतं ज्येष्ठं चतुःषष्टिस्तु मध्यमम् ।
कनीयस्तु तथा वेश्म हस्ता द्वात्रिंशदिष्यते ॥१०॥

1-2 (B.G *same*) 3 (B G. *same*) 4 (B G *same*) 5-6 (B G *same*).
[1] Bet. the hem. B.G. read भावाभिनिर्वर्त्या. v. l. यत्र भरता विनियमा) सर्वे भावास्तु मानुषाः. 7-8 (B G *same*) 8-10 (B G *same*).

देवानां भवनं ज्येष्ठं नृपाणां मध्यम भवेत् ।
शेषाणां प्रकृतीनां तु कनीयः संविधीयते[1] ॥११॥
प्रमाणं यच्च निर्दिष्टं लक्षणं विश्वकर्मणा ।
प्रेक्षागृहाणां सर्वेषां तच्चैवं हि निबोधत ॥१२॥
अणू रजश्च वालश्च लिक्षा यूका यवस्तथा ।
अङ्गुलं चैव हस्तश्च दण्डश्चैव प्रकीर्तितः ॥१३॥
अणवोऽष्टौ रजः प्रोक्तं तान्यष्टौ वाल उच्यते ।
वालास्त्वष्टौ भवेल्लिक्षा यूका लिक्षाष्टकं भवेत् ॥१४॥
यूकास्त्वष्टौ यवो ज्ञेय. यवास्त्वष्टौ तथाङ्गुलम् ।
अङ्गुलानि तथा हस्तश्चतुर्विंशतिरुच्यते ॥१५॥
चतुर्हस्तो भवेद्दण्डो निर्दिष्टस्तु प्रमाणतः ।
अनेनैव प्रमाणेन वक्ष्याम्येषां विनिर्णयम् ॥१६॥
चतुःषष्टिं करान् कुर्याद् दीर्घत्वेन तु मण्डपम् ।
द्वात्रिंशतं च विस्तारं मर्त्यानां योजयेदिह ॥१७।
अत ऊर्ध्वं न कर्तव्य कर्तृभिर्नाट्यमण्डपः ।
यस्मादव्यक्तभावं हि तत्र नाट्यं व्रजेदिति ॥१८।
मण्डपे विप्रकृष्टे तु पाठ्यमुच्चरितस्वरम् ।
अनिःसरणधर्मत्वाद्[1] विस्वरत्वं भृशं व्रजेत् ॥१९॥
यश्चाप्यास्यगतो[1] रागो भावदृष्टिसमाश्रय ।
स[2] वेश्मन प्रकृष्टत्वाद् व्रजेदव्यक्ततां पराम् ॥२०॥
प्रेक्षागृहाणा सर्वेषां तस्मान्मध्यममिष्यते ।
यस्मात्पाठ्य च गेय च सुखं श्रव्यतरं भवेत् ॥२१॥

11-16 (B 11-15-19; G *same*) [1] B repeats here 21 and two other couplets, see note 1 on 21 below. 17 (B 20; G. *same*) 18-19 (B. 21-22; G *same*) [1] C. घननिःसरणधर्मत्वात् 20 (B 23; G.20) [1] B ṭh, ch. यश्चाप्याश्रयतो रागो (रागो) भावदृष्टि (दृष्टि) समाश्रय, B G. -गतो भावो नानादृष्टिसमाश्रयः [2] B n. स तु वेश्म, B ch. स च वेश्म 21 (B 24; G 21); [1] B G read after this प्रेक्षागृहाणां सर्वेषां त्रिप्रकारो विधिः कृतः । विकृष्टश्चतुरश्रश्च त्र्यश्रश्चैव प्रयोक्तृभिः ॥ कनीयस्तु कृतं यच्च चतुरश्रं च मध्यमम् । ज्येष्ठं विकृष्टं विज्ञेयं नाट्यवेश्म (वेद) प्रयोक्तृभिः. See also note 1 on 11-16 above.

देवानां मानसी सृष्टिर्गृहेपूपवनेषु च ।
यत्नभावाद् विनिष्पन्नाः सर्वे भावा हि मानुषाः ॥२२॥
तस्माद्देवकृतैर्भावैर्न विस्पर्धेत मानुषः ।
मानुषस्य[1] तु गेहस्य संप्रवक्ष्यामि लक्षणम् ॥२३॥
भूमेर्विभागं पूर्वं तु परीक्षेत [1]विचक्षणः ।
ततो वास्तुप्रमाणं च प्रारभेत [2]शुभेच्छया ॥२४॥
समा स्थिरा च कठिना कृष्णाऽगौरी च या भवेत् ।
भूमिस्तत्र तु कर्तव्यः कर्तृभिर्नाट्यमण्डपः ॥२५॥
प्रथमं शोधनं कृत्वा लाङ्गलेन समुत्कृषेत् ।
अस्थिकीलकपालानि तृणगुल्मांश्च शोधयेत् ॥२६॥
शोधयित्वा वसुमतीं प्रमाणं निर्दिशेत्ततः ।
पुष्यनक्षत्रयोगे तु शुक्लं सूत्रं प्रसारयेत्[1] ॥२७॥
कार्पासं [2]बाल्वजं चापि वाल्कलं मौञ्जमेव च ।
सूत्रं बुधैस्तु कर्तव्यं यस्य च्छेदो न विद्यते ॥२८॥
अर्धच्छिन्ने भवेत् सूत्रे स्वामिनो मरणं ध्रुवम् ।
त्रिभागच्छिन्नया रज्वा राष्ट्रकोपो विधीयते ॥२९॥
छिन्नायां तु चतुर्भागे प्रयोक्तुर्नाश उच्यते ।
हस्तप्रभ्रष्टया वापि कश्चित्त्वपचयो भवेत् ॥३०॥
तस्मान्नित्यं प्रयत्नेन रज्जुग्रहणमिष्यते ।
कार्यं चैव प्रयत्नेन मानं नाट्यगृहस्य तु ॥३१॥
*मुहूर्तेनानुकूलेन तिथ्या च करणेन च ।
ब्राह्मणांस्तर्पयित्वा तु पुण्याहं वाचयेत्ततः ॥३२॥

22-23 (B. 27-28 ; G. 24-25) C. मनुष्यस्य. 24 (B. 29 ; G. 26) [1] B. प्रयोगज्ञ, [2] B. यदृच्छया. 25 (B. 30 ; G.27) 26 (B. 31, G 28) ; 27a (B 32a, G 29a). 27-28 (B. 33b-31abis; G 30b-31a) B G. add the following : विष्कम्भापि कौम्भ च विशाखापि च रेवती । हस्तस्तिष्यानुराधाश्च प्रशस्ता नाट्यकर्मणि. [2] C. वाल्वज 28-31 (B. 34b-37 ; G. 31b-34) 32-33 (B. 35-36a, G. 35) [1] G om. 33a

शान्तितोयं ततो दत्वा तत्र सूत्रं प्रसारयेत् ।
चतुःषष्टिकरान् कृत्वा [1]द्विधा कुर्यात् पुनश्च तान् ॥३३॥
पृष्ठतो यो भवेद्भागो द्विधा भूतस्य तस्य तु ।
सममर्धविभागेन रङ्गशीर्षं प्रकल्पयेत् ॥३४॥
पश्चिमे [1]तु पुनर्भागे नेपथ्यगृहमादिशेत् ।
विभज्य भागान् विधिवद्यथावदनुपूर्वशः ॥३५॥
शुभे नक्षत्रयोगे तु मण्डपस्य निवेशनम् ।
शङ्खदुन्दुभिनिर्घोषैर्मृदङ्गपणवादिभिः ॥३६॥
सर्वातोद्यनिनादैश्च[1] स्थापनं कार्यमेव च ।
उत्सार्याणि त्वनिष्टानि [2]पाषण्डाश्रमिणस्तथा ॥३७॥
काषायवसनाश्चैव विकलाश्चैव ये नराः ।
निशायां च बलिः कार्यो नानाभोजनसंयुतः ॥३८॥
गन्धपुष्पफलोपेतो दिशो दश समाश्रितः ।
पूर्वेण शुक्लान्नयुतो नीलः स्याद् दक्षिणेन च ॥३९॥
पश्चिमेन बलिः पीतो रक्तश्चैवोत्तरेण तु ।
यस्यां[1] यथाधिदैवं तु दिशि सम्परिकीर्तितम् ॥४०॥
तादृशस्तत्र दातव्यो बलिर्मन्त्रपुरस्कृतः ।
स्थापने ब्राह्मणेभ्यश्च दातव्यं घृतपायसम् ॥४१॥
मधुपर्कस्तथा राज्ञे कर्तृभ्यश्च गुडौदनम् ।
नक्षत्रेण तु कर्तव्यं मूलेन स्थापनं बुधैः ॥४२॥
मुहूर्तेनानुकूलेन तिथ्या सुकरणेन च ।
एवं तु स्थापनं कृत्वा भित्तिकर्म प्रयोजयेत् ॥४३॥

33-35 ( B. 36b-38a ; G 36-37 ) [1] B. तत. [2] B. द्विधाभूतस्य तस्य तु.

35-37 ( B. 38b-40a ; G. 38-39 ) [1] B. च विभागेषु.

37-38 ( B 40b-41a ; G 40 ) [1] B सर्वातोद्यैः प्रहृष्टैः. [2] G. पाषण्डाश्रमिकः ; B. पाषण्डाश्रमिण : G g -वसन. 38-39 ( B 41b-42a ; G. 41 ) 39-40 ( B. 42b-40a ; G 42-43) 41-42 ( B 44b-45a , G, 44 ) [1] B. यादृश दिशि यस्यां तु दैवत परिकल्पितम्. 42-43 ( B. 45b-46a ; G. 45 ).

भित्तिकर्मणि निर्वृत्ते स्तम्भानां स्थापनं तत ।
तिथिनक्षत्रयोगेन शुभेन करणेन तु ॥४४॥
स्तम्भानां स्थापनं कार्यं रोहिण्या श्रवणेन वा ।
आचार्येण सुयुक्तेन त्रिरात्रोपोषितेन च ॥४५॥
स्तम्भानां स्थापनं कार्यं प्राप्ते सूर्योदये शुभे[1] ।
प्रथमे ब्राह्मणस्तम्भे सर्पि सर्षपसंस्कृतः ॥४६॥
सर्वशुक्लो विधि॰ कार्यो दद्यान् पायसमेव तु ।
ततश्च क्षत्रियस्तम्भे वस्त्रामाल्यानुलेपनम् ॥४७॥
सर्वं रक्तं प्रदातव्यं द्विजेभ्यश्च गुडौदनम् ।
वैश्यस्तम्भे विधिः कार्यो दिग्भागे पश्चिमोत्तरे ॥४८॥
सर्वं पीतं प्रदातव्य द्विजेभ्यश्च घृतौदनम् ।
शूद्रस्तम्भे विधिः कार्यः सम्यक् पूर्वोत्तराश्रये ॥४९॥
नीलप्राय प्रदातव्य कृसरं च द्विजाशनम् ।
पूर्वे तु ब्राह्मणस्तम्भे शुक्लमाल्यानुलेपने ॥५०॥
निक्षिपेन् कनकं मूले कर्णाभरणसश्रयम् ।
ताम्रं चाघ. प्रदातव्यं स्तम्भे क्षत्रियसज्ञके ॥५१॥
वैश्यस्तम्भस्य मूले तु रजत संप्रदापयेत् ।
शूद्रस्तम्भस्य मूले तु दद्यादायसमेव च ॥५२॥
शेषेष्वपि च [1]निक्षेप्यं स्तम्भमूलेषु काञ्चनम् ।
स्वस्तिपुण्याहघोषेण जयशब्देन चैव हि ॥५३॥
स्तम्भानां स्थापनं कार्यं [1]पर्णमालापुरस्कृतम् ।
रत्नदानैः सगोदानैर्वस्त्रदानैरनल्पकैः ॥५४॥
ब्राह्मणांस्तर्पयित्वा तु स्तम्भमुत्थापयेत् ततः ।
अचलं [2]चाप्यकम्पं च तथैवावलितं पुनः ॥५५॥

43-46 (B. 46b-52a ; G 46-48 ). 46-50 (B. 52b-56a ; G. 50) [1] G and Bkh. add चन्दन तु भवेद ब्राह्म पार्श्वे स्व दिग्मितं च। चत्वारि वैश्यस्य माच्छन्द सर्वद्रमे कृतम्
50-53 ( B.53b-56a ; G.54-56 ) [1] B. निक्षिप्त 53-55 ( B 56b 58a ; G. 57-59a) [1] B. पुष्पमाला. [2] B. चकम्पा .

स्तम्भस्योत्थापने सम्यग् दोषा ह्येते प्रकीर्तिताः ।
अवृष्टिरुक्ता चलने वलने [1]मृत्युतो भयम् ॥५६॥
कम्पने परचक्रात् तु भयं वदति दारुणम् ।
दोषैरेतैर्विहीनं तु स्तम्भमुत्थापयेच्छिवम् ॥५७॥
पवित्रे ब्राह्मणस्तम्भे दातव्या दक्षिणा च गौः[2] ।
शेषाणां स्थापने कार्यं भोजनं कर्तृमंत्रयम् ॥५८॥
मन्त्रपूतं[3] च तद्देयं नाट्याचार्येण धीमता ।
पुरोहितं नृपं चैव भोजयेन् मधुपायसम् ॥५९॥
कर्तृनपि तथा सर्वान् कृसरं लवणोत्तरम् ।
सर्वमेवं विधिं कृत्वा सर्वातोद्यैः प्रवादितैः ॥६०॥
अभिमन्त्र्य यथान्यायं स्तम्भमुत्थापयेच्छुचिः ।
यथाचलो गिरिर्मेरुर्हिमवांश्च [1]यथाचलः ॥६१॥
जयावहो नरेन्द्रस्य तथा त्वमचलो भव ।
स्तम्भद्वारं च भित्तिं च नेपथ्यगृहमेव च ॥६२॥
एवमुत्थापयेत् तज्ज्ञो विधिदृष्टेन कर्मणा ।
रङ्गपीठस्य पार्श्वे तु कर्तव्या मत्तवारणी ॥६३॥
चतुःस्तम्भसमायुक्ता रङ्गपीठप्रमाणतः ।
अध्यर्धहस्तोत्सेधेन कर्तव्या मत्तवारणी ॥६४॥
उत्सेधेन तयोस्तुल्यं कर्तव्यं रङ्गमण्टपम् ।
तस्यां माल्यं च [1]धूपं च गन्धं वस्त्रं तथैव च ॥६५॥
नानावर्णानि देयानि तथा भूतप्रियो बलिः ।
[2]पायसं तत्र दातव्यं स्तम्भानां [3]कुश[लाय तु] ॥६६॥
भोजने [4]कृसरं चैव दातव्यं ब्राह्मणाशनम् ।

56 57 (B.59-60 ; G 59b-61a) [1] B चलितम् [2] C. मङ्गलौ. 58-60 (B 61-63a ; G 61b-63) [1] B मन्त्रपूतं 60-63 ( B 63b-66a ; G. 64-66 ) [1] B.C. यथा च, we with Bn 63-65 (B 66b-68a; G 67-68) 65-67 ( B. 68b-70a ; G. 69b-71a) [1] C. च गन्धं च वस्त्रं च स्थापनम्. [2] B C. च दत्त, see Bth [3] mss. कुशलेच्छया. [4] B. कृसरं.

एवं विधिपुरस्कारैः कर्तव्या मत्तवारणी ॥६७॥
रङ्गपीठं ततः कार्यं विधिदृष्टेन कर्मणा ।
रङ्गशीर्षं तु कर्तव्यं षड्दारुकसमन्वितम् ॥६८॥
कार्यं द्वारद्वयं चात्र नेपथ्यगृहकस्य तु ।
पूरणे मृत्तिका चात्र कृष्णा देया प्रयत्नतः ॥६९॥
लाङ्गलेन समुत्कृष्य [1]निर्लोष्टतृणशर्करा ।
लाङ्गले शुद्धवर्णौ तु धुर्यौ योज्यौ प्रयत्नतः ॥७०॥
कर्तारः पुरुषाश्चात्र येऽङ्गदोषविवर्जिताः ।
अहीनाङ्गैश्च वोढव्या मृत्तिका पीठकैर्नवैः ॥७१॥
एवंविधैश्च[1] कर्तव्य रङ्गशीर्षं प्रयत्नतः ।
कूर्मपृष्ठं न कर्तव्यं मत्स्यपृष्ठं तथैव च ॥७२॥
शुद्धादर्शतलाकारं [2]रङ्गपीठं प्रशस्यते ।
रत्नानि चात्र देयानि पूर्वं वज्रं विचक्षणैः ॥७३॥
वैदूर्यं[3] दक्षिणे चैव स्फटिकं पश्चिमे तथा ।
प्रवालमुत्तरे चैव मध्ये तु कनकं भवेत् ॥७४॥
एवं रङ्गशिरः कृत्वा दारुकर्म प्रवर्तयेत् ।
ऊहप्रत्यूहसंयुक्तं नानाशिल्पप्रयोजितम् ॥७५॥
नानासञ्जवनोपेतं बहुव्यालोपशोभितम् ।
भवेयुश्चात्र[1] विन्यस्ता विविधाः सालभञ्जिकाः ॥७६॥
निर्व्यूहकुहरोपेतं[2] नानाग्रथितवेदिकम् ।
नानाविन्याससंयुक्तं चित्रजालगवाक्षकम् ॥७७॥
सुपीठधारणीयुक्तं कपोतालीसमाकुलम् ।
नानाकुट्टिमविन्यस्तैः स्तम्भैश्चाप्युपशोभितम् ॥७८॥
एवं काष्ठविधिं कृत्वा भित्तिकर्म प्रवर्तयेत् ।
स्तम्भं वा नागदन्तं वा वातायनमथापि वा ॥७९॥

68-71 ( B. 71-74 ; G. 71b-75a ) [1] B. -तृणकर्कराम्. 72-74 ( B. 75-77, G. 75b 78a) [1] B. एवं विधं प्रकर्तव्यं. [2] B °ङ्गशीर्षे [3] B. वैडूर्यं 75-80 (B. 78-81a G. 78b-83a ). [1] C. शालभञ्जिकाभिश्च समन्तात् समलङ्कृतम्. [2] B. निर्व्यूह.

कोणं वा सप्रतिद्वारं द्वारविद्धं न कारयेत् ।
कार्यः शैलगुहाकारो द्विभूमिर्नाट्यमण्डपः ॥८०॥
मन्दवातायनोपेतो निर्वातो धीरशब्दभाक् ।
तस्मान्निवात कर्तव्यः कर्तृभिर्नाट्यमण्डपः ॥८१॥
गम्भीरस्वरता[1] येन कुतपस्य भविष्यति ।
भित्तिकर्मविधिं कृत्वा भित्तिलेपं प्रदापयेत् ॥८२॥
सुधाकर्म तथैवास्य कुर्याद् बाह्यं प्रयत्नत ।
भित्तिष्वथ च लिप्तासु परिमृष्टासु सर्वत ॥८३॥
समासु जातशोभासु चित्रकर्म प्रवर्तयेत् ।
चित्रकर्मणि चालेख्या पुरुषाः स्त्रीजनास्तथा ॥८४॥
लतावन्धाश्च कर्तव्याश्चरितं आत्मभोगजम् ।
एवं विकृष्टं कर्तव्यं नाट्यवेश्म प्रयोक्तृभिः ॥८५॥

[1]अतः परं प्रवक्ष्यामि चतुरस्रस्य लक्षणम् ।
समन्ततस्तु कर्तव्या हस्ता द्वात्रिंशदेव तु ॥८६॥
शुभभूमिविभागस्थो नाट्यज्ञैर्नाट्यमण्डप. ।
यो विधिः पूर्वमुक्तस्तु लक्षणं मङ्गलानि च ॥८७॥
[2]चतुरस्रस्य तान्येव कारयेन्नाट्यवेश्मनः ।
चतुरस्र समं कृत्वा सूत्रेण प्रविभज्य च ॥८८॥
बाह्यतः सर्वतः कार्या भित्तिः श्लिष्टेष्टका दृढा ।
तत्राभ्यन्तरतः कार्या [3]रङ्गपीठे यथादिशम् ॥८९॥
दश प्रयोक्तृभि. स्तम्भा. शक्ता मण्डपधारणे ।
स्तम्भानां [4]बाह्यतः श्चापि सोपानाकृति पीठकम् ॥९०॥

81 82 ( B 84b-86a ; G 84-85) [1] After B 87, repeats 19. 82-85 (B. 87b-90 ; G 86b-89a) [1] न कोणं समस्तं च कुतपस्य भविष्यति. 86-92 ( B 90 96a ; G. 89b-95 ) [1] पुनरेवहि [2] B. विकृष्टे तु यान्येव चतुरस्रेऽपि कारयेत्. [3] B. रङ्गपीठोपरिस्थितम् [4] C. बाह्यतः स्थम्भ.

इष्टकादारुभिः कार्यं प्रेक्षकाणां निवेशनम् ।
हस्तप्रमाणैरुत्सेधैर्भूमिभागसमुत्थितैः ॥९१॥
रङ्गपीठावलोक्यं च कुर्यादासनजं विधिम् ।
षडन्यान् अन्तरे चैव पुनः स्तम्भान् यथादिशम् ॥९२॥
विधिना स्थापयेत् तज्ज्ञो दृढान् मण्डपधारणे ।
अष्टौ स्तम्भान् पुनश्चैव तेषामुपरि कल्पयेत् ॥९३॥
संस्थाप्यं[1] च पुनः पीठमष्टहस्तप्रमाणतः ।
तत्र स्तम्भाः प्रदातव्यास्तज्ज्ञैर्मण्डपधारणे ॥९४॥
धारणीधारितास्ते[2] च शालस्त्रीभिरलङ्कृता ।
नैपथ्यगृहकं चैव ततः कार्यं [3]प्रयोक्तृभिः ॥९५॥
द्वारं चैकं भवेत् [4]तस्य रङ्गपीठप्रवेशने[5] ।
जनप्रवेशनं [6]चैवमाभिमुख्येन कारयेत् ॥९६॥
रङ्गस्याभिमुखं कार्यं द्वितीयं द्वारमेव तु ।
अष्टहस्तं तु कर्तव्यं रङ्गपीठं प्रमाणतः ॥९७॥
चतुरस्रं समतलं वेदिकासमलंकृतम् ।
पूर्वप्रमाणनिर्दिष्टा कर्तव्या मत्तवारणी ॥९८॥
चतुःस्तम्भसमायुक्ता वेदिकायास्तु पार्श्वतः ।
समुन्नतं समं चैव [7]रङ्गपीठं तु कारयेत् ॥९९॥
विकृष्टे[8] तून्नतं कार्यं चतुरस्रे समं तथा ।
एवमेतेन विधिना चतुरस्रं गृहं भवेत् ॥१००॥
त्र्यस्रस्य[1] मण्डपस्यापि संप्रवक्ष्यामि लक्षणम् ।
त्र्यस्रं त्रिकोणं कर्तव्यं नाट्यवेश्म प्रयोक्तृभिः ॥१०१॥
मध्ये त्रिकोणमेवास्य रङ्गपीठं तु कारयेत् ।
द्वारमेकेन[2] कोणेन कर्तव्यं तु प्रवेशने ॥१०२॥

92-100 ( B. 97b-105a ; C 96-104a ) [1] B. विष्टाष्टमष्टहस्तं च पीठं तेषु ततो न्यसेत् [2] B. धारणीधारणा. [3] B प्रयतन. [4] B तद [5] B प्रवेशन. [6] B. चाभ्यदाभि- [7] B रङ्गपीठे. [8] C विकृष्टेष्टून्नत 101-104 (B 104-111 ; G 104b-108) [1] B. अत परं प्रवक्ष्यामि त्र्यस्रस्येह तु लक्षणम् [2] B द्वारं तेनैव.

द्वितीयं चैव कर्तव्यं रङ्गपीठस्य पृष्ठतः ।
विधिर्यश्चतुरस्रस्य भित्तिस्तम्भसमाश्रयः ॥१०३॥
स तु सर्वः प्रयोक्तव्य त्र्यस्रस्यापि प्रयोक्तृभिः ।
एवमेनेन विधिना कार्यं नाट्यगृहं बुधैः ॥१०४॥
अत ऊर्ध्वं प्रवक्ष्यामि [1]पूजामेषां यथाविधि ।
इति भारतीये नाट्यशास्त्रे प्रेक्षागृहलक्षणं नाम द्वितीयोऽध्यायः ।

[1] B. पूजाधि°.

# तृतीयोऽध्यायः

सर्वलक्षणसम्पन्ने कृते नाट्यगृहे शुभे ।
गावो वसेयुः सप्ताहं सह जप्यपरैर्द्विजैः ॥१॥
ततोऽधिवासयेद् वेश्म रङ्गपीठं तथैव च ।
मन्त्रपूतेन तोयेन प्रोक्षिताङ्गो निशागमे ॥२॥
यथास्थानान्तरगतो दीक्षितः प्रयतः शुचिः ।
त्रिरात्रोपोषितो भूत्वा[1] नाट्याचार्योऽहताम्बरः ॥३॥
नमस्कृत्य महादेवं सर्वलोकेश्वरं भवम् ।
पद्मयोनिं सुरगुरुं विष्णुमिन्द्रं गुहं तथा ॥४॥
सरस्वतीं च लक्ष्मीं च सिद्धिं मेधां स्मृतिं मतिम् ।
सोमं सूर्यं च मरुतो लोकपालांस्तथाश्विनौ ॥५॥
मित्रमग्निं सुरान् रुद्रान् वर्णान् कालं कलिं तथा ।
मृत्युं च नियतिं चैव कालदण्डं तथैव च ॥६॥
विष्णुप्रहरणं चैव नागराजं च वासुकिम् ।
वज्रविद्युत्समुद्रांश्च गन्धर्वाप्सरसो मुनीन् ॥७॥
*तथा नाट्यकुमारीश्च[3] महाग्रामण्यमेव च ।*
यक्षांश्च गुह्यकांश्चैव भूतसंघांस्तथैव च[1] ॥८॥
एतांश्चान्यांश्च [1]देवर्षीन् [2]प्रणिपत्य कृताञ्जलिः ।
यथास्थानस्थितान् देवान् निमन्त्र्यैतद्वचो वदेत् ॥९॥
[3]भवद्भिर्नो निशायां तु कर्तव्यः संपरिग्रहः ।
साहाय्यं चैव दातव्यमस्मिन्नाट्ये सहानुगैः ॥१०॥

1-8 (B.1-7, 9 ; G. 1-7, 9) [1] B. नायकोऽहतवस्त्रक्. [2] C. सेन्दु. [3] Bth तथा नाट्याधिदेवताः. B. G. read before. 9 भूतान् पिशाचान् यक्षांश्च गुह्यकांश्च महोरगान्। असुरान् नाट्यविघ्नांश्च तथान्यान्; दैवतगणान्. 9-10 (B. 10-11 ; G.10-11) [1] राजर्षीन्. [2] B. प्रणम्य रचिताञ्जलि ; [3] B. भवद्भिः निशायां न .

संपूज्य[1] देवताः सर्वाः कुतपं [2]संप्रपूज्य च ।
जर्जराय प्रयुञ्जीत पूजां नाट्यप्रसिद्धये ॥११॥
त्वं महेन्द्रप्रहरणं सर्वदानवसूदनम् ।
निर्मितं सर्वदेवैश्च [3]सर्वविघ्ननिबर्हणम् ॥१२॥
नृपस्य[4] विजयं शंस रिपूणां च पराजयम् ।
गोब्राह्मणशिवं[5] चैव नाट्यस्य च विवर्धनम् ॥१३॥
एवं कृत्वा यथान्यायमुपेन्द्रा[1] नाट्यमण्डपे ।
निशायां च प्रभातायां पूजनं प्रक्रमेद् [2]इह ॥१४॥
आर्द्रया वा मघाया वा याम्ये पूर्वेषु वा त्रिषु ।
आश्लेषामूलयोर्वापि कर्तव्यं रङ्गपूजनम् ॥१५॥
आचार्येण सुयुक्तेन शुचिना दीक्षितेन च ।
रङ्गस्योद्योतनं कार्यं देवतानां च पूजनम् ॥१६॥
दिनान्ते दारुणे घोरे मुहूर्ते भूतदैवते ।
आचम्य च यथान्यायं देवतानि निवेशयेत् ॥१७॥
रक्ताः प्रतिसरास्तत्र रक्तगन्धाश्च पूजिताः ।
रक्ता सुमनसश्चैव यच्च रक्तं फलं भवेत् ॥१८॥
यवैः सिद्धार्थकैर्लाजैरक्षतैः शालितण्डुलैः[1]
नागपुष्पस्य [2]चूर्णेन वितुषाभिः प्रियङ्गुभिः ॥१९॥
एतैर्द्रव्यैर्युतं कार्यं देवतानां निवेशनम् ।
आलिखेन् मण्डलं पूर्वं यथास्थानं यथाविधि ॥२०॥
समन्ततस्तु कर्तव्या हस्ताः षोडश [1]मण्डले ।
द्वाराणि चात्र कुर्वीत विधिना च चतुर्दिशम् ॥२१॥

11-13 (B. 12-14; G 12-14). [1] Bh देवताः सर्वाः, B.G. सर्वान् एवम्. [2] B.G. सम्पूज्य. [3] C. सर्वविघ्नविनाशनम्. [4] C. नृपस्य. [5] C. देहि. [6] C. -ब्राह्मणहितं
14-15 (B G 15-16, G 15-16) [1] B. उपवासा. [2] C. तत्र 16 (B. 17; G.17). 17 (B 18; G.18). 18-20 (B.19-21a, G 19-21a). 20b (B 21b; G.21b 21 (B 22; G 22) [1] B. मण्डपे, C मण्डले.

मध्ये चैवात्र कर्तव्ये द्वे रेखे तिर्यगूर्ध्वगे ।
तयोः कक्ष्याविभागेन दैवतानि निवेशयेत् ॥२२॥
पद्मोपविष्टं ब्रह्माणं [1]तस्य मध्ये निवेशयेत् ।
आदौ निवेश्यो भगवान् सार्धं भूतगणैर्भव.[2] ॥२३॥
नारायणो महेन्द्रश्च [3]स्कन्दार्कावश्विनौ शशी ।
सरस्वती च लक्ष्मीश्च श्रद्धा मेधा च पूर्वतः ॥२४॥
पूर्वदक्षिणतो वह्निर्निवेश्यः स्वाहया सह ।
विश्वेदेवाश्च गन्धर्वा रुद्राश्च ऋषयस्तथा ॥२५॥
दक्षिणेन निवेश्यस्तु यमो मित्रस्तु सानुगः ।
पितॄन् पिशाचानुरगान् गुह्यकांश्च निवेशयेत् ॥२६॥
नैर्ऋत्यां राक्षसांश्चैव सर्वभूतान्निवेशयेत् ।
पश्चिमायां समुद्रांश्च वरुणं यादसां पतिम् ॥२७॥
वायव्यां वै दिशि तथा सप्तवायून् निवेशयेत् ।
[4]निवेशयेच्च तत्रैव गरुडं पक्षिभिः सह ॥२८॥
उत्तरस्यां दिशि तथा धनदं सन्निवेशयेत् ।
नाट्यस्य मातॄश्च तथा [6]यक्षानथ सगुह्यकान् ॥२९॥
तथैवोत्तरपूर्वायां नन्दिनं च गणेश्वरान् ।
ब्रह्मर्षिभूतसंघाश्च यथाभाग निवेशयेत् ॥३०॥
स्तम्भे सनत्कुमारं तु दक्षिणे दक्षमेव च ।
ग्रामण्यं चोत्तरे स्तम्भे पश्चिमे स्कन्दमेव च ॥३१॥
अनेनैव विधानेन यथास्थानं यथाविधि ।
[1]वर्णरूपान्विताः सर्वा देवताः सन्निवेशयेत् ॥३२॥
स्थाने स्थाने यथान्यायं विनिवेश्य तु देवताः ।
प्रकुर्वीत ततस्तासां पूजनं तु यथार्हतः ॥३३॥

22 (B 23 ; G.23). 23-30 (B 24-31 ; G 24-31) [1] C. रङ्गमध्ये. [2] C. शिव. [3] B. स्कन्द सूर्यौ. [4] B तत्रैव विनिवेशयेत् गरुड. [5] C कुबेरं च सर्वैर्गुह्यकैः सह. [6] C. यक्षानथ सहानुगान्. 31 (B 32 ; G.32) 32 (B 33 ; G. 33) [1] B. वर्णवादानि. 33 (B.34 ; G.34).

देवतेभ्यस्तु दातव्यं सितं माल्यानुलेपनम् ।
वह्निगन्धर्वसूर्येभ्यो रक्तमाल्यानुलेपनम् ॥३४॥
गन्धं माल्यं च धूपं च यथावदनुपूर्वशः ।
दत्वा ततः प्रकुर्वीत बलिं पूजां यथाविधि ।३५॥
द्रुहिणं मधुपर्केण पायसेन सरस्वतीम् ।
शिवविष्णुमहेन्द्राद्याः सपूज्या मोदकैरथ ॥३६॥
घृतौदनेन वह्निश्च सोमार्कौ तु गुडौदनैः ।
विश्वेदेवाः सगन्धर्वा मुनयो मधुपायसैः ॥३७॥
यममित्रौ समभ्यर्च्यौ अपूपैर्मोदकैस्तथा ।
पितॄन् पिशाचानुरगान् सर्पिःक्षीरेण तर्पयेत् ॥३८॥
पक्वामकेन मांसेन सुरासीधुफलासवैः ।
अर्चयेद् भूतसङ्घांश्च चणकैः पयसाप्लुतैः ॥३९॥
अनेनैव विधानेन संपूज्या मत्तवारणी ।
पक्वामकेन मांसेन सपूज्या रक्षसा गणाः ॥४०॥
सुरामांसप्रदानेन दानवान् प्रतिपूजयेत् ।
शेषान् देवगणान् प्राज्ञः सापूपोत्कारिकौदनैः ॥४१॥
मत्स्यैश्च पिष्टभक्ष्यैश्च सागरान् सरितस्तथा ।
अभ्यर्च्य वरुणश्चापि दातव्यो घृतपायसः ॥४२॥
नानामूलफलैश्चैव मुनीन् संप्रतिपूजयेत् ।
वायूंश्च पक्षिणश्चैव विविधैः भक्ष्यभोजनैः ॥४३॥
नाट्यस्य च तथा मातॄर्धनदं च सहानुगैः ।
अपूपैः [1]लोचिताभिस्तैर्भक्ष्यभोज्यैः प्रयत्नतः ॥४४॥
एवमेषां बलिः कार्यो नानाभोजनसंश्रयः ।
पुनर्मन्त्रविधानेन बलिकर्म प्रवक्ष्यते ॥४५॥

36-39 (B 37-40 ; G 37-40) 40-44 (B 41-45 ; G 41-45) [1] Gp.-लोचितामिके, Gg. लोचितामिके. 45 (B 46 ; G 46)

देवदेव महाभाग पद्मयोने पितामह।
मन्त्रपूतमिमं सर्वं बलिं देव गृहाण नः ॥४६॥
देवदेव महादेव गणेश त्रिपुरान्तक।
प्रगृह्यतां बलिर्देव मन्त्रपूतो मयोद्यतः ॥४७॥
नारायणामितगते पद्मनाभ सुरोत्तम।
प्रगृह्यतां बलिर्देव मन्त्रसंस्कारसंस्कृतः ॥४८॥
पुरन्दरामरपते वज्रपाणे शतक्रतो।
प्रगृह्यतां बलिर्देव बलिमन्त्रपुरस्कृतः ॥४९॥
देवसेनापते स्कन्द भगवन् शङ्करप्रिय।
बलि· प्रीतेन मनसा षण्मुख प्रतिगृह्यताम् ॥५०॥
देवदेवि महाभागे सरस्वति हरिप्रिये।
प्रगृह्यतां बलिर्मातर्मया भक्त्या समर्पितः ॥५१॥
लक्ष्मीः सिद्धिर्मतिर्मेधा सर्वलोकनमस्कृताः।
मन्त्रपूतमिमं देव्यः प्रतिगृह्णन्तु मे बलिम् ॥५२॥
सर्वभूतानुभावज्ञ लोकजीवन मारुत।
प्रगृह्यतां बलिर्देव मन्त्रपूतो मयोद्यतः ॥५३॥
नानानिमित्तसंभूताः पौलस्त्याः सर्व एव तु।
राक्षसेन्द्रा महासत्त्वाः प्रतिगृह्णन्त्विमं बलिम् ॥५४॥
देववक्त्र सुरश्रेष्ठ धूमकेतो हुताशन।
भक्त्या समुद्यतो देव बलि· सम्प्रतिगृह्यताम् ॥५५॥
सर्वग्रहाणां प्रवर तेजोराशे दिवाकर।
भक्त्या मयोद्यतो देव बलिः सम्प्रतिगृह्यताम् ॥५६॥

46 (B.47 ; G.47) 47 (B.51 ; G.48) 48 (B,50 ; G 49). [1] B. reads after this देवदेव महादेव गणेश त्रिपुरान्तक। प्रगृह्यतां बलिर्देव मन्त्रपूतो मयोद्यत । देवदेव महायोगिन् देवदेव सुरोत्तम। गृह्यताम् बलि देव रव विधान मयोद्यितान् (B.51-52). 49 (B 48 ; G 50) 50 (B 49 ; G.51) 52 (B, 53 ; G,52) 52 (B 55 ; G 53) 53 (B 56 ; G.54) 54 (B.54 , G 55) 55 (B 57 ; G.56) 56 (B.58 ; G 57).

सर्वग्रहपते सोम द्विजराज जगत्प्रिय ।
प्रगृह्यतामेष बलिर्मन्त्रपूतो मयोद्यतः ॥५७॥
महागणेश्वराः सर्वे नन्दीश्वरपुरोगमाः ।
प्रतिगृह्णन्त्विमं भक्त्या बलिं सम्यङ्मयोद्यतम् ॥५८॥
नमः पितृभ्यः सर्वेभ्य. प्रतिगृह्णन्त्विमं बलिम् ।
भूतेभ्यश्च नमो नित्यं तेषामेष बलिः प्रियः ॥५९॥
कामपाल नमो नित्यं यस्यायं ते बलिः कृतः ।
नारदस्तुम्बुरुश्चैव विश्वावसुपुरोगमाः ॥६०॥
प्रतिगृह्णन्तु मे सर्वे गन्धर्वा बलिमुद्यतम् ।
यमो मित्रश्च भगवान् ईश्वरौ लोकपूजितौ ॥६१॥
इमं मे प्रतिगृह्णीतां बलिं मन्त्रपुरस्कृतम् ।
रसातलचरेभ्यस्तु पन्नगेभ्यो नमो नमः ॥६२॥
दिशन्तु सिद्धिं नाट्यस्य पूजिता पवनाशनाः ।
सर्वाम्भसां पतिर्देवो वरुणो हंसवाहन ॥६३॥
पूजितः प्रीतिमानस्तु ससमुद्रनदीनदः ।
वैनतेय महासत्त्व सर्वपक्षिपते प्रभो ॥६४॥
प्रगृह्यतां बलिर्देव मन्त्रपूतो मयोद्यतः ।
धनाध्यक्षो यक्षपतिर्लोकपालो धनेश्वरः ॥६५॥
सगुह्यकैश्च यक्षैश्च प्रतिगृह्णातु मे बलिम् ।
नमोऽस्तु नाट्यमातृभ्यो ब्राह्म्यादिभ्यो नमो नमः ॥६६॥
सुमुखीभिः प्रसन्नाभिर्बलिः संप्रतिगृह्यताम् ।
रुद्रप्रहरणं चैव प्रतिगृह्णातु मे बलिम् ॥६७॥
विष्णुप्रहरणं चैव विष्णुभक्त्या मयोद्यतम् ।
तथा कृतान्त. कालश्च सर्वप्राणिवधेश्वरौ ॥६८॥

57 (B 59 ; G 58) 58 (B 60 ; G 59) 59 (B 61 ; G 60) 60a (B 62a; G 60b) 60-61 (B 62b-63a ; G 61) 61 62 (B 63b-64a ; G 62) 62-63 (B 64b 65a ; G. 63) 63-64 (B 65b-66a ; G 64) 64-65 (B 66b 67a ; G. 65) 65-66 (B 67b-68a ; G 66) 66 67 (B 68b-69a ; G.67) 67-68 (B 69b-70a ; G 68)

मृत्युश्च नियतिश्चैव प्रतिगृह्णन्तु मे बलिम् ।
याश्चास्यां मत्तवारण्यां संश्रिता वास्तुदेवताः ॥६६॥
मन्त्रपूतमिमं सम्यक् प्रतिगृह्णन्तु मे बलिम् ।
अन्ये ये देवगन्धर्वा दिशो दश समाश्रिताः ॥७०॥
दिव्यान्तरिक्षा भौमाश्च तेभ्यश्चाय बलिः कृतः ।
कुम्भं सलिलपूर्णं च पर्णमालापुरस्कृतम् ॥७१॥
स्थापयेद् रङ्गमध्ये तु सुवर्णं चात्र दापयेत् ।
आतोद्यानि तु सर्वाणि कृत्वा वस्त्रोत्तराणि तु ॥७२॥
गन्धैर्माल्यैश्च धूपैश्च भक्ष्यैर्भोज्यैश्च पूजयेत् ।
पूजयित्वा तु सर्वाणि दैवतानि यथाक्रमम् ॥७३॥
जर्जरः प्रतिसम्पूज्य स्यात् ततोऽविघ्नजर्जरः ।
श्वेतं शिरसि वस्त्रं स्यात् नीलं रौद्रे च पर्वणि ॥७४॥
विष्णुपर्वणि स्यात् पीतं रक्तं स्कन्दस्य पर्वणि ।
मूलपर्वणि चित्रं तु देयं वस्त्रं हितार्थिनाम् ॥७५॥
सदृशं च प्रदातव्यं माल्यधूपानुलेपनम् ।
सर्वमेव विधिं कृत्वा धूपमाल्यानुलेपनैः ॥७६॥
विघ्नजर्जरणार्थं तु जर्जरं चाभिमन्त्रयेत् ।
विघ्नानां शमनार्थं हि देवैर्ब्रह्मपुरोगमैः ॥७७॥
*निर्मितस्त्वं महावीर्यो वज्रसारो महातनुः ।*
शिरस्ते रक्षतु ब्रह्मा सर्वदेवगणैः सह ॥७८॥
द्वितीयं च हरः पर्व तृतीयं च जनार्दनः ।
चतुर्थं च कुमारश्च पञ्चमं पन्नगोत्तमः ॥७९॥
नित्यं सर्वे हि पान्तु त्वां सुरास्त्वं च शिवो [1]भव ।
नक्षत्रेऽभिजिति श्रेष्ठे जातस्त्वं रिपुसूदनः ॥८०॥

68-69 (B 70b-71a ; G 69). 69-70 (B.71b-72a , G.70). 70-71 (B.72b-73a ; G 71) 71-72 (B 73b-74a ; G 72) 72 73 (B 74b 75a ; G 76) 73-74 (B 75b-76a ; G.73) 74-76 (B.76b-78a ; G 74-75) [1]B repeats here 72-73 (B,74b-75a) 76-78 (B 79b-81a ; G 76-77) [1] B. भव.

जयं चाभ्युदयं चैव पार्थिवाय प्रयच्छ नः ।
जर्जरं पूजयित्वैव बलिं सर्वं निवेद्य च ॥८१॥
अग्नौ होमं ततः कुर्यान्मन्त्राहुतिपुरस्कृतम् ।
हुत्वा स एव दीप्ताभिरुल्काभिः परिमार्जनम् ॥८२॥
नृपतेर्नर्तकीनां च कुर्याद्दीप्त्यभिवर्धनम् ।
अभिद्योत्य सहातोद्यैर्नृपतिं नर्तकीस्तथा ॥८३॥
मन्त्रपूतेन तोयेन पुनरभ्युक्ष्य तान् वदेत् ।
महाकुले प्रसूताश्च गुणौघैश्चाप्यलङ्कृताः ॥८४॥
यद्वो जन्मगुणोपेतं तद्वो भवतु नित्यशः ।
एवमुक्त्वा ततो वाक्य नृपतेर्भूतये बुधः ॥८५॥
नाट्ययोगप्रसिद्ध्यर्थमाशिषः संप्रयोजयेत् ।
सरस्वती धृतिर्मेधा ह्री श्रीर्लक्ष्मीर्मतिः स्मृतिः ॥८६॥
पान्तु वो मातरः सर्वाः सिद्धिदाश्च भवन्तु वः ।
होमं कृत्वा यथान्यायं हविर्मन्त्रपुरस्कृतम् ॥८७॥
भिन्द्यात् कुम्भं ततश्चैव नाट्याचार्यः प्रयत्नतः ।
अभिन्ने तु भवेत् कुम्भे स्वामिनः शत्रुतो भयम् ॥८८॥
भिन्ने चैव तु विज्ञेयः स्वामिनः शत्रुसङ्क्षयः ।
भिन्ने कुम्भे ततश्चैव नाट्याचार्योऽप्यपेतभीः ॥८९॥
प्रगृह्य दीपिकां दीप्तां सर्वं रङ्गं प्रदीपयेत् ।
क्ष्वेडितैः स्फोटितैश्चैव वल्गितैश्च प्रधावितैः ॥९०॥
रङ्गमध्ये तु तां दीप्तां सशब्दां सम्प्रयोजयेत् ।
शङ्खदुन्दुभिनिर्घोषैर्मृदङ्गपणवैस्तथा ॥९१॥
सर्वातोद्यैः प्रणदितैः रङ्गे युद्धानि कारयेत् ।
तत्र भिन्नं च छिन्नं च दारितं च सशोणितम् ॥९२॥

78-80 (B 81b-82 ; G 79 80a)　80-81 (B 83b-84a ; G 80b-81)　81-83 (B 84b 86a , G 82)　83 85 (B 86b 87a ; G.84 85)　85-88 (B 88b-90a ; G 88)　87 88 (B, 90b-90a , G 88-89).　89-91 (B.92b-94a ; G.90-91)

क्षतं प्रदीप्तमायस्तं निमित्तं सिद्धिलक्षणम् ।
सम्यगिष्टस्तु रङ्गो वै स्वामिनः शुभमावहेत् ॥९३॥
पुरस्याबालवृद्धस्य तथा जनपदस्य च ।
दुरिष्टस्तु तथा रङ्गो दैवतैर्दुरधिष्ठितः ॥९४॥
नाट्यविध्वंसनं कुर्यात् नृपस्य च तथाशुभम् ।
यस्त्वेवं विधिमुत्सृज्य यथेष्ट संप्रयोजयेत् ॥९५॥
प्राप्नोत्यपचयं शीघ्रं तिर्यग्योनिं च गच्छति ।
यज्ञेन संमितं ह्येतत् रङ्गदैवतपूजनम् ॥९६॥
अपूजयित्वा रङ्ग तु नैव प्रेक्षां प्रयोजयेत् ।
पूजिताः पूजयन्त्येते मानिता मानयन्ति च ॥९७॥
तस्मात् सर्वप्रयत्नेन कर्तव्यं रङ्गपूजनम् ।
न तथाशु दहत्यग्नि प्रभञ्जनसमीरितः ॥९८॥
यथा ह्यपप्रयोगस्तु प्रयुक्तो दहति क्षणात् ।
शास्त्रज्ञेन विनीतेन शुचिना दीक्षितेन च ॥१००॥
नाट्याचार्येण शान्तेन कर्तव्यं रङ्गपूजनम् ।
स्थानभ्रष्टं तु यो दद्यात् बलिमुद्विग्नमानस. ॥१०१॥
मन्त्रहीनो यथा होता प्रायश्चित्ती भवेत् तु सः ।
एवमेव विधिर्दृष्टो रङ्गदैवतपूजने ।
नवे नाट्यगृहे कार्यं प्रेक्षायां तु प्रयोक्तृभि ॥१०२॥

इति भारतीये नाट्यशास्त्रे रङ्गदैवतापूजनं नामतृतीयोऽध्यायः ।

91-93 (B 94b-97a ; G 92-94) 94-96 ( B.97b-99a ; G 95-96 ) 96-98 (B.99b-101a ; G.97-98) 98-99 (B 101b-102a ; G 99) 99-100 (B 102b-103a ; G.100) 100-101 (B.103b-105a ; G 101-102)

# चतुर्थोऽध्यायः

एवं तु पूजनं कृत्वा मया प्रोक्तः पितामहः ।
आज्ञापय प्रभो क्षिप्रं कः प्रयोगः प्रयुज्यताम् ॥१॥
ततोऽस्म्युक्तो भगवता योजयामृतमन्थनम् ।
एतदुत्साहजननं सुरप्रीतिकरं महत् ।२॥
योऽयं समवकारस्तु धर्मकामार्थसाधकः ।
मया प्रग्रथितो विद्वन् स प्रयोगः प्रयुज्यताम् ॥३॥
तस्मिन् समवकारे तु प्रयुक्ते देवदानवाः ।
हृष्टाः समभवन् सर्वे कर्मभावानुदर्शनात् ॥४॥
कस्यचित्त्वथ कालस्य मामाहाम्बुजसम्भव ।
नाट्यं सन्दर्शयामोऽद्य त्रिनेत्राय महात्मने ॥५॥
ततः सार्धं सुरैर्गत्वा वृषभाङ्कनिवेशनम् ।
अभ्यर्च्य च शिवं पश्चादुवाचेदं पितामहः ॥६।
मया समवकारस्तु योऽयं सृष्टः सुरोत्तम ।
श्रवणे दर्शने चास्य प्रसादं कर्तुमर्हसि ।७॥
पश्याम इति देवेशो द्रुहिणं वाक्यमब्रवीत् ।
ततो मामाह भगवान् सज्जो भव महामते ॥८॥
ततो हिमवतः पृष्ठे नानानगसमावृते ।
बहुभूतद्रुमाकीर्णे रम्यकन्दरनिर्झरे ॥९॥
पूर्वरङ्गे कृते पूर्वं तत्रायं द्विजसत्तमाः ।
तथा त्रिपुरदाहश्च डिमसंज्ञः प्रयोजितः ॥१०॥
ततो भूतगणा हृष्टाः कर्मभावानुकीर्तनात् ।
महादेवश्च सुप्रीतः पितामहमथाब्रवीत् ॥ ११ ॥

1 (B G. *same*) 2 (B G *same*) 3 (B G. *same*) 4 (B.G. *same*)
5 (B.G. *same*) 6 (B G. *same*) 7 (B G *same*) 8 (B.G. *same*).
9-10 (B G. *same*) 11 (B.G. *same*)

अहो नाट्यमिदं सम्यक् त्वया सृष्टं महामते ।
यशस्यं च शुभार्थं च पुण्यं बुद्धिविवर्धनम् ॥१२॥
मयापीदं स्मृतं नृत्तं सन्ध्याकालेषु नृत्यता ।
नानाकरणसंयुक्तैरङ्गहारैर्विभूषितम् ॥१३॥
पूर्वरङ्गविधावस्मिन् त्वया सम्यक् प्रयुज्यताम् ।
*वर्धमानकयोगेन गीतेष्वासारितेषु च ॥१४॥
महागीतेषु चैवार्थान् सम्यगेवाभिनेष्यसि ।
यश्चायं पूर्वरङ्गस्तु त्वया शुद्धः प्रयोजितः ॥१५॥
एभिर्विमिश्रितश्चायं चित्रो नाम भविष्यति ।
श्रुत्वा महेश्वरवचः प्रत्युक्त च स्वयंभुवा ॥१६॥
प्रयोगमङ्गहाराणामाचक्ष्व सुरसत्तम ।
ततस्तण्डुं समाहूय प्रोक्तवान् सुरसत्तमः ॥१७॥
प्रयोगमङ्गहाराणामाचक्ष्व भरताय वै ।
ततो वै तण्डुना प्रोक्तास्त्वङ्गहारा महात्मना ॥१८॥
नानाकरणसंयुक्तान् व्याख्यास्यामि सरेचकान् ।
स्थिरहस्तोऽङ्गहारस्तु तथा पर्यस्तकः स्मृतः ॥१९॥
सूचीविद्धस्तथा च स्यात् ह्यपविद्धस्तथैव च ।
आक्षिप्तकोऽथ विज्ञेयस्तथा चोद्घट्टितः स्मृतः ॥२०॥
विष्कम्भश्चैव संप्रोक्तस्तथा चैवापराजितः ।
विष्कम्भापसृतश्चैव मत्ताक्रीडस्तथैव च ॥२१॥
स्वस्तिको रेचितश्चैव पार्श्वस्वस्तिक एव च ।
वृश्चिकश्चैव संप्रोक्तो भ्रमरश्च तथापरः ॥२२॥
मत्तस्खलितकश्चैव मदाद्विलसितस्तथा ।
गतिमण्डलोऽथ विज्ञेयः परिच्छिन्नस्तथैव च ॥२३॥

12 (B G. *same*) 13-14 (B. *same* ; G 13-14a). 14-15 (B *same* ; G.14bc). 15-16 (B. *same* ; G.15). 15-17 (B. *same* ; G.16) 17-18 (B. *same* ; G, 17) 18-19 (B. *same* ; G. 18).

परिवृत्तरेचितः स्यात्तथा वैशाखरेचितः।
पराङ्वृत्तोऽथ विज्ञेयस्तथा चैवाप्यलातकः ॥२४॥
पार्श्वच्छेदोऽथ संप्रोक्तो विद्युद्भ्रान्तस्तथैव च ।
ऊरुद्वृत्तस्तथा चैव स्यादालीढस्तथैव च ॥२५॥
रेचितश्चापि विज्ञेयस्तथैवाच्छुरितः स्मृतः ।
आक्षिप्तरेचितश्चैव संभ्रान्तश्च तथापरः ॥२६॥
अपसर्पस्तु विज्ञेयस्तथा चार्धनिकुट्टकः ।
द्वात्रिंशदेते संप्रोक्तास्त्वङ्गहारास्तु नामतः ॥२७॥
एषां चैव प्रवक्ष्यामि प्रयोगं करणाश्रितम् ।
हस्तपादप्रचारस्तु यथा योज्यः प्रयोक्तृभिः ॥२८॥
अङ्गहारेषु वक्ष्यामि तथाऽहं द्विजसत्तमाः ।
सर्वेषामङ्गहाराणां निष्पत्तिः करणैर्भवेत् ॥२९॥
तान्यहं संप्रवक्ष्यामि नामतः कर्मतस्तथा ।
हस्तपादसमायोगो नृत्तस्य करणं भवेत् ॥३०॥
द्वे नृत्तकरणे चैव भवतो नृत्तमातृका ।
द्वाभ्यां त्रिभिश्चतुर्भिर्वाप्यङ्गहारस्तु मातृभिः ॥३१॥
त्रिभिः [1]कलापको ज्ञेयः [2]चतुर्भिः षण्डकस्तथा ।
पञ्चैव करणानि स्युः सङ्घातक इति स्मृतः ॥३२॥
षड्भिर्वा सप्तभिर्वापि अष्टभिर्नवभिस्तथा ।
करणैरिह संयुक्ता अङ्गहाराः प्रकीर्तिताः ॥३३॥
एतेषामिह वक्ष्यामि हस्तपादविकल्पनम् ।
तलपुष्पपुटं चैव वर्तितं [3]वलितोरु च ॥३४॥
अपविद्धं समनखं लीनं स्वस्तिकरेचितम् ।
मण्डलस्वस्तिकं चैव निकुट्टकमथापि च ॥३५॥

19-27 (B *same* ; G.19-27a). 28-29 (B. *same* ; G.27b-28). 29-30 (B. *same* ; G.29-30a) 30-34 (B. *same* ; G 30a-33). [1] B.कलापक. [2] B.G. मण्डक. ; we with Bk. 35-43 (B. *same* ; G.34-35) [3] B वलितोरु.

तथैवार्धनिकुट्टं च कटिच्छिन्नं तथैव च ।
अर्धरेचितकं चैव वक्षःस्वस्तिकमेव च ॥३६॥
उन्मत्तं स्वस्तिकं चैव पृष्ठस्वस्तिकमेव च ।
दिक्स्वस्तिकमलातं च तथा चैव कटीसमम् ॥३७॥
आक्षिप्तरेचितं चैव विक्षिप्ताक्षिप्तकं तथा ।
अर्धस्वस्तिकमुद्दिष्टमञ्चितं च तथापरम् ॥३८॥
भुजङ्गत्रासितं प्रोक्तं ऊर्ध्वजानु तथैव च ।
निकुञ्चितं च मत्तल्लि त्वर्धमत्तल्लि चैव हि ॥३९॥
स्याद्रेचकनिकुट्टं च तथा पादापविद्धकम् ।
घूर्णितं चैव ललितं वलितं च तथापरम् ॥४०॥
दण्डपक्षं तथा चैव भुजङ्गत्रस्तरेचितम् ।
नूपुरं चैव संप्रोक्तं तथा वैशाखरेचितम् ॥४१॥
भ्रमरं चतुरं चैव भुजङ्गाञ्चितमेव च ।
दण्डरेचितकं चैव तथा [1]वृश्चिककुट्टितम् ॥४२॥
कटिभ्रान्तं तथा चैव लतावृश्चिकमेव च ।
छिन्नं च करणं प्रोक्तं तथा वृश्चिकरेचितम् ॥४३॥
वृश्चिकं व्यंसितं चैव तथा पार्श्वनिकुट्टकम् ।
ललाटतिलकं क्रान्तं कुञ्चितं चक्रमण्डलम् ॥४४॥
उरोमण्डलमाक्षिप्तं तथा तलविलासितम् ।
अर्गलं चापि विक्षिप्तमावृत्तं दोलपादकम् ॥४५॥
विवृत्तं विनिवृत्तं च पार्श्वक्रान्तं निशुम्भितम् ।
विद्युद्भ्रान्तमतिक्रान्तं विवर्तितकमेव च ॥४६॥
गजक्रीडितकं चैव तलसंस्फोटितं तथा ।
गरुडप्लुतकं चैव गण्डसूचि तथापरम् ॥४७॥
परिवृत्तं समुद्दिष्टं पार्श्वजानु तथैव च ।
गृद्घ्रावलीनकं चैव सन्नतं सूच्यथापि च ॥४८॥

36–48 (B. *same* ; G.36-48). [1] हि   इनम्.

अर्धसूचीतिकरणं सूचिविद्धं तथैव च ।
अपक्रान्तं च संप्रोक्तं मयूरललितं तथा ॥४९॥
सर्पितं दण्डपादं च हरिणप्लुतमेव च ।
प्रेङ्खोलितं नितम्बं च स्खलितं करिहस्तकम् ॥५०॥
सर्पितं समुद्दिष्टं सिंहविक्रीडितं तथा ।
सिंहाकर्षितमुद्वृत्तं तथाऽपसृतमेव च ॥५१॥
तलसंघट्टितं चैव जनितं चावहित्थकम् ।
निवेशमेलकाक्रीडमूरूद्वृत्तं तथैव च ॥५२॥
मदस्खलितकं चैव विष्णुक्रान्तं तथैव च ।
संभ्रान्तमथ विष्कम्भमुद्घट्टितमथापि च ॥५३॥
वृषभक्रीडितं चैव लोलितं च तथापरम् ।
नागापसर्पितं चैव शकटास्यं तथैव च ॥५४॥
गङ्गावतरणं चैवेत्युक्तमष्टाधिकं शतम् ।
नृत्ते युद्धे नियुद्धे च तथा गतिपरिक्रमे ॥५५॥
यानि स्थानानि याश्चार्यो व्यायामे गदितानि तु ।
पादप्रचारस्त्वेषां तु करणानामयं भवेत् ॥५६॥
ये चापि नृत्तहस्तास्तु गदिता नृत्तकर्मणि ।
तेषां समासतो योगः करणेषु विभाव्यते ॥५७॥
चार्यश्चैव तु याः प्रोक्ता नृत्तहस्तास्तथैव च ।
सा मातृकेति विज्ञेया तद्योगात् करणानि तु ॥५८॥
गतिप्रचारे वक्ष्यामि युद्धचारीविकल्पनम् ।
यत्र तत्रापि संयोज्यमाचार्यैर्नाट्यशक्तितः ॥५९॥
प्रायेण करणे कार्यो वामो वक्षःस्थितः करः ।
चरणस्यानुगश्चापि दक्षिणस्तु भवेत् करः ॥६०॥

49-55 (B. *same* ; G 49-55) 56 (B 55b-55a ; G 56b) 57 (B.56b ; 57a) 58 (B 57b-58a) 1 G. *om* 59 (B. 58b-59a ; G 57) ; 60 (B. 59) 1 G. *om.* 61 (B 60) 1 G. *om*

हस्तपादप्रचारं तु कटिपार्श्वोरुसंयुतम् ।
उरःपृष्ठोदरोपेतं नृत्तमार्गे निबोधत ॥६१॥
कटि जानु समं यत्र कूर्परांसशिरस्तथा ।
समुन्नतमुरश्चैव सौष्ठवं नाम तद्भवेत् ॥६२॥
वामे पुष्पपुटं पार्श्वे पादोऽग्रतलसञ्चरः ।
तथा च सन्नतं पार्श्वं तलपुष्पपुटं भवेत् ॥६३॥
कुञ्चितौ मणिबन्धे तु व्यावृत्तपरिवर्तितौ ।
हस्तौ निपतितौ चोर्वोर्वर्तितं करणं तु तत् ॥६४॥
शुकतुण्डौ यदा हस्तौ व्यावृत्तपरिवर्तितौ ।
ऊरू च वलितौ यत्र वलितोरु तदुच्यते ॥६५॥
आवृत्य शुकतुण्डाख्यं ऊरुपृष्ठे निपातयेत् ।
वक्षस्थो वामहस्तश्चाप्यपविद्धं तु तद्भवेत् ॥६६॥
श्लिष्टौ समनखौ पादौ करौ चापि प्रलम्बितौ ।
देहः स्वाभाविको यत्र भवेत्समनखं तु तत् ।६७।
पताकाञ्चलि वक्षःस्थं प्रसारितशिरोधरम् ।
निकुञ्चितांसकूटं च तल्लीनं करणं स्मृतम् ॥६८॥
स्वस्तिकौ रेचिताविद्धौ विश्लिष्टौ कटिसंस्थितौ ।
यत्र तत्करणं ज्ञेयं बुधैः स्वस्तिकरेचितम् ॥६९॥
स्वस्तिकौ तु करौ कृत्वा प्राङ्मुखोर्ध्वतलौ समौ ।
तथा च मण्डलं स्थानं मण्डलस्वस्तिकं तु तत् ॥७०॥
निकुट्टितौ यदा हस्तौ स्वबाहुशिरसोऽन्तरे ।
पादौ निकुट्टितौ चैव ज्ञेयं तत्तु निकुट्टकम् ॥७१॥
अञ्चितौ बाहुशिरसी हस्तस्त्वभिमुखाङ्गुलिः ।
[1]निकुट्टितश्च पादः स्यात् ज्ञेयमर्धनिकुट्टकम् ॥७२॥

62 B.61 ; G. 59) 63 (B 62 , G. 60). 64 (B 63 ; G. 61). 65 (B 64 ; G 62). 66 (B. 65 ; G 63). 67 (B 66 ; G. 64) 68 (B. 67 ; G. 65). 69 B 68 ; G 66) 70 (B 69 , G67) 71 (B.70 ; G 68) [1] G. हस्त, B निकुट्टक 72 (B. 71 ; G 69)

पर्यायशः कटिच्छिन्ना बाहू शिरसि पल्लवौ ।
पुनः पुनश्च करणं कटिच्छिन्नं तु तद्भवेत् ॥७३॥
अपविद्धः^1 करः सूच्या पादश्चैव निकुट्टकः ।
सन्नतं यत्र पार्श्वं च तद्भवेदर्धरेचितम् ॥७४॥
स्वस्तिकौ चरणौ यत्र करौ वक्षसि रेचितौ ।
निकुञ्चितं तथा वक्षो वक्षःस्वस्तिकमेव च ॥७५॥
अञ्चितेन तु पादेन रेचितौ तु करौ यदा ।
उन्मत्तं करणं तत्तु विज्ञेयं नृत्तकोविदैः ॥७६॥
उभाभ्यां हस्तपादाभ्यां भवतः स्वस्तिकौ यदा ।
तत्स्वस्तिकमिति प्रोक्तं करणं करणार्थिभिः ॥७७॥
विक्षिप्ताक्षिप्तबाहुभ्यां स्वस्तिकौ चरणौ यदा ।
अपक्रान्तार्धसूचिभ्यां तत् पृष्ठस्वस्तिकं भवेत् ॥७८॥
पार्श्वयोरग्रतश्चैव यत्र श्लिष्टः गतो भवेत् ।
स्वस्तिकौ हस्तपादाभ्यां तद्दिक्स्वस्तिकमुच्यते ॥७९॥
अलातं चरणं कृत्वा व्यंसयेद् दक्षिणं करम् ।
ऊर्ध्वजानुक्रमं चैव अलातकरणं भवेत् ॥८०॥
स्वस्तिकापसृतः पादः करौ नाभिकटिस्थितौ ।
पार्श्वमुद्वाहितं चैव करणं तत्कटीसमम् ॥८१॥
हस्तौ हृदि भवेद्वामः सव्यश्चाक्षिप्तरेचितः ।
रेचितश्चापविद्धश्च तत् स्यादाक्षिप्तरेचितम् ॥८२॥
विक्षिप्तं हस्तपादं तु तस्यैवाक्षेपणं पुनः ।
यत्र तत् करणं ज्ञेयं विक्षिप्ताक्षिप्तकं द्विजाः ॥८३॥
स्वस्तिकौ चरणौ कृत्वा करिहस्तं च दक्षिणम् ।
वक्षःस्थाने तथा वाममर्धस्वस्तिकमादिशेत् ॥८४॥

73 (B 73, G. 70) [1] B. G निकुञ्चित, we with Bh 74 (B.74; G. 71). 75 (B 75; G. 72). 76 (B. 70, G 73) 77 (B 77 (B 77; G. 71) 78 (B.78, G 75). 79 (B.79; G. 78) 82-84 (B 82-84; G 79-81).

व्यावृत्तपरिवृत्तस्तु स एव तु करो यदा ।
अञ्चितो नासिकाग्रे तु तदञ्चितमुदाहृतम् ॥८५॥
कुञ्चितं पादमुत्क्षिप्य त्र्यस्रमूरुं निवर्तयेत् ।
कटिजानू निवृत्तौ च भुजङ्गत्रासितं भवेत् ॥८६॥
कुञ्चितं पादमुत्क्षिप्य जानु हस्तं समं न्यसेत् ।
प्रयोगवशगौ हस्तावूर्ध्वजानु प्रकीर्तितम् ॥८७॥
करणं वृश्चिकं कृत्वा करं पार्श्वे निकुञ्चयेत् ।
नासाग्रे दक्षिणं चैव ज्ञेयं तद्धि निकुञ्चितम् ॥८८॥
वामदक्षिणपादाभ्यां घूर्णमानोपसर्पणैः ।
उद्वेष्टितापविद्धैश्च हस्तैर्मत्ल्युदाहृतम् ॥८९॥
स्खलितापसृतौ पादौ वामहस्तश्च रेचितः ।
सव्यहस्तः कटिस्थः स्यादर्धमत्त्लिमादिशेत् ॥९०॥
रेचितो दक्षिणो हस्तः पादः सव्यो निकुट्टितः ।
दोला चैव भवेद्वामस्तद्रेचकनिकुट्टकम् ॥९१॥
कार्यौ नाभितटे हस्तौ प्राङ्मुखौ कटकामुखौ ।
सूचीविद्धावपक्रान्तौ पादौ पादापविद्धके ॥९२॥
अपविद्धो भवेद्धस्तः सूचीपादस्तथैव च ।
तथा त्रिकं विवृत्तं च वलितं नाम तद्भवेत् ॥९३॥
वर्तितो घूर्णितः सव्यो हस्तो वामश्च दोलितः ।
स्वस्तिकापसृतः पादः करणं घूर्णितं तु तत् ॥९४॥
करिहस्तो भवेद्वामो दक्षिणश्च विवर्तितः ।
बहुशः कुट्टितः पादो ज्ञेयं तल्ललितं बुधैः ॥९५॥
ऊर्ध्वजानु विधायाथ तस्योपरि लतां न्यसेत् ।
दण्डपक्षं तु तत् प्रोक्तं करणं नृत्तवेदिभिः ॥९६॥

85 (B 85 ; G. 82) [1] B G. विवर्तयेत्, विक्रम. [2] B विवर्तांच्. 86 (B. 86 ; G. 83) 87 (B 87 : G. 84) [1] B G. हस्तिक चरण. 88 (B 88 ; G. 85). 89 (B. 89 ; G. 86). 90 (B 90 ; G. 87) 91 (B 91 ; G 88) 92 (B 92 ; G.87) 93 (B. 98 ; G.90). [1] B G वर्तित 94 (B 94 ; G. 91) 95 (B. 95 ; G. 92) 96 (B. 96 ; G. 93).

भुजङ्गत्रासितं कृत्वा यत्रोभावपि रेचितौ ।
वामपार्श्वस्थितौ हस्तौ भुजङ्गत्रस्तरेचितम् ॥९७॥
त्रिकं सुवलितं कृत्वा लतारेचितकौ करौ ।
नूपुरं च तथा पादं करणे नूपुरे न्यसेत् ॥९८॥
रेचितौ हस्तपादौ च कटिग्रीवौ च रेचितौ ।
वैशाखस्थानकेनैतत् भवेद्वैशाखरेचितम् ॥९९॥
आक्षिप्तः स्वस्तिकः पादः करौ चोद्वेष्टितौ तथा ।
त्रिकस्य वलनाच्चैव ज्ञेयं भ्रमरकं तु तत् ॥१००॥
अञ्चितः स्यात् करो वामः सव्यश्चतुर एव च ।
दक्षिणः कुट्टितः पादः चतुरं तत् प्रकीर्तितम् ॥१०१॥
भुजङ्गत्रासितः पादो रेचितो दक्षिणः करः ।
लताख्यश्च करो वामो भुजङ्गाञ्चितकं भवेत् ॥१०२॥
विक्षिप्तं हस्तपादं तु समन्ताद् यत्र दण्डवत् ।
रेच्यते तद्धि करणं ज्ञेयं दण्डकरेचितम् ॥१०३॥
वृश्चिकं करणं कृत्वा द्वावप्यथ निकुट्टितौ ।
त्रिपताकौ करौ तद्धि ज्ञेयं वृश्चिककुट्टितम् ॥१०४॥
सूचीं कृत्वापविद्धं च दक्षिणं चरणं न्यसेत् ।
रेचिता च कटिर्यत्र कटिभ्रान्तं तदुच्यते ॥१०५॥
अञ्चितः पृष्ठतः पादः कुञ्चितोर्ध्वतलाङ्गुलिः ।
लताख्यश्च करो वामस्तल्लतावृश्चिकं भवेत् ॥१०६॥
अलपद्मः कटीदेशे छिन्ना पर्यायशः कटी ।
वैशाखस्थानकेनेह तच्छिन्नं करणं भवेत् ॥१०७॥
वृश्चिकं चरणं कृत्वा स्वस्तिकौ च करावुभौ ।
रेचितापस्रुतौ चैव कार्यं वृश्चिकरेचितम् ॥१०८॥

97 (B. 97 ; G. 94) 98 (B. 98 ; G 95) 99 (B. 99 ; G. 96). 100 (B. 100 ; G. 97) 101 (B 101 ; G. 98) 102 (B 102 ; G. 99) 103 (B. 103 ; G. 100). 104 (B 104 ; G. 101). 105 ; G 102) 106 (B. 105 ; G. 103). 107 (B. 107 ; G. 104). 108 (B. 108 ; G. 105).

बाहुशीर्षाञ्चितौ हस्तौ पादः पृष्ठाञ्चितस्तथा ।
दूरसन्नतपृष्ठं च वृश्चिकं तत्प्रकीर्तितम् ॥१०९॥
आलीढं स्थानकं यत्र करौ वक्षसि रेचितौ ।
ऊर्ध्वाधो विप्रकीर्णौ च व्यंसितं तद्विदुर्बुधाः ॥११०॥
हस्तौ तु स्वस्तिकौ पार्श्वे तथा पादो निकुट्टितः ।
यत्र तत्करणं ज्ञेयं बुधैः पार्श्वनिकुट्टकम् ॥१११॥
वृश्चिकं चरणं कृत्वा पादस्याङ्गुष्ठकेन तु ।
ललाटे तिलकं कुर्याल्ललाटतिलकं च तत् ॥११२॥
पृष्ठतः कुञ्चितं कुर्यादतिक्रान्तं समन्ततः ।
आक्षिप्तौ च करौ कार्यौ क्रान्तके करणे द्विजाः ॥११३॥
आद्य पादोऽञ्चितः कार्यः सव्यहस्तश्च कुञ्चितः ।
उत्तानो वामपार्श्वश्च तत्कुञ्चितमुदाहृतम् ॥११४॥
प्रलम्बिताभ्यां बाहुभ्यां यद् गात्रेणाननेन च ।
अभ्यन्तरापविद्धः स्यात् तज्ज्ञेयं चक्रमण्डलम् ॥११५॥
स्वस्तिकापसृतौ पादावपविद्धक्रमौ यदा ।
उरोमण्डलिकौ हस्त उरोमण्डलकं तु तत् ॥११६॥
आक्षिप्तहस्तपादं च क्रियते यत्र वेगतः ।
आक्षिप्तं करणं नाम तद्विज्ञेयं द्विजर्षभाः ॥११७॥
ऊर्ध्वाङ्गुलितलः पादः पार्श्वेणोर्ध्वं प्रसारितः ।
प्रकुर्यादञ्चिततलौ हस्तौ तलविलासिते ॥११८॥
पृष्ठतः प्रसृतः पादो द्वौ तालावर्धमेव च ।
तस्यैवानुगतो हस्तः पुरतस्त्वर्गलं तु तत् ॥११९॥
विक्षिप्तं हस्तपादं तु पृष्ठतः पार्श्वतोऽथवा ।
एकमार्गगतं यत्र तद्विक्षिप्तमुदाहृतम् ॥१२०॥

109 (B 108, G.106) 110 (B 109, G.107) 111 (B 110, G.108) 112 (B 111; G 109) 113 B.112, G 110) 114 (B 113, G 111). 115 (B.114; G.112). 116 B.115, G.113) 117 (B 116, G.114) 118 (B 117; G.115) 119 (B.118; G. 116) 120 (B 119; G 117)

प्रसार्य कुञ्चितं पादं पुनरावर्तयेद् द्रुतम् ।
प्रयोगवशगौ हस्तौ नडावृत्तमुदाहृतम् ॥१२१॥
कुञ्चितं पादमुत्क्षिप्य पार्श्वात् पार्श्वं तु दोलयेत् ।
प्रयोगवशगौ हस्तौ दोलापादं प्रकीर्तितम् ॥१२२॥
आक्षिप्त हस्तपाद च त्रिकं चैव विवर्तितम् ।
रेचितौ च तथा हस्तौ विवृत्ते करणे द्विजा ॥१२३॥
सूचीविद्ध विधायाथ त्रिक तु विनिवर्तयेत् ।
करौ तु रेचितौ कार्यौ विनिवृत्ते द्विजोत्तमा. ॥१२४॥
पार्श्वक्रान्तक्रमं कृत्वा पुरस्तादथ पातयेत् ।
प्रयोगवशगौ हस्तौ पार्श्वक्रान्तमुदाहृतम् ॥१२५॥
पृष्ठत कुञ्चितौ पादौ वक्षश्चैव समुन्नतम् ।
तिलके च कर स्थाप्यस्तन्निशुम्भितमुच्यते ॥१२६॥
पृष्ठतो वलितं पादं शिरोघृष्टं प्रसारयेत् ।
हस्तौ च मण्डलाविद्धौ विद्युद्भ्रान्त तदुच्यते ॥१२७॥
अतिक्रान्तक्रम कृत्वा पुरस्तात् सम्प्रसारयेत् ।
प्रयोगवशगौ हस्तौ अतिक्रान्ते प्रकीर्तितौ ॥१२८॥
आक्षिप्ते हस्तपादं च त्रिकं चैव विवर्तितम् ।
पुनश्च रेचयेद्धस्तं विवर्तितकमेव तत् ॥१२९॥
कर्णेऽञ्चित. करो वामो लताहस्तश्च दक्षिण ।
दोलापादस्तदा चैव गजक्रीडितके भवेत् ॥१३०॥
द्रुतमुत्क्षिप्य चरण पुरस्तादथ पातयेत् ।
तलसंस्फोटितौ हस्तौ तलसंस्फोटिते स्मृतौ ॥१३१॥
पृष्ठप्रसारितः पाद. लतारेचितकौ करौ ।
समुन्नतमुरश्चैव गरुडप्लुतके भवेत् ॥१३२॥

121 (B 120, G 118) 122 (B 121, G 119) 122 (B 122, G 120). 124 (B 123; G 121) 125 (B 124, G 122) 126 (B 125; 123) 127 (B 126, G.124) 128 (B 127; G 125) 129 (B.128, G 126) 130 (B 129, G 127) 131 (B 130; G 128) 132 (B 131, B 122).

सूचीपादोन्नतं पार्श्वं एको वक्षःस्थितः करः ।
द्वितीयश्चाञ्चितो गण्डे गण्डसूचि तदुच्यते ॥१३३॥
ऊर्ध्वाविवेष्टितौ हस्तौ सूचीपादो विवर्तितः ।
परिवृत्तत्रिकश्चैव परिवृत्तं तदुच्यते ॥१३४॥
एकः समस्थितः पाद ऊरुपार्श्वे स्थितोऽपरः ।
मुष्टिहस्तश्च वक्षःस्थः पार्श्वजानु तदुच्यते ॥१३५॥
पृष्ठप्रसारितः पादः किञ्चिदञ्चितजानुकः ।
यत्र प्रसारितौ बाहू तत्स्यात् गृध्रावलीनकम् ॥१३६॥
उत्प्लुत्य चरणौ कार्यावग्रतः स्वस्तिकस्थितौ ।
सन्नतौ च तथा हस्तौ सन्नतं तदुदाहृतम् ॥१३७॥
कुञ्चितं पादमुत्क्षिप्य कुर्यादग्रस्थितं भुवि ।
प्रयोगवशगौ हस्तौ तत्सूचि परिकीर्तितम् ॥१३८॥
अलपद्म शिरोदेशे सूचीपादश्च दक्षिण ।
यत्र तत्करणं ज्ञेयमर्धसूचीति नामतः ॥१३९॥
पादसूच्या यदा पादो द्वितीयस्तु प्रपीड्यते ।
कटिवक्षःस्थितौ हस्तौ सूचीविद्धं तदुच्यते ॥१४०॥
कृत्वोरुवलित पादमपक्रान्तक्रमं न्यसेत् ।
प्रयोगवशगौ हस्तावपक्रान्तं तदुच्यते ॥१४१॥
वृश्चिकं करणं कृत्वा रेचितौ च तथा करौ ।
तथा त्रिकं विवृत्तं च मयूरललितं भवेत् ॥१४२॥
अञ्चितापसृतौ पादौ शिरश्च परिवाहितम् ।
रेचितौ च करौ यत्र तत्सर्पितमुदाहृतम् ॥१४३॥
नूपुरं चरणं कृत्वा दण्डपाद प्रसारयेत् ।
क्षिप्रविद्धं करं चैव दण्डपादं तदुच्यते ॥१४४॥

133 (B.132, G 130) 134 (B 133; G 131). 135 (B.134, G.132) 136 (B.135, G 133). 137 (B 136, G 134) 138 (B.137; G 135) 139 (B.138; G 136) - 140 (B 139, G 137). 141 (B 140, G 138) 142 (B.141 G 139). 143 (B 142, G 140). 144 (B 143; G 141)

अतिक्रान्तं क्रमं कृत्वा समुत्प्लुत्य निवर्तयेत् ।
जङ्घाञ्चितोपरिक्षिप्ता तद्विद्याद्धरिणप्लुतम् ॥१४५॥
दोलापादक्रमं कृत्वा समुत्प्लुत्य निपातयेत् ।
परिवृत्तं त्रिकं चैव प्रेङ्खोलितकमुच्यते ॥१४६॥
भुजावूर्ध्वविनिष्क्रान्तौ हस्तौ चाभिमुखाङ्गुली ।
बद्धाचारी तथा चैव नितम्बे करणे भवेत् ॥१४७॥
दोलपादक्रम कृत्वा हस्तौ तदनुगावुभौ ।
रेचितौ घूर्णितौ वापि स्खलितं करणं भवेत् ॥१४८॥
वामो वक्षःस्थितो हस्तः प्रोद्वेष्टिततलोऽपरः ।
अञ्चितश्चरणश्चैव प्रयोज्य करिहस्तके ॥१४९॥
एकस्तु रेचितो हस्तो लताख्यश्च तथापरः ।
संसर्पिततलौ पादौ प्रसर्पितकमेव तत् ॥१५०॥
अलातक पुरः कृत्वा द्वितीयश्च द्रुतक्रमम् ।
हस्तौ पादानुगौ चापि सिंहविक्रीडितं स्मृतौ ॥१५१॥
पृष्ठप्रसर्पितः पादः कुञ्चितावर्तितौ करौ ।
पुरस्तथैव कर्तव्यौ सिंहाकर्षितके द्विजाः ॥१५२॥
आक्षिप्तहस्तमाक्षिप्तपादमाक्षिप्तदेहकम् ।
उद्वृत्तगात्रमित्येतदुद्वृत्तं करणं स्मृतम् ॥१५३॥
आक्षिप्तश्चरणः कार्यो हस्तौ तस्यैव चानुगौ ।
आनतं च तथा गात्रं तथोपसृतकं स्मृतम् ॥१५४॥
दोलापादक्रमं कृत्वा तलसंघट्टितौ करौ ।
रेचयेच्च कर वाम तलसंघट्टिते तथा ॥१५५॥
एको वक्षःस्थितो हस्तो द्वितीयश्च प्रलम्बितः ।
लताग्रसंस्थितः पादो जनिते करणे भवेत् ॥१५६॥

145 (B.144 ; G.142). 146 (B.145 , G.143). 147 (B 146 ; G.144) 148 (B.147 , G.145) 149 (B 148 , G.146) 150 (B 149 ; G.147) 151 (B 150 , G.148) 152 (B 151 G.149) 153 (B 152 , G 150) 154 (B 153 ; G.151), 155 (B 154 , 152) 156 (B 155 , G 153)

अनितं करणं कृत्वा हस्तौ चाभिमुखाङ्गुली ।
शनैर्निपातितौ चैव ज्ञेयं तदवहित्थकम् ॥१५७॥
करौ वक्षःस्थितौ कार्यावुरो निर्भुग्नमेव च ।
मण्डलं स्थानकं चैव निवेशं करणं तु तत् ॥१५८॥
तलसञ्चरपादाभ्यामुत्प्लुत्य पतनं तु यत् ।
सन्नतं वलितं गात्रमेलकाक्रीडितं तु तत् ॥१५९॥
करमावृत्तकरणमूरुपृष्ठेऽञ्चितं न्यसेत् ।
जङ्घाञ्चिता तथोद्वृत्ता तदूरूद्वृत्तमुच्यते ॥१६०॥
करौ प्रलम्बितौ कार्यौ शिरश्च परिवाहितम् ।
पादौ च वलिताविद्धौ मदस्खलितके द्विजा. ॥१६१॥
पुरः प्रसारितः पादः कुञ्चितो गमनोन्मुखः ।
करौ च रेचितौ यत्र विष्णुक्रान्तं तदुच्यते ॥१६२॥
करमावर्तितं कृत्वा ऊरुपृष्ठे निकुञ्चयेत् ।
ऊरुश्चैव तदा विद्धः सम्भ्रान्तं करणं तु तत् ॥१६३॥
अपविद्धः करः सूच्या पादश्चैव निकुट्टितः ।
वक्षस्थश्च करो वामो विष्कम्भे करणे भवेत् ॥१६४॥
पादावुद्घट्टितौ कार्यौ तलसङ्घट्टितौ करौ ।
नितम्बपार्श्वे कर्तव्यौ बुधैरुद्घट्टिते सदा ॥१६५॥
प्रयुज्यालातकं पादं हस्तौ द्वावपि रेचितौ ।
कुञ्चितावञ्चितौ चैव वृषभक्रीडिते स्मृतौ ॥१६६॥
रेचितावञ्चितौ हस्तौ लोलितं वर्तितं शिर. ।
उभयोः पार्श्वयोर्यत्र ज्ञेयं लोलितकं बुधै. ॥१६७॥
स्खलितापसर्पितौ पादौ तथा हस्तौ च रेचितौ ।
परिवाहितं शिरश्चैव कुर्यान्नागापसर्पिते ॥१६८॥

157 (B 156 ; G 154). 158 (B.157 ; G.155). 159 (B.158 ; G.156). 160 (B.159 ; G 157). 161 (B 160 ; G 158). 162 (B 161 , 159) 163 (B 162 ; G 160) 164 (B.163 ; G.161). 165 (B 164 , G 162) 166 (B 165 , G.163) 167 (B.166 ; G 164) 168 (B 167 ; G 165)

निषण्णाङ्गस्तु चरणं प्रसार्य तलसञ्चरम् ।
उद्वाहितमुरः कृत्वा शकटास्यं प्रयोजयेत्[1] ॥१६६॥
ऊर्ध्वाङ्गुलितलौ पादौ त्रिपताकावधोमुखौ ।
हस्तौ शिरः सन्नतं च गङ्गावतरणं च तत् ॥१७०॥
अष्टोत्तरशतं ह्येतत् करणाना मयोदितम् ।
अत. परं प्रवक्ष्यामि ह्यङ्गहारविकल्पनम् ॥१७१॥
प्रसार्योत्क्षिप्य च करौ समपादं प्रयोजयेत् ।
व्यंसितापसृत सव्यमूर्ध्वं हस्त प्रसारयेत् ॥१७२॥
प्रत्यालीढं तत. कृत्वा तथैव च निकुट्टकम् ।
ऊरूद्वृत्तं तत कुर्यात् आक्षिप्त स्वस्तिक तत ॥१७३॥
नितम्ब करिहस्तश्च कटिच्छिन्नं तथैव च ।
स्थिरहस्तो भवेदेष त्वङ्गहारो हरप्रिय ॥१७४॥
तलपुष्पापविद्धे च वर्तित संप्रसारयेत् ।
प्रत्यालीढ तत. कृत्वा तथैव च निकुट्टकम् ॥१७५॥
ऊरूद्वृत्तं तथाक्षिप्तमुरोमण्डलमेव च ।
नितम्ब करिहस्त च कटिच्छिन्न तथैव च[1] ॥१७६॥
एष पर्यस्तको नाम त्वङ्गहारो हरोद्भव ।
अलपल्लवसूचीं च कृत्वा विक्षिप्तमेव च ॥१७७॥
आवर्तितं तत कुर्यात् तथैव च निकुट्टकम् ।
ऊरूद्वृत्तं तथाक्षिप्तमुरोमण्डलकं तथा ॥१७८॥
करिहस्तं कटिच्छिन्नं सूचीविद्धो भवेदयम् ।
अपविद्ध तु करणं सूचीविद्ध पुनर्भवेत् ॥१७९॥
उद्वेष्टितेन हस्तेन त्रिकं तु परिवर्तयेत् ।
उरोमण्डलकौ हस्तौ कटिच्छिन्न तथैव च ॥१८०॥

169 (B.168 ; G 166) [1] For B 169-173 (G 167-170) see 56-61 above 170 (B 169 , G 171) 171-173 (B 174-176 , G 172-174). 174-176 (B 177-179a ; G 175-176) [1] G om 175b 176-180 (B 179b-183a ; G 177-180).

अपविद्धाङ्गहारस्तु विज्ञेयस्तत्प्रयोक्तृभिः ।
करणं नूपुरं कृत्वा विक्षिप्तालातकं पुनः ॥१८१॥
पुनराक्षिप्तकं कुर्यादुरोमण्डलकं तथा ।
नितम्बं करिहस्तञ्च कटिच्छिन्नं तथैव च ॥१८२॥
आक्षिप्तकस्तु विज्ञेयो ह्यङ्गहारः प्रयोक्तृभिः ।
उद्वेष्टितापविद्धस्तु करः पादो निकुट्टितः ॥१८३॥
पुनस्तेनैव योगेन वामपार्श्वे भवेदथ ।
उरोमण्डलकौ हस्तौ नितम्बं करिहस्तकः ॥१८४॥
कर्तव्यः स कटिच्छेदो नृत्ते तूद्घट्टिते बुधैः ।
पर्यायोद्वेष्टितौ हस्तौ पादौ चैव निकुट्टितौ ॥१८५॥
कुञ्चितावञ्चितौ च ऊरूद्वृत्तं तथैव च ।
चतुरश्रं करं कृत्वा पादेन च निकुट्टकम् ॥१८६॥
भुजङ्गत्रासकं चैव करं चोद्वेष्टितं पुनः ।
परिच्छिन्नं च कर्तव्यं त्रिकं भ्रमरकेण तु ॥१८७॥
करिहस्तं कटिच्छिन्नं विष्कम्भः परिकीर्तितः ।
दण्डपादं करं चैव विक्षिप्याक्षिप्य चैव हि ॥१८८॥
व्यंसितं वामहस्तं च सह पादेन सर्पयेत् ।
चतुरश्रं करं कृत्वा पादेन च निकुट्टकम् ॥१८९॥
भुजङ्गत्रासितं चैव करं चोद्वेष्टितं पुनः ।
निकुट्टकद्वयं कार्यमाक्षिप्तं मण्डलोरसा ॥१९०॥
करिहस्तः कटिच्छेदः कर्तव्यस्त्वपराजिते ।
कुट्टितं करणं कृत्वा भुजङ्गत्रासितं तथा ॥१९१॥
रेचितेन तु हस्तेन पताकाहस्तमादिशेत् ।
आक्षिप्तकं प्रयुञ्जीत उरोमण्डलकं तथा ॥१९२॥

180-182 (B 183b-185a, G 181-182) 182-184 (B 185b-187a; G 183-184) 184-187 (B 187b-190a; G 185-187) 187-190 (B 190b-193a; G 188-189) [1] G om 188b-189a 190-192 (B 193b-195a; G 190-191).

लताख्यं सकटिच्छेदं विष्कम्भापसृते भवेत् ।
त्रिकं तु वलितं कृत्वा नूपुरं चरणं तथा ॥१९३॥
भुजङ्गत्रासितं सव्यं चरणं चैव रेचितम् ।
आक्षिप्तकं ततः कृत्वा परिच्छिन्नं तथैव च ॥१९४॥
बाह्यभ्रमरकं कुर्यादुरोमण्डलमेव च ।
नितम्बं करिहस्तं च कटिच्छेदं तथैव च ॥१९५॥
मत्ताक्रीडो भवेदेष अङ्गहारो भवप्रियः ।
रेचितं हस्तपादं च कृत्वा वृश्चिकमेव च ॥१९६॥
पुनस्तेनैव योगेन कृत्वा वृश्चिकमेव तु ।
निकुट्टकं तथा चैव सव्यासव्यकृतैः क्रमैः ॥१९७॥
लताख्यं सकटिच्छेदो भवेत् स्वस्तिकरेचिते ।
[1]पार्श्वे तु स्वस्तिकं बध्वा कार्यं त्वर्धनिकुट्टकम् ॥१९८॥
द्वितीयस्य तु पार्श्वस्य विधिः स्यादेष एव हि ।
ततश्च करमावृत्य ऊरुपृष्ठे निपातयेत् ॥१९९॥
ऊरूद्वृत्तं ततः कुर्यादाक्षिप्तं पुनरेव च ।
नितम्बं करिहस्तश्च कटिच्छेदं तथैव च ॥२००॥
पार्श्वस्वस्तिक इत्येष ह्यङ्गहारः प्रकीर्तितः ।
वृश्चिकं करणं कृत्वा लताख्यं हस्तमेव च ॥२०१॥
तमेव च करं भूयो नासाग्रे सन्निवेशयेत् ।
तमेवोद्वेष्टितं कृत्वा नितम्बमथ वर्तयेत् ॥२०२॥
करिहस्तं कटिच्छेदं वृश्चिकापसृते भवेत् ।
कृत्वा नूपुरपादं तु तथाक्षिप्तकमेव च ॥२०३॥
[2]कटिच्छिन्नं तु कर्तव्यं सूचीपादं तथैव च ।
नितम्बं करिहस्तं उरोमण्डलकं तथा ॥२०४॥

193-195 (B 195b-198a ; G 192-194). 196 197 (B 198b-200a ; G 195-196). 197-200 (B 200b-203a ; G 197-199). 200-202 (B 203b-205a ; G 200-201) [1] B पार्श्वस्वस्तिकपादौ 202-204 (B 205b-207a ; G 202-203) [2] G कटिच्छिन्नं .

39302

कटिच्छेदं तनश्चैव भ्रमरः स तु संज्ञितः ।
मतल्लिकरणं कृत्वा करमावृत्य दक्षिणम् ॥२०५॥
कपोलस्य प्रदेशे तु कर्तव्य तु निकुञ्चितम् ।
अपविद्धं तथा चैव तलसंस्फोटितं तथा ॥२०६॥
करिहस्तं कटिच्छेदं मत्तस्खलितके भवेत् ।
दोलैः करैः प्रचलितैः स्वस्तिकापसृतैः पदैः ॥२०७॥
अञ्चितैर्वलितैर्हस्तैस्तलसंघट्टितैस्तथा ।
निकुट्टितं च कर्तव्यमूरूद्वृत्तं तथैव च ॥२०८॥
करिहस्तं कटिच्छिन्नं मत्ताद्विलसिते भवेत् ।
मण्डलस्थानकं कृत्वा तथा हस्तौ च रेचितौ ॥२०६॥
उद्घट्टितेन पादेन मतल्लिकरणं भवेत् ।
आक्षिप्तं करणं चैव उरोमण्डलकं तथा ॥२१०॥
कटिच्छेदं तथा चैव भवेत्तु गतिमण्डले ।
समपादं प्रयुज्याथ परिच्छिन्नन्त्वनन्तरम् ॥२११॥
आविद्धेन तु पादेन बाह्यभ्रमरकं तथा ।
वामं सूच्या त्वतिक्रान्त भुजङ्गत्रासितं तथा ॥२१२॥
करिहस्तं कटिच्छिन्नं परिच्छिन्ने विधीयते ।
शिरसस्तूपरि स्थाप्यौ स्वस्तिकौ विच्युतौ करौ ॥२१३॥
ततः सव्यं करं चापि गात्रमानम्य रेचयेत् ।
पुनरुत्थापयेत्तत्र गात्रमुन्नम्य रेचितम् ॥२१४॥
ललाख्यौ च करौ कृत्वा वृश्चिकं सम्प्रयोजयेत् ।
रेचितं करिहस्तं च भुजङ्गत्रासितं तथा ॥२१५॥
आक्षिप्तकं प्रयुञ्जीत स्वस्तिकं पादमेव च ।
पराङ्मुखौ विधिर्भूय एवमेव भवेदिह ॥२१६॥

205-207 (B.208b-210a; G.204-205) 207-209 (B 210b-212a, G 206-207). 209-211 (B.212b-214a ; G 208 209) 211-213 (B 214b-216a ; G 210-211). 213-217, (B 216b 220a ; G 212-215).

करिहस्तं कटिच्छेदं परिवृत्तकरेचिते ।
रेचितौ सह गात्रेण ह्यपविद्धौ करौ तथा ॥२१७॥
पुनस्तेनैव देशेन गात्रमुन्नम्य रेचयेत् ।
कार्यं नूपुरपादं च भुजङ्गत्रासितं तथा ॥२१८॥
रेचितं मण्डलं चैव बाहुशीर्षं निकुञ्चयेत् ।
उद्वृत्तं तथाक्षिप्तमुरोमण्डलमेव च ॥२१९॥
करिहस्तं कटिच्छेदं कुर्याद्वैशाखरेचिते ।
आद्यं तु जनितं कृत्वा पादमेकं प्रसारयेत् ॥२२०॥
तथैवालातकं कुर्यात् त्रिकं तु परिवर्तयेत् ।
अञ्चितं वामहस्तं च गण्डदेशे निकुट्टयेत् ॥२२१॥
कटिच्छिन्नं तथा चैव परावृत्ते प्रयोजयेत् ।
स्वस्तिकं करणं कृत्वा व्यसितौ च करौ ततः ॥२२२॥
अलातकं प्रयुञ्जीत ऊर्ध्वजानु निकुञ्चितम् ।
अर्धसूचीं विक्षिप्तमुद्वृत्ताक्षिप्तके तथा ॥२२३॥
करिहस्तं कटिच्छेदमङ्गहारे स्वलातके ।
निकुट्य वक्षसि करावूर्ध्वजानु प्रयोजयेत् ॥२२४॥
आक्षिप्तं स्वस्तिकं कृत्वा त्रिकं तु परिवर्तयेत् ।
उरोमण्डलकौ हस्तौ नितम्बं करिहस्तकम् ॥२२५॥
कटिच्छेदस्तथा चैव पार्श्वच्छेदे विधीयते ।
सूचीं वामपदं दद्यात् विद्युद्भ्रान्तं च दक्षिणम् ॥२२६॥
दक्षिणेन पुनः सूची विद्युद्भ्रान्तश्च वामतः ।
परिच्छिन्नं तथा चैवं त्रिकं तु परिवर्तयेत् ॥२२७॥
लताख्यं सकटिच्छेदं विद्युद्भ्रान्तश्च स स्मृतः ।
कृत्वा नूपुरपादं तु सव्यवामौ प्रलम्बितौ ॥२२८॥

217-220 (B 220b 223a ; G 216-218) 220-222 (B 223b-225a ; G 219-220)
222 224 (B 225b-227a , G 221-222) 224 226 (B 227b-229a ; G 223 224)
226-228 (B 229b-231a , G 225-226)

करौ पार्श्वे ततस्ताभ्यां विक्षिप्तं संप्रयोजयेत् ।
ताभ्यां सूची तथा चैव त्रिकं तु परिवर्तयेत् ॥२२९॥
लतारव्यं सकटिच्छेदं कुर्यादुद्वृत्तके सदा ।
आलीढव्यंसितौ हस्तौ बाहुशीर्षे निकुट्टयेत् ॥२३०॥
नूपुरश्चरणो वामः तथालातश्च दक्षिणः ।
तेनैवाक्षिप्तकं कुर्याद् उरोमण्डलकौ करौ ॥२३१॥
करिहस्तं कटिच्छेदं त्वालीढे संप्रयोजयेत् ।
हस्तं तु रेचितं कृत्वा पार्श्वमानम्य रेचयेत् ॥२३२॥
पुनस्तेनैव योगेन गात्रमुन्नम्य रेचयेत् ।
कार्यं नूपुरपादं च भुजङ्गत्रासित तथा ॥२३३॥
रेचितं करणं कुर्यादुरोमण्डलमेव च ।
कटिच्छेदन्तु कर्तव्यं ह्यङ्गहारे तु रेचिते ॥२३४॥
नूपुरं करणं कृत्वा त्रिक तु परिवर्तयेत् ।
व्यंसितेन तु हस्तेन त्रिकं चैव विवर्तयेत् ॥२३५॥
पादं चालातकं कृत्वा सूचीं तत्रैव योजयेत् ।
करिहस्तं कटिच्छेदं कुर्यादाच्छुरिते सदा ॥२३६॥
रेचितौ स्वस्तिकौ पादौ रेचितौ स्वस्तिकौ करौ ॥
कृत्वा विश्लेषमेव तु तेनैव विधिना पुनः ॥२३७॥
पुनरुत्क्षेपणं चैव रेचितैरेव कारयेत् ।
चक्रुत्ताक्षिप्तकं चैव उरोमण्डलमेव च ॥२३८॥
नितम्बं करिहस्तं च कटिच्छिन्नं तथैव च ।
आक्षिप्तरेचिते ह्येष करणानां विधिः स्मृतः ॥२३९॥
विक्षिप्त करणं कृत्वा हस्तपादं मुखानुगम् ।
वामसूचीकरं कृत्वा विक्षिपेद् वामकं करम् ॥२४०॥

228-230 (B 231b-233a , G 227 228). 230-232 (B.233b-235a ; G 229-230). 232-234 (B 235b-237 ; G.231-232) [1] C. om. 232b 235-236 (B 238 239 ; G.233-234) 237-239 (B 240-242 ; G. 235-237). 240-242 (B 243-245 , G 238-240)

वक्षःस्थं च भवेत्सव्यो वलितं त्रिकमेव च ।
नूपुराक्षिप्तके चैव अर्धस्वस्तिकमेव च ॥२४१॥
नितम्बं करिहस्तं च स्यादुरोमण्डलं तथा ।
कटिच्छेदं च कर्तव्यं मभ्रान्ते नृत्तयोक्तृभिः ॥२४२॥
अपक्रान्तक्रमं कृत्वा व्यंसितं हस्तमेव च ।
कुर्यादुद्वेष्टितं चैव अर्धसूची तथैव च ॥२४३॥
विक्षिप्तं सकटिच्छेदमुद्वृत्ताक्षिप्तके तथा ।
करिहस्तं कटिच्छिन्नं कर्तव्यमपसर्पिते ॥२४४॥
कृत्वा नूपुरपादं च द्रुतमाक्षिप्य च क्रमम् ।
पादस्य चानुगौ हस्तौ त्रिकं तु परिवर्तयेत् ॥२४५॥
निकुट्य करपादं चाप्युरोमण्डलकं पुनः ।
करिहस्तं कटिच्छेदं कार्यमर्धनिकुट्टके ॥२४६॥
द्वात्रिंशदेते संप्रोक्तास्त्वङ्गहारा द्विजोत्तमाः ।
चतुरो रेचकांश्चैव गदतो मे निबोधत ॥२४७॥
पादरेचक एकः स्यात् द्वितीयः कटिरेचकः ।
कररेचकस्तृतीयस्तु चतुर्थः कण्ठरेचकः ॥२४८॥
रेचिताख्यः पृथग्भावे वलने चाभिधीयते ।
उद्वाहनात् पृथग्भावाद्वलनाच्चापि रेचकः ॥२४९॥
पार्श्वात् पार्श्वे तु गमनं स्खलितैश्चलितैः पदैः ।
विविधश्चैव पादस्य पादरेचक उच्यते ॥२५०॥
त्रिकस्योद्वर्तनं चैव कटीचलनमेव च ।
तथापसर्पणं चैव कटीरेचक उच्यते ॥२५१॥
उद्वर्तनः परिक्षेपो विक्षेपपरिवर्तनम् ।
विसर्पणं च हस्तस्य हस्तरेचक उच्यते ॥२५२॥

243-244 (B 246-247, G 241-242) 245-246 (B 248-249; G 243-244)
247 (B 250, G 245) 248 (B 251, G 246) 249 (B 252, G 247)
250 (B 253; G 248) 251 (B 254, G 249) 252 (B 255, G 250)

उद्वाहनं सन्नमनं तथा पार्श्वस्य सन्नतिः ।
भ्रमणं चापि विज्ञेयो ग्रीवाया रेचको बुधैः ॥२५३॥
रेचकैरङ्गहारैश्च नृत्यन्तं वीक्ष्य शंकरम् ।
[1]सुकुमारप्रयोगेण नृत्यति स्म च पार्वती ॥२५४॥
मृदङ्गभेरीपटहैः [2]झञ्झाडिंडिमगोमुखैः ।
पणवैर्दर्दुरैश्चैव नानातोद्यैः प्रवादितैः ॥२५५॥
दक्षयज्ञे विनिहते सन्ध्याकाले महेश्वरः ।
नानाङ्गहारैः [3]प्रानृत्यल्लयतालवशानुगैः ॥२५६॥
पिण्डीबन्धास्ततो दृष्ट्वा नन्दीभद्रमुखा गणाः ।
चक्रुर्नामानि पिण्डीनां बन्धांश्चैव सलक्षणान् ॥२५७॥
ऐश्वरी वृषपिण्डी च नन्दिनश्चापि [1]पट्टिमी ।
चण्डिकाया भवेत् पिण्डी तथा वै सिंहवाहिनी ॥२५८॥
तार्क्ष्यपिण्डी भवेद्विष्णोः पद्मपिण्डी स्वयंभुवः ।
शक्रस्यैरावती पिण्डी झषापिण्डी तु मान्मथी ॥२५९॥
शिखिपिण्डी कुमारस्य[2] रू[लु]पिण्डी भवेच्छ्रियः ।
धारापिण्डी च जाह्नव्याः पाशपिण्डी यमस्य तु ॥२६०॥
वारुणी च नदीपिण्डी याक्षी स्याद्धनदस्य च ।
हलपिण्डी बलस्याथ सर्पपिण्डी तु भोगिनाम् ॥२६१॥
[3]गाणेश्वरी महापिण्डी दक्षयज्ञविमर्दिनी ।
त्रिशूलाकृतिसंस्थाना रौद्री स्यादन्धकद्विषः ॥२६२॥
एवमन्यास्वपि तथा देवतासु यथाक्रमम् ।
ध्वजभूताः प्रयोक्तव्याः पिण्डीबन्धाः स्वचिह्निताः ॥२६३॥
रेचकाश्चाङ्गहाराश्च पिण्डीबन्धास्तथैव च ।
सृष्ट्वा भगवता दत्तास्तण्डवे मुनये तदा ॥२६४॥

253 (B.256, 251) 254-255 (B 257-258; G.252-253). [1] B सुकुमार-प्रयोगेण नृत्यन्ती वेदं पार्वतीम [2] B. भञ्झा. Bp झञ्झा 256 (B.259, G.254). 257 (B.260 G 255) 258-263 (B 261-266a; G 256-261) [1] B. पट्टमी [2] Bd. रूप (=रूप्य) [3]B. om. 262. 263-264 (B.265b-267a; G 262-263.

तेनापि हि ततः सम्यग्गानभाण्डसमन्वितः ।
नृत्तप्रयोगः सृष्टो यः स ताण्डव इति स्मृतः ॥२६५॥

[ ऋषय ऊचुः ]

यदा प्राप्त्यर्थमर्थानां तज्ज्ञैरभिनयः कृतः ।
[1]कस्मान्नृत्तं कृतं ह्येतत् कं स्वभावमपेक्षते ॥२६६॥

न गीतकार्थसम्बद्धं न चाप्यर्थस्य भावकम् ।
कस्मान्नृत्तं कृतं ह्येतत् गीतेष्वासारितेषु च ॥२६७॥

[भरत उवाच]

अत्रोच्यते न खल्वर्थं नृत्तं किञ्चिदपेक्षते ।
किन्तु शोभां जनयतीत्यतो नृत्तं प्रवर्तितम् ॥२६८॥

प्रायेण सर्वलोकस्य नृत्तमिष्टं स्वभावतः ।
मङ्गल्यमिति कृत्वा च नृत्तमेतत् प्रकीर्तितम् ॥२६९॥

विवाहप्रसवावाहप्रमोदाभ्युदयादिषु ।
विनोदकरणं चैव नृत्तमेतत् प्रकीर्तितम् ॥२७०॥

अतश्चैव प्रतिक्षेपाः भूतसङ्घैः प्रकीर्तिता ।
ये गीतकादौ युज्यन्ते सम्यङ्नृत्तविभागकाः ॥२७१॥

देवेन चापि संप्रोक्तस्तण्डुस्ताण्डवपूर्वकम्[1] ।
गीतप्रयोगमाश्रित्य नृत्तमेतत् प्रवर्त्यताम् ॥२७२॥

प्रायेण ताण्डवविधिर्देवस्तुत्याश्रयो भवेत् ।
सुकुमारप्रयोगस्तु शृङ्गाररससंभवः ॥२७३॥

तस्य तण्डुप्रयुक्तस्य ताण्डवस्य विधिक्रियाम् ।
वर्धमानकमासाद्य संप्रवक्ष्यामि लक्षणम् ॥२७४॥

265 (B 267b-268a, G 264) 266 (B 268b-269a, G.265) [1]B C. तस्मात्
267 (B 269b-270a, G 266) 268 (B 270b-271a; G 267) 269 (B 271b-272a, G 268) 270 (B 272b-273a; G 269) 271 (B 273b-274a; G 270) 272 (B 274b-275a), G 271 [1] Ag तण्डोक्तपूर्वकम् Bg. ताण्डवपूर्वकम् 273 (B 275b-276a, G 272) 274 (B 276b-277a, G 273).

कलानां वृद्धिमासाद्य ह्यक्षराणां च वर्धनात् ।
लयस्य वर्धनाच्चापि वर्धमानकमुच्यते ॥२७५॥
कृत्वा कुतपविन्यासं यथावद्द्विजसत्तमाः ।
आसारितप्रयोगस्तु ततः कार्यः प्रयोक्तृभिः ॥२७६॥
तत्र चोपोहनं कृत्वा तन्त्रीभाण्डसमन्वितम् ।
कार्यः प्रवेशो नर्तक्या भाण्डवाद्यसमन्वितः ॥२७७॥
विशुद्धकरणायां तु जात्यां वाद्यं प्रयोजयेत् ।
गत्या वाद्यानुसर्पिण्या ततश्चारीं प्रयोजयेत् ॥२७८॥
वैशाखस्थानकेनेह सर्वरेचकचारिणी ।
पुष्पाञ्जलिधरा भूत्वा प्रविशेद्रङ्गमण्डपम् ॥२७९॥
पुष्पाञ्जलिं विसृज्याथ रङ्गपीठं परीत्य च ।
प्रणम्य देवताभ्यस्तु ततोऽभिनयमाचरेत् ॥२८०॥
यत्राभिनेयं गीतं स्यात् तत्र वाद्यं न योजयेत् ।
अङ्गहारप्रयोगे तु भाण्डवाद्यं प्रयोजयेत् ॥२८१॥
समं रक्तं विभक्तं च स्फुटं शुद्धप्रहारजम् ।
नृत्ताङ्गग्राहि वाद्यज्ञैर्योज्यं वाद्यं तु ताण्डवे ॥२८२॥
प्रयुज्य [1]गीतमेवं तु निष्क्रामेन्नर्तकी ततः ।
अनेनैव विधानेन प्रविशन्त्यपराः पुनः ॥२८३॥
अन्याश्चानुक्रमेणाथ पिण्डीं बध्नन्ति ताः स्त्रियः ।
तावत् पर्यस्तकः कार्यो यावत् पिण्डी न बध्यते ॥२८४॥
पिण्डीं बध्वा ततः सर्वा निष्क्रामेयुः स्त्रियस्तु ताः ।
पिण्डीबन्धे तु वाद्यं हि कर्तव्यमिह वादकैः ॥२८५॥
पर्यस्तकप्रमाणेन चित्रौघकरणान्वितम् ।
अथोपवहनं भूयः कार्यं पूर्ववदेव हि ॥२८६॥

275 (B.277b-278a ; G.274) [1] B वर्धनाद्वर्तकोना 276 (B 278b-279a ; G.275). 277 (B 279b-280a ; G.276) 278 (B.280b-281a , G.277) 279 (B 281b 282a , G.278). 280 (B. 282b-283 ; G.279) 281 (B.283b-284a , G.280) 282 (B 284b-285a ; G 281). 283 (B.285b 286a ; G.282) [1] B. गीतवाद्यं, G. वृत्विर्दे; cfe with Bd. गीतंकृत्व. 284 (B 286b-287, G,284a, 280) [1] B G. पिण्डीबन्धे 285-287 (B 287-290a.

ततश्चासारितं भूयो गायनं तु प्रयोजयेत् ।
पूर्वेणैव विधानेन प्रविशेच्चापि नर्तकी ॥२८७॥
गीतकार्थं प्रयोजयेद् द्वितीयामारितस्य तु ।
तदेव तु पुनर्वस्तु नृत्तेनापि प्रयोजयेत् ॥२८८॥
आसारितसमाप्तौ च निष्क्रामेन्नर्तकी ततः ।
पूर्ववत् प्रविशेच्चान्या प्रयोगः स्यात् स एव तु ॥२८९॥
एवं पदे पदे कार्यो विधिरासारितस्य तु ।
भाण्डवाद्यकृतश्चैव तथा गानकृतोऽपि च ॥२९०॥
एकं तु प्रथमं कुर्यात् द्वे द्वितीयं तु वस्तुकम् ।
तिस्रो वस्तु तृतीयं तु चतस्रस्तु चतुर्थकम् ॥२९१॥
पिण्डीना विधयश्चैव चत्वारः समकीर्तिताः ।
पिण्डी शृङ्खलिका चैव लताबन्धोऽथ भेद्यकः ॥२९२॥
पिण्डीबन्धस्तु पिण्डत्वात् गुल्मः शृङ्खलिका भवेत् ।
जालोपनद्धा च लता सनृत्तो भेद्यकः स्मृतः ॥२९३॥
पिण्डीबन्धः कनिष्ठे तु शृङ्खला तु लयान्तरे ।
मध्यमे च लताबन्धो ज्येष्ठे चैवाथ भेद्यकः ॥२९४॥
पिण्डीना द्विविधा योनिर्यन्त्रं भद्रासनं तथा ।
शिक्षा कार्या तथा चैव प्रयोक्तव्या प्रयोक्तृभिः ॥२९५॥
एवं प्रयोगः कर्तव्यो वर्धमाने प्रयोक्तृभिः ।
गीतानां छन्दकानां च भूयो वक्ष्याम्यहं विधिम् ॥२९६॥
यानि वस्तूनि बद्धानि यानि चाङ्गकृतानि च ।
गीतानि तेषां वक्ष्यामि प्रयोगं नृत्तवाद्ययोः ॥२९७॥
तत्रावतरणं कार्यं नर्तक्याः सार्वभाण्डिकम् ।
क्षेपप्रतिक्षेपकृतं तन्त्रीगानसमन्वितम् ॥२९८॥

G 284b-286) 288 (B 290b-291a, G 287). 289 (B 291b-292a, G 288) 290 (B 292b-293a, G 289) 291 (B 293b-294a; G 290) 292 (B 294b 295a; G 291) 293 (B 295b-296a; G 292) 294 (B 296b-297a; G 293) 295 (B 297b-298a; G 294). 296-297 (B 298b-300a; G 295-296a) 298 (B 300b-301a; G 297)

प्रथमं त्वभिनेयं तु गीतके सर्ववस्तु तत् ।
तदेव च पुनर्वस्तु नृत्तेनापि प्रदर्शयेत् ॥२९९॥
यो विधिः पूर्वमुक्तस्तु नृत्ताभिनयवादिते ।
आसारितविधौ स स्याद् गीतानां वस्तुकेष्वपि ॥३००॥
एष वस्तुनिबन्धानां गीतकानां विधिः स्मृतः ।
शृणुताङ्गनिबद्धानां गीतानामपि लक्षणम् ॥३०१॥
य एव वस्तुषु विधिर्नृत्ताभिनयवादिते ।
स सर्व एव कर्तव्यश्छन्दकेषु प्रयोक्तृभिः ॥३०२॥
वाद्यं गुर्वक्षरकृतं तथाऽल्पान्तरमेव च ।
मुखे सोपोहने कुर्याद्वर्णानां विप्रकर्षकः ॥३०३॥
यदा गीतवशादङ्गं भूयो भूयो निवर्तते ।
तत्राद्यमभिनेयं स्याच्छेष नृत्तेन योजयेत् ॥३०४॥
यदा गीतवशादङ्गं भूयो भूयो निवर्तते ।
त्रिपाणिलयसंयुक्तं तत्र वाद्यं प्रयोजयेत् ॥३०५॥
यथा लयस्तथा वाद्यं कर्तव्यं त्वङ्गसंश्रयम् ।
तत्त्वं चानुगतं चापि ओघं च करणान्वितम् ॥३०६॥
[1]स्थिते तत्त्वं प्रयोक्तव्यं मध्ये चानुगतं भवेत् ।
द्रुते चौघः प्रयोक्तव्यस्त्वेष वाद्यगतो विधिः ॥३०७॥
छन्दोगीतकमासाद्य त्वङ्गानि परिवर्तयेत् ।
एष कार्यो विधिर्नित्यं नृत्ताभिनयवादिते ॥३०८॥
यानि वस्तूनि बद्धानि तेषामन्ते ग्रहो भवेत् ।
अङ्गानां तु परावृत्तावादावेव ग्रहो मतः ॥३०९॥
एवमेष विधिः कार्यो गीतेष्वासारितेषु च ।
देवस्तुत्याश्रयं ह्येतत् सुकुमारं निबोधत ॥३१०॥

299 (B.301b-302a ; G 297). 300 (B.302b-303a , G 298). 301 (B 303b-304a ; G.299). 302 (B 304b-305a ; G 300) 303 (B 305b-306a ; G.301). 304-305 (B 306b-308a ; G 302-303a) [1] B. om 305a. 305-308 (B 308b-310 ; G 303b-306). [1] B. स्थिर. [2] भूयसेव 309 (B 311 , G 307) 310 (B 312 ,G 308).

स्त्रीपुंसयोस्तु संलापो यस्तु कामसमुद्भवः ।
तज्ज्ञेयं सुकुमारं हि शृङ्गाररससम्भवम् ॥३११॥
यस्यां यस्यामवस्थायां नृत्तं योज्यं प्रयोक्तृभिः ।
सदंगीतकसम्बन्धं तच्च मे शृणुत द्विजाः ॥३१२॥
अङ्गवस्तुनिवृत्तौ च तथा वर्णनिवृत्तिषु ।
तथा चाभ्युदयस्थाने नृत्तं तज्ज्ञः प्रयोजयेत् ॥३१३॥
यत्र संदृश्यते किञ्चिद् दंपत्योर्मदनाश्रयम् ।
[1]तत्र नृत्तं प्रयोक्तव्यं प्रहर्षार्थगुणोद्भवम् ॥३१४॥
यत्र सन्निहिते कान्ते ऋतुकालादिदर्शनम् ।
गीतकार्थाभिसम्बन्धं नृत्तं तत्रापि चेष्यते ॥३१५॥
खण्डिता विप्रलब्धा वा कलहान्तरितापि वा ।
यस्मिन्नङ्के तु युवतिर्नृत्तं तत्र न योजयेत् ॥३१६॥
सखिप्रवृत्ते संलापे तथाऽसन्निहिते प्रिये ।
नहि नृत्तं प्रयोक्तव्यं यस्या वा प्रोषितः प्रियः ॥३१७॥
दूत्याश्रयं यदा तु स्यात् ऋतुकालादिदर्शनम् ।
औत्सुक्यचिन्तासम्बन्धं नृत्तं तत्र न योजयेत् ॥३१८॥
यस्मिन्नङ्के प्रसादं तु गृह्णीयान्नायिका क्रमात् ।
ततः प्रभृति नृत्तं तु शेषेष्वङ्केषु योजयेत् ॥३१९॥
देवस्तुत्याश्रयगतं यदङ्गं तु भवेदिह ।
माहेश्वरैरङ्गहारैरुद्धतैस्तत् प्रयोजयेत् ॥३२०॥
यत्र शृङ्गारसंबद्धं गानं स्त्रीपुरुषाश्रयम् ।
देवीकृतैरङ्गहारैर्ललितैस्तत् प्रयोजयेत् ॥३२१॥
चतुष्पदा नर्कुटके खञ्जके परिगीतके ।
विधानं सम्प्रवक्ष्यामि भाण्डवाद्यविधिं प्रति ॥३२२॥

311 (B 313, G 309) 312 (B 314; G 310) 313 (B 315, G 311) 314 (B 316, G 312) [1] B दतु 315 (B 317, G 313) 316 (B 318; G. 314) 317 (B. 319; G 315) 318 (B 320; G 316) 319 (B 321; G 317). 320 (B 322, G 318) 321 (B 323; G 319). 322 (B 324; G. 320).

[1] B G. भावकृत Ag (p 204) म न्द र य

सञ्जनकुटसंयुक्ता भवेद्या तु चतुष्पदा ।
पादान्ते सन्निपाते तु तस्या भाण्डग्रहो भवेत् ॥३२३॥
या ध्रुवा छन्दसा युक्ता समपादा समाक्षरा ।
तस्याः पादावसाने तु प्रदेशिन्या ग्रहो भवेत् ॥३२४॥
कृत्वैकं परिवर्तं तु गानस्याभिनये पुनः ।
पुनः पादनिवृत्तौ तु भाण्डवाद्यं नियोजयेत् ॥३२५॥
अङ्गवस्तुनिवृत्तेन वर्णान्तरनिवृत्तिषु ।
तथोपस्थापने चैव भाण्डवाद्यं प्रयोजयेत् ॥३२६॥
येऽपि चान्तरमार्गाः स्युस्तन्त्र्या वाककरणैः कृताः ।
तेषु सूची प्रयोक्तव्या भाण्डेन सह ताण्डवे ॥३२७॥
महेश्वरस्य चरितं य इदं सम्प्रयोजयेत् ।
सर्वपापविशुद्धात्मा शिवलोकं स गच्छति ॥३२८॥
एवमेष विधिः सृष्टस्ताण्डवस्य प्रयोगतः[1] ।
भूयः किं कथ्यतां विप्रा नाट्ययोगविधिं प्रति ॥३२९॥

इति भारतीये नाट्यशास्त्रे ताण्डवलक्षणं नाम चतुर्थोऽध्यायः ।

323 (B 325 ; G. 321) 324 (B 326 ; G 322) 325 (B 327 , G 323).
326 (B 328 , G. 324) 327 (B 329 , G 325) 328 (B 330 , G 326)
329 (B 331 ; G.327) [1] B प्रयोगवित्

# पञ्चमोऽध्यायः

भरतस्य वचः श्रुत्वा नाट्यसन्तानकारणम् ।
पुनरेवाब्रुवन् वाक्यमृषयो हृष्टमानसाः ॥१॥
यथा नाट्यस्य वै जन्म जर्जरस्य च सम्भवः ।
विघ्नानां शमनं चैव दैवतानां च पूजनम् ॥२॥
त्वत्तः श्रुतं गृहीतं च गृहीत्वा चावधारितम् ।
निखिलेन यथातत्त्वमिच्छामो वेदितुं पुनः ॥३॥
पूर्वरङ्गं महातेजः सर्वलक्षणसंयुतम् ।
यथा बुध्यामहे ब्रह्मंस्तथा व्याख्यातुमर्हसि ॥४॥
तेषां तु वचनं श्रुत्वा मुनीनां भरतो मुनिः ।
प्रत्युवाच पुनर्वाक्यं पूर्वरङ्गविधिं प्रति ॥५॥
पूर्वरङ्गं महाभागा गदतो मे निबोधत ।
पादभागाः कलाश्चैव परिवर्तास्तथैव च ॥६॥
यस्माद्रङ्गप्रयोगोऽयं पूर्वमेव प्रयुज्यते ।
तस्मादयं पूर्वरङ्गो विज्ञेयोऽत्र द्विजोत्तमाः ॥७॥
अस्याङ्गानि तु कार्याणि यथावदनुपूर्वशः ।
तन्त्रीभाण्डसमायोगैः पाठ्ययोगकृतैस्तथा ॥८॥
प्रत्याहारोऽवतरणं तथा ह्यारम्भ एव च ।
आश्रावणा वक्त्रपाणिस्तथा च परिघट्टना ॥९॥
संघोटना ततः कार्या मार्गासारितमेव च ।
ज्येष्ठमध्यकनिष्ठा च तथैवासारितक्रिया ॥१०॥
एतानि च बहिर्गीतान्यन्तर्यवनिकागतैः ।
प्रयोक्तृभिः प्रयोज्यानि तन्त्रीभाण्डकृतानि तु ॥११॥

1-11 (B G *same*)

ततश्च सर्वकुतपैर्युक्तान्यन्यानि कारयेत् ।
विगाह्य वै यवनिकां नृत्तपाठ्यकृतानि च ॥१२॥
गीतानां मद्रकादीनामेकं योज्यं तु गीतकम् ।
वर्धमानमथापीह ताण्डवं यत्र युज्यते ॥१३॥
ततश्चोत्थापनं कार्यं परिवर्तनमेव च ।
नान्दी शुष्कापकृष्टा च रङ्गद्वारं तथैव च ॥१४॥
चारी चैव ततः कार्या महाचारी तथैव च ।
त्रिकं प्ररोचना चापि पूर्वरङ्गे भवन्ति हि ॥१५॥
एतान्यङ्गानि कार्याणि पूर्वरङ्गविधौ तु च ।
एतेषां लक्षणमहं व्याख्यास्याम्यनुपूर्वशः ॥१६॥
कुतपस्य तु विन्यासः प्रत्याहार इति स्मृतः ।
यथावतरणं प्रोक्तं गायकानां निवेशनम् ॥१७॥
परिगीतक्रियारम्भ आरम्भ इति कीर्तितः ।
आतोद्यरञ्जनार्थं तु भवेदाश्रावणा विधिः ॥१८॥
वाद्यवृत्तिविभागार्थं वक्त्रपाणिर्विधीयते ।
तन्त्रीयोजकरणार्थं तु भवेच्च परिघट्टना ॥१९॥
तथा पाणिविभागार्थं भवेत् संघोटनाविधिः ।
तन्त्रीभाण्डसमायोगात् मार्गासारितमिष्यते ॥२०॥
कलापातविभागार्थं भवेदासारितक्रिया ।
कीर्तनाद्देवतानां च ज्ञेयो गीतविधिस्तथा ॥२१॥
अतः परं प्रवक्ष्यामि चोत्थापनविधिक्रियाम् ।
यस्मादुत्थापयन्त्यादौ प्रयोगं नान्दिपाठकाः ॥२२॥
पूर्वमेव तु रङ्गेऽस्मिन् तस्मादुत्थापनं स्मृतम् ।
यस्माच्च लोकपालानां परिवृत्य चतुर्दिशम् ॥२३॥
वन्दनानि प्रकुर्वन्ति तस्मात्तु परिवर्तनम् ।
आशीर्वचनसंयुक्ता नित्यं यस्मात् प्रवर्तते ॥२४॥

1- 21 (B.G. *same*). 22-23(B 22-23a ; G 21c-22). 23-24 (B 23b-24a , G 23).

देवद्विजनृपादीनां तस्मान् नान्दीति संज्ञिता ।
अत्र शुष्काक्षरैरेव ह्यवकृष्टा ध्रुवा यतः ॥२५॥
तस्माच्छुष्कापकृष्टेयं जर्जरश्लोकदर्शिता ।
यस्मादभिनयस्तत्र प्रथमं ह्यवतार्यते ॥२६॥
रङ्गद्वारमतो ज्ञेयं वागङ्गाभिनयात्मकम् ।
शृङ्गारस्य प्रचरणाच्चारी संपरिकीर्तिता ॥२७॥
रौद्रप्रचरणाच्चापि महाचारीति कीर्तिता ।
विदूषकः सूत्रधारस्तथा वै पारिपार्श्विकः ॥२८॥
यत्र कुर्वन्ति सञ्जल्पं तच्चापि त्रिगतं स्मृतम् ।
उपक्षेपेण कार्यस्य हेतुयुक्तिसमाश्रया ॥२९॥
सिद्धेनामन्त्रणा या तु विज्ञेया सा प्ररोचना ।
अतः परं प्रवक्ष्यामि ह्याश्रावणविधिक्रियाम् ॥३०॥
बहिर्गीतविधौ सम्यगुत्पत्तिं कारणं तथा ।
चित्रदक्षिणवृत्तौ तु सप्तरूपे प्रवर्तिते ॥३१॥
सोपोहने सनिर्गीते देवस्तुत्यभिनन्दिते ।
नारदाद्यैश्च गन्धर्वैः सभायां देवदानवाः ॥३२॥
निर्गीतं श्राविताः सम्यक् लयतालसमन्वितम् ।
तच्छ्रुत्वा तु शुभं गानं देवस्तुत्यभिनन्दितम् ॥३३॥
अभवन् क्षुभिताः सर्वे मात्सर्याद्दैत्यराक्षसाः ।
संप्रधार्य च तेऽन्योन्यमित्यवोचन्व्यवस्थिताः ॥३४॥
निर्गीतं तु सवादित्रमिदं गृह्णीमहे वयम् ।
सप्तरूपेण सन्तुष्टा देवाः कर्मानुकीर्तनात् ॥३५॥
एवं गृह्णीम निर्गीतं तुष्यामोऽत्रैव वै वयम् ।
ते तत्र तुष्टा दैत्यास्तु साधयन्ति पुनः पुनः ॥३६॥

24-25 (B 24b-25a; G 24) [1] B G read after this नान्दीपदान्तरेष्वेषु ह्येवं पूर्वरङ्गे वर्धमानं प्रयोज्य प्राकृतलक्षणम् । एतेषु गीतप्रयोगानन्तरं शुद्धेऽपि पूर्वरङ्गे वर्धमानप्रयोगः क्रियते. 25-26 (B 26, G. 25) 26-27 (27, G 26) 27-28 (B 28; C.27) 28-29 (B 29; G.28). 29-30 (B.30; G 29 30-31 (B 31; G.30) 31-32 (B. 32-33; G.31-32. 33-34 (B 34; G 33) 34-36 (B 35-37a; G 34-36a)

तुष्टाश्चापि ततो देवाः प्रत्यभाषन्त नारदम् ।
एते तुष्यन्ति निर्गीते दानवाः सह राक्षसैः ॥३७॥
प्रणश्यतु प्रयोगोऽयं कथं वै मन्यते भवान् ।
देवानां वचनं श्रुत्वा नारदो वाक्यमब्रवीत् ॥३८॥
धातुवाद्याश्रयकृतं निर्गीतं मा प्रणश्यतु ।
किन्तूपोहनसंयुक्तं धातुवाद्यविभूषितम् ॥३९॥
भविष्यतीदं निर्गीतं सप्तरूपविधानतः ।
निर्गीतेनावबद्धास्तु दैत्यदानवराक्षसा ॥४०॥
न क्षोभं न विघातं च करिष्यन्तीह तोषिता ।
एतन्निर्गीतमेवं तु दैत्यानां स्पर्धया द्विजा ॥४१॥
देवानां बहुमानेन बहिर्गीतमिदं स्मृतम् ।
धातुभिश्चित्रवीणायां गुरुलघ्वक्षरान्वितम् ॥४२॥
वर्णालङ्कारसंयुक्तं प्रयोक्तव्यं बुधैरथ ।
निर्गीतं गीयते यस्मादपदं वर्णयोजनात् ॥४३॥
असूयया च देवानां बहिर्गीतमिदं स्मृतम् ।
निर्गीतं यन्मया प्रोक्तं सप्तरूपसमन्वितम् ॥४४॥
उत्थापनादिकं यच्च तस्य कारणमुच्यते ।
प्रत्याहारे यातुधाना प्रीयन्ते सह पन्नगैः ॥४५॥
तुष्यन्त्यप्सरसस्तत्र कृतेऽवतरणे द्विजा ।
तुष्यन्त्यपि च गन्धर्वा आरम्भे सम्प्रयोजिते ॥४६॥
आश्रावणायां युक्तायां दैत्यास्तुष्यन्ति सर्वशः ।
वक्त्रपाणौ कृते चैव नित्यं तुष्यन्ति दानवाः ॥४७॥
परिघट्टनायां तुष्टा युक्तायां रक्षसां गणाः ।
संघोटनक्रियायां तु तुष्यन्त्यपि च गुह्यकाः ॥४८॥

37-38 (B.37b-38a ; G 36b-37) 38-41 (B 39-41 , G 38-40) 41-42 (B 42 ; G 41) 42-44 (B.43-44 , G.42-43). 45-54 B 54b-55 46-53 , G.45-53).
[1] G om. 45a

मार्गासारितमासाद्य तुष्टा यक्षा भवन्ति हि ।
गीतकेषु प्रयुक्तेषु देवास्तुष्यन्ति नित्यशः ॥४९॥
वर्द्धमाने प्रयुक्ते तु रुद्रस्तुष्यति सानुगः ।
तथा चोत्थापने युक्ते ब्रह्मा तुष्टो भवेदिह ॥५०॥
तुष्यन्ति लोकपालाश्च प्रयुक्ते परिवर्तने ।
नान्दीप्रयोगेऽथ कृते प्रीतो भवति चन्द्रमाः ॥५१॥
युक्तायामवकृष्टायां प्रीता नागा भवन्ति हि ।
तथा शुष्कावकृष्टायां प्रीतः पितृगणो भवेत् ॥५२॥
रङ्गद्वारे प्रयुक्ते तु विष्णुः प्रीतो भवेदिह ।
जर्जरस्य प्रयोगे तु तुष्टा विघ्नविनायकाः ॥५३॥
तथा चार्यां प्रयुक्तायामुमा तुष्टा भवेदिह ।
महाचार्यां प्रयुक्तायां तुष्टो भूतगणो भवेत् ।५४॥
प्रत्याहारादि चार्यन्तमेतद्दैवतपूजनम् ।
पूर्वरङ्गे मया ख्यातं तथा चाङ्गविकल्पनम् ॥५५॥
देवस्तुष्यति यो येन यस्य यन्मनसः प्रियम् ।
तत्तथा पूर्वरङ्गे तु मया प्रोक्तं द्विजोत्तमाः ॥५६॥
सर्वदैवतपूजार्हं सर्वदैवतपूजनम् ।
धर्म्यं यशस्यमायुष्यं पूर्वरङ्गप्रवर्तनम् ॥५७॥
दैत्यदानवतुष्ट्यर्थं सर्वेषां च दिवौकसाम् ।
निर्गीतानि सगीतानि पूर्वरङ्गकृतानि तु ॥५८॥
निर्गीतानां सगीतानां वर्धमानस्य चैव हि ।
ध्रुवाविधाने वक्ष्यामि लक्षणं कर्म चैव हि ॥५९॥
प्रयुज्य गीतकविधिं वर्धमानं तथैव च ।
गीतकान्ते ततश्चापि कार्या ह्युत्थापनी ध्रुवा ॥६०॥

55 (B 56; G 54) 56 (B 57, G 55). 57-58 (B 58-59; G 56-57. 59-60 (B 61-62, G 59 60) [1]B. reads before this या विद्या यानि शिल्पानि या गतिर्वै चेष्टितम्। लोकालोकस्य भवसदृशं नाटकाख्ये (B 60)

आदौ द्वे च चतुर्थं चाप्यष्टमैकादशे तथा ।
गुर्वक्षराणि जानीयात् पादे ह्येकादशाक्षरे ॥६१॥
चतुष्पदा भवेत् सा तु चतुरस्रा तथैव च ।
चतुर्भिस्सन्निपातैश्च त्रिलया त्रियतिस्तथा ॥६२॥
परिवर्तास्तु चत्वारः पाणयस्त्रय एव च ।
ज्ञात्वा चैव हि विश्लोकास्तांश्च तालेन योजयेत् ॥६३॥
शम्या तु द्विकला कार्या तालो द्विकल एव च ।
पुनश्चैककला शम्या सन्निपातः कलात्रयम् ॥६४॥
एवमष्टकलः कार्यः सन्निपातो विचक्षणैः ।
चत्वारः संनिपातास्तु परिवर्तस्य उच्यते ॥६५॥
पूर्वं स्थितलयं कार्यं परिवर्तो विचक्षणैः ।
तृतीये सन्निपाते तु तस्य भाण्डग्रहो भवेत् ॥६६॥
एकस्मिन् परिवर्ते तु गते प्राप्ते द्वितीयके ।
कार्यं मध्यलये तज्ज्ञैः सूत्रधारप्रवेशनम् ॥६७॥
पुष्पाञ्जलिं समादाय रक्षामङ्गलसंस्कृताः ।
शुद्धवर्णाः सुमनसस्तथा चाद्भुतदृष्टयः ॥६८॥
स्थानं तु वैष्णवं कृत्वा सौष्ठवाङ्गपुरस्कृतम् ।
दीक्षिताः शुचयश्चैव प्रविशेयुः समं त्रयः ॥६९॥
भृङ्गारजर्जरधरौ भवेतां पारिपार्श्वकौ ।
मध्ये तु सूत्रभृक् ताभ्यां वृतः पञ्चपदीं व्रजेत् ॥७०॥
पदानि पञ्च गच्छेयुर्ब्रह्मणो यजनेच्छया ।
पादानां चापि विक्षेपं व्याख्यास्यामि यथाक्रमम्[1] ॥७१॥
त्रितालान्तरविष्कम्भमुत्क्षिप्य चरणं शनैः ।
पार्श्वोत्थानोत्थितश्चैव तन्मध्ये पातयेत् पुनः ॥७२॥

61-63 (B. 63-65 ; G 61-63). 64 (B.66 ; G. 64). 65 (B. 67, G. 65) 66 (B. 68, G 66) 67 (B 69, G 67). 68-69 (B. 70-71 ; G. 68-69). 70 (B 72, G.70). 71 (B.73a ; G. 71) [1] B. om. 71b.

एवं [1]पञ्चपदीं गत्वा सूत्रधारः सहेतरैः ।
सूच्यां वामपदं दद्यात् विक्षेपं दक्षिणेन तु ॥७३॥
पुष्पाञ्जल्यपवर्गश्च कार्यो ब्राह्मेऽथ मण्डले ।
रङ्गपीठस्य मध्ये तु स्वयं ब्रह्मा प्रतिष्ठितः ॥७४॥
ततः सललितैर्हस्तैरभिवन्द्यः पितामहः ।
अभिवादनानि कार्याणि त्रीणि हस्तेन भूतले ॥७५॥
कालप्रकर्षहेतोश्च पादानां प्रविभागतः ।
सूत्रधारप्रवेशाद्यो वन्दनाभिनयान्तकः ॥७६॥
द्वितीयः परिवर्तस्तु कार्यो मध्यलयाश्रयः ।
अतः परं तृतीये तु मण्डलस्य प्रदक्षिणम् ॥७७॥
प्रवेशाचमनं चैव जर्जरग्रहणं तथा ।
उत्थाय मण्डलात् तूर्णं दक्षिणं पादमुद्धरेत् ॥७८॥
तेनैव वेधं कुर्वीत विक्षेपं वामकेन च ।
पुनश्च दक्षिणं पादं पार्श्वसंस्थं समुद्धरेत् ॥७९॥
ततश्च वामवेधस्तु विक्षेपो दक्षिणस्य तु ।
इत्यनेन विधानेन सम्यक् कृत्वा प्रदक्षिणम् ॥८०॥
भृङ्गारधारमाहूय शौचं चापि समाचरेत् ।
यथान्यायं तु कर्तव्या तेन ह्याचमनक्रिया ॥८१॥
आत्मप्रोक्षणमेवाद्भिः कर्तव्यं तु यथाक्रमम् ।
प्रयत्नकृतशौचेन सूत्रधारेण यत्नतः ॥८२॥
सन्निपातसमं ग्राह्यो जर्जरो विघ्नजर्जरः ।
प्रदक्षिणाद्यो विज्ञेयो जर्जरग्रहणान्तकः ॥८३॥
तृतीयः परिवर्तस्तु विज्ञेयो द्वे द्रुते लये ।
गृहीत्वा जर्जरं चाष्टौ कला जप्यं प्रयोजयेत् ॥८४॥

72 (B. 74, G 72) 73 (B 75, G 73) [1] B विद्युत्पदी 74 (B. 76, G 74). 75-77 (B. 77-79a, G 74c-76) 77-78 (B 79bc, G 77) 78-80 (B 80-81; G 78-79). 80-83 (B. 82-84, G 80-82). 83-84 (B 85; G 83).

वामवेधस्ततः कार्यो विक्षेपो दक्षिणेन तु ।
ततः पञ्चपदीं चैव गच्छेत्तु कृतपोन्मुखः ॥८५॥
वामवेधस्तु तत्रापि विक्षेपो दक्षिणस्य च ।
जर्जरग्रहणाद्योऽयं कुतपाभिमुखान्तग[1] ॥८६॥
चतुर्थः परिवर्तस्तु विज्ञेयो वै द्रुते लये ।
करपादनिपातास्तु भवन्त्यत्र तु षोडश ॥८७॥
त्र्यस्रे पाता हि द्वादश भवन्ति करपादजा ।
वन्दनान्यथ कार्याणि त्रीणि हस्तेन भूतले ॥८८॥
आत्मप्रोक्षणमद्भिश्च त्र्यस्रे नैव विधीयते ।
एवमुत्थापनं कार्यं ततश्च परिवर्तनम् ॥८९॥
[1]चतुरस्रे लये मध्ये सन्निपातैस्तथाष्टभिः ।
यस्यां लघूनि सर्वाणि केवलं निधनं गुरु ॥९०॥
भवेदतिजगत्यां तु सा ध्रुवा परिवर्तनी ।
वामकेन तु मार्गेण वाद्येनानुगतेन च ॥९१॥
ललितैः पादविन्यासैः वन्द्याद् देवान् यथादिशम् ।
द्विकलं पादपतनं पादचार्यां विधीयते ॥९२॥
एकैकस्यां दिशि तथा सन्निपातद्वयं भवेत्[1] ।
वामपादेन वेधस्तु कर्तव्यो नृत्तयोक्तृभि ॥९३॥
द्वितालान्तरविष्कम्भो विक्षेपो दक्षिणस्य तु ।
ततः पञ्चपदीं गच्छेदतिक्रान्तैः पदैरथ ॥९४॥
ततोऽभिवादनं कुर्याद्देवतानां यथादिशम् ।
वन्देत प्रथमं पूर्वां दिशं शक्राधिदैवताम् ॥९५॥
द्वितीयां दक्षिणामाशां वन्देत यमदैवताम् ।
वन्देत पश्चिमामाशां ततो वरुणदैवताम् ॥९६॥

84-87 (B. 86-88 ; G 84-86) [1] B कुतपो निगमान्तक. 87-88 (B. 89, G 87) 88-89 (B 90 ; G 88) 89 90 (B.91 ; G 89) [1] B G चतुरस्र. 90-91 (B. 92 ; G 90) [1] G. परिवर्तिनी 91-92 (B 93 ; G 91) [1] G वन्दा देवा. 92-93 (B 94a ; G 92) [1] B om 93a 93-94 (B 94b-95a ; G 93) 94-95 (B 95bc-96a ; G 94) 95 96 (B 96-97a ; G.95-96a)

चतुर्थीमुत्तरामाशां वन्देत धनदाश्रयाम् ।
दिशां तु वन्दनं कृत्वा वामवेधं प्रयोजयेत् ॥९७॥
दक्षिणेन तु कर्तव्यं विक्षेपपरिवर्तनम् ।
प्राङ्मुखस्तु ततः कुर्यात् पुरुषस्त्रीनपुंसकैः ॥९८॥
त्रिपदैः सूत्रधृग् रुद्रब्रह्मोपेन्द्राभिवन्दनम् ।
दक्षिणं तु पदं नृणां वामं स्त्रीणां प्रकीर्तितम् ॥९९॥
दक्षिणं तु पदं ज्ञेयं नाभ्युत्क्षिप्तं नपुंसकम् ।
वन्देत पौरुषेणेशं स्त्रीपदेन जनार्दनम् ॥१००॥
नपुंसकपदेनापि तथैवाम्बुजसम्भवम् ।
परिवर्तनमेवं स्यात् तस्यान्ते प्रविशेत् ततः ॥१०१
[1]चतुर्थकारः पुष्पाणि प्रगृह्य विधिपूर्वकम् ।
यथावत् तेन कर्तव्यं पूजनं जर्जरस्य तु ॥१०२॥
कुतपस्य च सर्वस्य सूत्रधारस्य चैव हि ।
तस्य भाण्डगत कार्यः वाङ्गीतिपरिक्रमः ॥१०३॥
न तत्र गानं कर्तव्यं तत्र स्तोभक्रिया भवेत् ।
[1]चतुर्थकारः पूजां तु निष्क्रामेत् सम्प्रयुज्य हि ॥१०४॥
ततो गेयापकृष्टा तु चतुरस्रा स्थिता ध्रुवा ।
गुरुप्राया तु सा कार्या तथा चैवार्धपाणिका ॥१०५॥
स्थायिवर्णाश्रयोपेतां कलाष्टकविनिर्मिताम् ।
चतुर्थं पञ्चमं चैव सप्तमं चाष्टमं तथा ॥१०६॥
लघूनि पादे षट्कयान्तु सापकृष्टा ध्रुवा स्मृता ।
सूत्रधारः पठेन्नान्दीं मध्यमं स्वरमाश्रितः ॥१०७।

97-98 (B 97-98 , G 96b-97) 98 100 (B 99-100 ; G 98-99) B. नाभ्युत्क्षिप्तम्. 100-102 (B 101a, 102b , G 100) B repeats 90-91 between the hemistichs. 101-102 (B.103 , G 101) 102-103 (B 104 ; G 102) [1]C. चतुर्थकारः पुष्पाणि. 103-104 (B 105 , G 103) 104-105 (B 106 , G 104) G. चतुर्थकारपूजां, [1]C. चतुर्थकारपूज , 105-106 (B 107 ; G 105),

ततः पदैर्द्वादशभिरष्टाभिर्वाप्यलंकृताम् ।
नमोऽस्तु सर्वदेवेभ्यो द्विजातिभ्यः शुभं तथा ॥१०८॥
जितं सोमेन वै राज्ञा [1]आरोग्यं [2]गोभ्य एव च ।
ब्रह्मोत्तरं तथैवास्तु हता ब्रह्मद्विषस्तथा ॥१०९॥
प्रशास्त्विमां महाराज पृथिवीं च ससागराम् ।
राज्यं प्रवर्धतां चैव रङ्गश्चायं समृध्यताम् ॥११०॥
प्रेक्षाकर्तुर्महान् धर्मो भवतु ब्रह्मभावितः ।
काव्यकर्तुर्यशश्चास्तु धर्मश्चापि प्रवर्धताम् ॥१११॥
इज्यया चानया नित्यं प्रीयन्तां देवता इति ।
नान्दीपदान्तरेष्वेषु ह्येवमस्त्विति नित्यश ॥११२॥
वदेतां सम्यगुक्ताभिर्गीर्भिस्तौ पारिपार्श्वकौ ।
एवं नान्दी विधातव्या यथोक्ता लक्षणैर्मया ॥११३॥
तत शुष्कापकृष्टा स्याज्जर्जरश्लोकदर्शिका ।
नवगुर्वक्षराण्यादौ षट् लघूनि गुरुत्रयम् ॥११४॥
कलाश्चाष्टौ प्रमाणेन पादैर्ह्यष्टाक्षरैः ।
यथा—झण्डे झण्डे दिग्ले दिग्ले । ११५॥
जम्बुक वलितक तेच्चेन्नाम् ।
कृत्वा शुष्कापकृष्टां तु यथावद् द्विजसत्तमाः ॥११६॥
तत श्लोकं पठेदेकं गम्भीरस्वरसंयुतम् ।
देवस्तोत्रं पुरस्कृत्य यस्य पूजा प्रवर्तते ॥११७॥
राज्ञो भक्तिश्च यत्र स्याद्यथा ब्रह्मणस्तव ।
गदित्वा जर्जरश्लोकं रङ्गद्वारे च यत् स्मृतम् ॥११८॥

106-107 (B.108) G om this. 107-108 (B 109 ,G 106) 109 (B 110 ; G.107). [1]C. चारोग्यं भं ग ए च B G हि० गोब्राह्मणाय च. [2]Bn गोभ्य एव च. 109-110 (B 111 ; G 108) 110-112 (B 112-113 , G 109-110) 112-113 (B 114 ; G.111) 113-114 (B 115 ; G-112) 114 115 (B 116 ; G 113) 115-116(B, 117a ; G 114). 116-118 (B 117b-119a , G 115-116).

पठेदन्यं पुनः श्लोकं जर्जरस्य ¹विनामनम् ।
जर्जरं ¹नमयित्वा तु ततश्चारीं प्रयोजयेत् ॥११९॥
पारिपार्श्वकयोश्च स्यात् पश्चिमेनापसर्पणम् ।
अड्डिता चात्र कर्तव्या ध्रुवा मध्यलयान्विता ॥१२०॥
चतुर्भिः सन्निपातैस्तु चतुरस्रा प्रमाणतः ।
आद्यमन्त्यं चतुर्थं च पञ्चमं च तथा गुरु ॥१२१॥
यस्यां तु नागते पादे सा भवेदड्डिता ध्रुवा ।
अस्याः प्रयोगं वक्ष्यामि यथा पूर्वं महेश्वरः ॥१२२॥
सहोमया क्रीडितवान् नानाभावविचेष्टितैः ।
कृत्वावहित्थ स्थानं तु वामं चाधोमुखं भुजम् ॥१२३॥
नाभिप्रदेशे विन्यस्य जर्जरं च [त]लाधूनम्² ।
वामपल्लवहस्तेन पादैस्तालान्तरस्थितैः ॥१२४॥
गच्छेत् पञ्चपदीं चैव सविलासाङ्गचेष्टितैः ।
वामवेधस्तु कर्तव्यो विक्षेपो दक्षिणेन तु ॥१२५॥
ततः शृङ्गारसंयुक्तं पठेच्छ्लोकं विचक्षणः ।
चारीश्लोकं पठित्वा तु कृत्वा च परिवर्तनम् ॥१२६॥
तैरेव च पदैः कार्यं प्राङ्मुखेनापसर्पणम् ।
पारिपार्श्वकयोर्हस्ते न्यस्य जर्जरमुत्तमम् ॥१२७॥
महाचारीं ततश्चैव प्रयुञ्जीत यथाविधि ।
चतुरस्रा ध्रुवा यत्र तथा द्रुतलयाश्रया ॥१२८॥
चतुर्भिः सन्निपातैश्च कलास्त्वष्टौ प्रमाणतः ।
आद्यं चतुर्थमन्त्यं च सप्तमं दशमं गुरु ॥१२९॥

118-119 (B 119b-120a ; G 117). Gb. विनामनम् ¹G. विनामन ; B विनाटनम्. 119-120 (B.120b-121a ; G 118) ¹ Bd Gg मार्जयित्वा, BG. नमयित्वा. 120-121 (B 121b-122a ; G 119) 121-122 (B 122b-123a , G.120). 122-123 (B.123b-124a ; G 121) 123-125 (B 124b-125b, 126 ; G 122-123) ² Mss तलाधूत-. B reads after 123a चतुरश्रमुर कर्तव्यं चितरापि सतक. 125-127 (B.127-128 ; G 124-125) 127-128 (129-130 ; G 126) 128-130 (B 130-131 ; G 127-128)

लघु शेषं [1]ध्रुवायोगे नैष्टुभे चरणे यथा ।
पादतलाहतपातितशैल क्षोभितभूतसमस्तसमुद्रम् ॥१३०॥
ताण्डवनृत्तमिदं प्रलयान्ते पातु हरस्य सदा सुखदायि ।
भाण्डोन्मुखेन कर्तव्यं पार्श्वविक्षेपण ततः ॥१३१॥
सूचीं कृत्वा पुन॰ कुर्याद् विक्षेपपरिवर्तनम् ।
अतिक्रान्तैः सललितैः पदैः द्रुतलयान्वितै॰ ॥१३२॥
त्रितालान्तरमुत्क्षेपै॰ गच्छेत् पञ्चपदीं तत ।
तत्रापि वामवेधस्तु विक्षेपो दक्षिणस्य च ॥१३३॥
तैरेव च पदैः कार्यं प्राङ्मुखेनापसर्पणम् ।
पुन॰ पदानि त्रीण्येव गच्छेत् प्राङ्मुख एव च ॥१३४॥
ततश्च वामवेध स्यात् विक्षेपो दक्षिणस्य च ।
ततो रौद्ररसश्लोक पदमहरणं पठेत् ॥१३५॥
तस्यान्ते तु त्रिपद्याऽथ व्याहरेत् पारिपार्श्वकौ ।
[1]तयोरागमने कार्यं गानं नर्कुटकं बुधैः ॥१३६॥
तत्रापि वामवेधस्तु विक्षेपो दक्षिणस्य च[2] ।
तथा च भारतीभेदे त्रिगतं सम्प्रयोजयेत् ॥१३७॥
विदूषकस्त्वैकपदे सूत्रधारस्मितावहाम् ।
असम्बद्धकथाप्रायां कुर्यात् कथनिकां तथा ॥१३८॥
वितण्डां [1]गण्डसंयुक्तां नालिकां च प्रयोजयेत् ।
कस्तिष्ठति जितं केनेत्यादि काव्यप्ररूपिणीम् ॥१३९॥
*पारिपार्श्विकसञ्जल्पो विदूषकविदूषित॰ ।
*स्थापित सूत्रधारेण त्रिगतं सम्प्रयुज्यते ॥१४०॥

[1] B. ध्रुवापादे चतुर्विंशति भवेत 130-133 (B 132-135a, G 129-132a). 138-139 (B 140; G 137) 134-135 (B 135b-136, G 132b-133) 135-137 (B 137-138a, G.134-135a) [1] B स्योरागमन [2] B G om 137a, this is read by C. 137-138 (B 138b-139, G 135b-136) 139 (B 140 G 137) [1] G दण्डयुक्तां [2] G नामका B नालिका 140 (B 141, G om)

प्ररोचनार्थं कर्तव्या सिद्धेनोपनिमन्त्रणा[1] ।
रङ्गसिद्धौ पुनः कार्यं काव्यवस्तुनिरूपणम् ॥१४१॥
सर्वमेवं विधिं कृत्वा सूचीवेधकृतैरथ ।
पादैरनाविद्धगतैर्निष्क्रामेयुः समं त्रयः ॥१४२॥
एवमेष प्रयोक्तव्यः पूर्वरङ्गो यथाविधि ।
चतुरस्रो द्विजश्रेष्ठास्त्र्यस्रश्चापि निबोधत ॥१४३॥
अयमेव प्रयोगः स्यादङ्गान्येतानि चैव हि ।
तालप्रमाणं संक्षिप्तं केवलं तु विशेषकृत् ॥१४४॥
शम्या तु द्विकला कार्या ताल एककलस्तथा ।
पुनश्चैककला शम्या सन्निपातः कलाद्वयम् ॥१४५॥
अनेन हि प्रमाणेन कलाताललयान्वितः ।
कर्तव्यः पूर्वरङ्गस्तु [1]त्र्यस्रेऽप्युत्थापनादिकः ॥१४६॥
आद्यं चतुर्थं दशममष्टमं नैधनं गुरु ।
यस्यास्तु जागते पादे सा त्र्यस्रोत्थापनी ध्रुवा ॥१४७॥
वाद्यं गतिप्रचारश्च ध्रुवा तालस्तथैव च ।
संक्षिप्तान्येव कार्याणि त्र्यस्रे नृत्तप्रवेदिभिः ॥१४८॥
वाद्यगीतप्रमाणेन कुर्यात्तु गतिविचेष्टितम् ।
विस्तीर्णमथ संक्षिप्तं त्रिप्रमाणविनिर्मितम् ॥१४९॥
हस्तपादप्रचारस्तु द्विकलः परिकीर्तितः ।
चतुरस्रे परिक्रान्ते पाताः स्युः षोडशैव हि ॥१५०॥
त्र्यस्रे तु द्वादशपाता भवन्ति करपादजाः ।
एतत् प्रमाणं निर्दिष्टमुभयोः पूर्वरङ्गयोः ॥१५१॥
केवलं परिवर्ते तु गमने त्रिपदी भवेत् ।
दिग्वन्दने पञ्चपदी चतुरस्रे विधीयते ॥१५२॥

141 (B 142; G 138) [1] B G. सिद्धेनोपनिमन्त्रणम्. 142-144 (B 143-145; G 139-141). 145-146 (B.146-147, G 142-143). [2] B त्र्यस्रेऽप्युत्थापनादिक, G.C. त्र्यस्रोऽप्युत्थापनादिकम् 147 (B 148; G.144). 148 (B 149; G,145) 149 (B.150; G,146) 150-151 (B 151-152a G.147-148a) 151-152 (B-152b-153, G.148b-149) [1] B वाद्यवृन्दे

आचार्यबुद्ध्या कर्तव्यस्त्वङ्गनालक्षणान्ततः ।
तस्मान्न लक्षणं प्रोक्तं पुनरुक्तं भवेद्यतः ॥१५३॥
एवमेव प्रयोक्तव्यः पूर्वरङ्गो द्विजोत्तमाः ।
त्र्यस्रश्च चतुरस्रश्च शुद्धो भारत्युपाश्रयः ॥१५४॥
एवं तावदयं शुद्धः पूर्वरङ्गो मयोदितः ।
चित्रत्वमस्य वक्ष्यामि यथाकार्यं प्रयोक्तृभिः ॥१५५॥
वृत्ते ह्युत्थापने विप्राः कृते च परिवर्तने ।
उदात्तगानैर्गान्धर्वैः परिगीतैः प्रमाणतः[1] ॥१५६॥
चतुर्थकारदत्ताभिः सुमनोभिरलङ्कृते ।
देवदुन्दुभयश्चैव निनदेयुर्भृशं ततः ॥१५७॥
शुद्धाः कुसुममालाभिर्विकिरेयुः समन्ततः ।
अङ्गहारैश्च देवश्च उपनृत्येयुरग्रतः ॥१५८॥
यस्ताण्डवविधिः प्रोक्तो नृत्तं पिण्डीसमन्वितः ।
रेचकैरङ्गहारैश्च न्यासोपन्याससंयुतः ॥१५९॥
नान्दीपदानां मध्ये तु एकैकस्मिन् पृथक् पृथक् ।
प्रयोक्तव्यो विधिः सम्यक् चित्रभावमभीप्सुभिः ॥१६०॥
एवं कृत्वा यथान्यायं शुद्धं चित्रं प्रयत्नतः[1] ।
ततस्त्वन्तर्हिताः सर्वा भवेयुर्दिव्ययोषितः ॥१६१॥
निष्क्रान्तासु च सर्वासु नर्तकीषु ततः परम् ।
पूर्वरङ्गे प्रयोक्तव्यमङ्गजातमतः परम् ॥१६२॥
एवं शुद्धो भवेच्चित्रः पूर्वरङ्गविधानतः ।
कार्यो नातिप्रसङ्गोऽत्र गीतनृत्तविधिं प्रति ॥१६३॥

153 (B 154; G 150). 154 (B 155; G 151) 155 (B 156; 152). 156-157 (B 157-158; G.153-154) [1] B G read the 156b after 157a. 158 (B.159; G.155. 159-160 B 160-161; G 156-157) 161 (B.162a, 163a; G.158). [1] B. reads after 161a तत. पर प्रवृत्तेति नाटक लक्षणान्वितम्. 162 (B.163b-164a; G.159). 163 (B.164b-165a; G.160).

गीते वाद्ये च नृत्ते च प्रवृत्तेऽतिप्रसङ्गतः ।
खेदो भवेत् प्रयोक्तृणां प्रेक्षकाणां तथैव च ॥१६४॥
खिन्नानां रसभावेषु स्पष्टता नोपजायते ।
ततः शेषप्रयोगस्तु न रागजनको भवेत्[1] ॥१६५॥
त्र्यस्रं वा चतुरस्रं वा शुद्धं चित्रमथापि वा ।
प्रयुज्य रङ्गान्निष्क्रामेत् सूत्रधारः सहानुगः[1] ॥१६६॥
प्रयुज्य विधिनैवं तु पूर्वरङ्गं प्रयोगतः ।
स्थापकः प्रविशेत् तत्र सूत्रधारगुणाकृतिः ॥१६७॥
स्थानं तु वैष्णवं कृत्वा सौष्ठवाङ्गपुरस्कृतम् ।
प्रविश्य रङ्गं तैरेव सूत्रधारपदैर्व्रजेत् ॥१६८॥
स्थापकस्य प्रवेशे तु कर्तव्यार्थानुगा ध्रुवा ।
चतुरस्राथवा त्र्यस्रा तत्र मध्यलयाश्रिता ॥१६९॥
कुर्यादनन्तरचारीं देवब्राह्मणशंसिनीम् ।
सुवाक्यमधुरैः श्लोकैर्नानाभावरसान्वितैः ॥१७०॥
प्रसाद्य रङ्गं विधिवत् कवेर्नामानुकीर्तयेत् ।
प्रस्तावनां ततः कुर्यात् काव्यप्रख्यापनाश्रयाम्[1] ॥१७१॥
दिव्ये दिव्याश्रयैर्भूत्वा मानुषे मानुषाश्रयैः ।
दिव्यमानुषसंयोगो दिव्यो वा मानुषोऽपि वा ॥१७२॥
मुखबीजानुसदृशं नानामार्गसमाश्रयम् ।
नानाविधैरुपक्षेपैः काव्योपक्षेपणं भवेत् ॥१७३॥

164 (B 165b-166a ; G 161) 165 (B 166b-167a ; G 162) 1 B reads after this अन्तरेण विना च.गानवाद्यादिस्तुतं भवेत्। लोकशास्त्रानुमतेन तथान्यास्य प्रवर्तन, 166 (B 168b-169a ; G 169) 1 B. adds after this दैवपार्थिवभृत्यानामाशीर्वचन-संयुताम् । कवेर्नाम गुणोपेतां वस्तूद्देशप्रदायिकाम् । सुप्रवर्णपदोपेतां छन्दोभिरलंकृताम् । चन्द्रस्थैर्विचित्रैः संस्थः कुर्यादाश्रावणां तत । आशीर्वचनमार्गे च नान्दीं कृत्वा स सूत्रधृत् । पुन प्रविश्य रङ्गं तु कुर्यात् प्रस्तावनां तत. 167 (B 172b-173a ; G 164). 168 (B.173b-174a ; G.165). 169 (174b-175a ; G.166) 170 (B 175b-176a ; G 167). 171 (B 176b-1 B. adds after this उद्घात्यकादि कर्तव्यं काव्योपक्षेपणाश्रयम्. 172-173 (B.178-179 ; G.169-170).

प्रस्ताव्यैवं तु निष्क्रामेत् काव्यप्रस्तावकस्ततः ।
एवमेव प्रयोक्तव्यः पूर्वरङ्गो यथाविधि ॥१७४॥
य इमं पूर्वरङ्ग तु विधिनैव प्रयोजयेत् ।
नाशुभं प्राप्नुयात् किञ्चित् स्वर्गलोकं च गच्छति ॥१७५॥
यश्चेमं विधिमुत्सृज्य यथेष्टं संप्रयोजयेत् ।
प्राप्नोत्यपचयं घोरं तिर्यग्योनिं च गच्छति ॥१७६॥
न तथाग्निः प्रदहति प्रभञ्जनसमीरितः ।
यथा ह्यपप्रयोगस्तु प्रयुक्तो दहति क्षणात् ॥१७७॥
इत्येवावन्तिपाञ्चालदाक्षिणात्यौड्रमागधैः ।
कर्तव्यः पूर्वरङ्गस्तु द्विप्रमाणविनिर्मितः ॥१७८॥
एष वः कथितो विप्राः पूर्वरङ्गाश्रितो विधिः ।
भूय किं कथ्यतां सम्यङ् नाट्यवेदविधिं प्रति[1] ॥१७९॥

इति भारतीये नाट्यशास्त्रे पूर्वरङ्गविधानं नाम पञ्चमोऽध्यायः ॥

174 (B 180 ; G 171) 175 (B 181 , G.172) 176 (B 182 ,177a ; G.168) G.173) 177 (B 183 , G 174) 178 (B 184 ; G 175) 179 (B 185 ; G.176a). [1] G om 179b The text from here does not occur in all the mss According to MM Ramakrishna Kavi this may from an author of Kohala's school. We give it below as an Appendix to Ch. V.

# पञ्चमाध्याय-परिशिष्टम्

पुनश्चित्रे तथा मिश्रे शुद्धे चैव प्रयोग्यहम् ।
यथा योज्या ध्रुवाः पञ्च तथा वक्ष्यामि तत्त्वतः ॥१॥
[1]आद्यावुत्थापनी कार्या परिवर्तास्तथा भवेत् ।
अपकृष्टाड्डिता चैव विच्छिन्ना चैव पञ्चमी ॥२॥
एवं पञ्च ध्रुवा ज्ञेया उपोहनसमन्विता ।
कर्तव्यास्तु प्रयत्नेन पूर्वरङ्गे प्रयोक्तृभिः ॥३॥
अतः परं प्रवक्ष्यामि उपोहनविधिक्रियाम् ।
उत्थापनस्याष्टकलं परिवर्तस्य षट्कलम् ॥४॥
अपकृष्टं पुनः कार्यं कलाभिः पञ्चभिर्युतम् ।
ध्रुवायामड्डितायां च चतुष्कलमथापि वा ॥५॥
विच्छिन्नं चैव विज्ञेयं कलात्रयसमन्वितम् ।
एवं ह्युपोहनानां तु प्रमाणं समुदाहृतम् ॥६॥
गुरुलाघवसंयुक्तं कलाकालसमन्वितम् ।
पूर्वरङ्गे सदा ज्ञेयं चित्रमार्गे ह्युपोहनम् ॥७॥
चित्रे चैत्राः कला ज्ञेया मिश्रे वार्तिकमाश्रिताः ।
शुद्धे दक्षिणमार्गेण प्रयोक्तव्या प्रयोक्तृभिः ॥८॥
चतस्रो गीतयः कार्या मागधी ह्यर्धमागधी ।
संभाविता तथा चैव पृथुला च प्रकीर्तिता ॥९॥
मागधी [1]अथ कर्तव्या [2]अथवा त्वर्धमागधी ।
पूर्वरङ्गे भवेच्चित्रे चित्रमार्गे च मागधी ॥१०॥

1-2 (B.186-187 ; G 176b-178a). [1] GC. उत्थापनी चैव (तथा). 3-5 (B.188-190 ; G 178b-182a). 6-7 (B 191-192 ; G 181b-182). 8-10 (B 193-195 ; G.183-185); [1] G तथा [2] G यथा वा.

यद्रा मिश्रस्तु योक्तव्यः पूर्वरङ्गे भवेदिह।
मिश्रे संभाविता कार्या [1]तदा वार्तिकमाश्रिता ॥११॥
शुद्धे च पृथुला कार्या दक्षिणं मार्गमाश्रिता।
अत' परं प्रवक्ष्यामि गुरुलघ्वक्षरक्रियाम् ॥१२॥
उपोहनक्रियायां तु यथा योज्या प्रयोक्तृभिः।
दिग्ले दिग्ले पुनः कार्यमन्ते झण्डु' सदा बुधैः ॥१३॥
मध्ये लघ्वक्षराणि स्युः षोडशैव तु नित्यशः।
एवं ह्युपोहनं कृत्वा तथा वस्तु समाचरेत् ॥१४॥
उत्थापन्यां प्रयोगोऽस्ति कलाकालसमन्वित'।
अक्षराणां कलायास्तु गुरुलाघवमेव च ॥१५॥
पूर्वं तु कथितं यस्यात् तस्मान्नाभिहितं पुनः।

यथा—देवं विभुं त्रिभुवनाधिपतिं कैलासपर्वतगुहाभिरतम् ॥१६॥
शैलेन्द्रराजतनयादयितं मूर्ध्ना नतोऽस्मि त्रिपुरान्तकरम्।

[2]एवमुत्थापनी कार्या पूर्वरङ्गे प्रयोक्तृभि' ॥१७॥
अतोऽन्यत् परिवर्ताया लक्षणं संविधीयते।
अस्यास्तूपोहनं कार्यं षट्कलं परिसंख्यया ॥१८॥
आदौ दिग्ले निशक्तिस्तु अन्ते झण्डु' सदा भवेत्।
मध्ये लघ्वक्षराण्येव द्वादशैव प्रयोजयेत् ॥१९॥
वस्तुनोऽत्र प्रवक्ष्यामि गुरुलघ्वक्षरक्रमम्।
द्वौ चादौ च चतुर्थं च अष्टमं दशमं तथा ॥२०॥
चतुर्दशं पञ्चदशं पादे गुर्वक्षराणि तु।
सा भूया परिवर्ताख्या त्रिलया त्रियतिस्तथा ॥२१॥
परिवर्तास्तु चत्वारः पाणयस्त्रय एव च।
चतुर्भि' सन्निपातैस्तु द्वात्रिंशत्कलिकान्विताः ॥२२॥

11-17 (B.196-202 ; G.186-192) [1] B यदा. [2] C. एवमुत्था परीकार्या 18-22 (B.203-212 ; G 193-202)

पूर्वरङ्गे प्रयोक्तव्यः परिवर्तः प्रयोक्तृभिः ।

यथा—

चन्द्रार्धभूषणजटं वरं वृषभकेतुं
कैलासपर्वतनिवासिनं सुरवरिष्टम् ।
[1]शैलेन्द्रराजतनयाप्रियं प्रमथनाथं
मूर्ध्ना नतोऽस्मि त्रिपुरान्तकं परमयोनिम्[2] ॥२३॥

अपकृष्टामिदानीं तु कथ्यमानां निबोधत ।
अस्यास्तूपोहनं कार्यं कलाभिः पञ्चभिर्युतम् ॥२४॥
द्विकले द्विकले पुनश्चायं कण्डुमस्य प्रयोजयेत् ।
अष्टावेव तु कार्याणि मध्ये लघ्वक्षराणि तु ॥२५॥
तृतीयश्चैव षष्ठं तु [3]नवमैकादशे तथा ।
पादे [4]पञ्चदशं चैव षोडशं च भवेद् गुरु ॥२६॥
अष्टचतुर्गणे [5]पादैरपकृष्टां विदुर्बुधाः ।
चतुर्भिः सन्निपातैश्च पाणिभिस्त्रिभिरेव च ॥२७॥

यथा—वरदं [1]सगणं त्रिपुरान्तकरं वृषभकेतुं
गजचर्मपटं [2]विषमेक्षणं [3]त्रिभुवननाथम् ।
[4]भुजङ्गाभरणं जगतां [5]महितं भुवनयोनिं
प्रणतोऽस्मि [6]भवन्तमुमाधिपतिमसितकण्ठम् ॥२८॥

तृतीयं चैव षष्ठं च गुरु [7]पादे त्रयोदशम् ।
[8]चतुर्गणसमायुक्ता सा कार्या त्वङ्गिता ध्रुवा ॥२९॥

23-27 (B 206-212; G 196-202) [1] B शैलाधिराज- [2] B परमयोगिनम्. [3] G नवमं द्वादशं. [4] G सप्तदशं. [5] B G. -रपकृष्टाविधिर्बुधा B0 -रपकृष्टां विदु-. 28-32 (B 213-217; G 203-207) [1] G सगणां त्रिपुरान्तकर [2] G वृषभध्वज. [3] B. भुवननाथम् [4] B. भुजग. [5] B. हित, G महित [6] G मुमाधिपति. [7] G. पदे C. पाद.

तत्राप्युपोहनं कार्यं चतुष्कलसमन्वितम् ।
अड्डिताया प्रयोगज्ञैरन्ते झण्डुविभूषितम् ॥३०॥
द्विले द्विले ततश्चैव [8]कार्यमन्ते सदा बुधैः ।
चत्वार्येव तु कार्याणि [9]मध्यलघ्वक्षराणि तु ॥३१॥

यथा—

प्रवरं वरदं [10]प्रमथगणपतिं गजचर्मपटं [11]मुनिजनमहितम् ॥
उमया सहितं [12]भुजगवलयितं प्रणतोऽस्मि शिवं [13]त्रिभुवनमहितम् ॥३२॥

प्रयोज्या ह्यड्डिता त्वेवं पूर्वरङ्गे यथार्थतः ।
अत ऊर्ध्वं प्रवक्ष्यामि [1]विक्षिप्तायास्तु लक्षणम् ॥३३॥
तृतीयं चैव षष्ठं च नवमं दशमं तथा ।
गुर्वक्षराणि पादे तु यस्यां विक्षिप्तका तु सा ॥३४॥
द्विलैस्त्रिभिर्गुणैर्युक्ताः पादास्तस्या भवन्ति हि ।
त्रिकलं चापि निर्दिष्टमुपोहनमतः परम् ॥३५॥
द्विले द्विले पुनः कार्यमन्ते झण्डुं प्रयोक्तृभिः ।
लघ्वक्षरैर्विहीनं तु विक्षिप्तोपोहनं भवेत् ॥३६॥

यथा—

[2]त्रिपुरान्तकरं [3]बहुलीलं उमया सहितं बहुरूपम् ।
भुजगाभरणं त्रिपुरान्तं प्रणमामि सदा परमीशम् ॥३७॥

एवं सर्वा ध्रुवा कार्या युग्मौजकृतगीतिका ।
आचार्यबुद्ध्या कर्तव्या पूर्वरङ्गे यथाविधि ॥३८॥
एवं यः कथितः सम्यक् पूर्वरङ्गस्त्रिधा मया ।
किमन्यत् संप्रवक्ष्यामि यज्ञमीष्टं द्विजोत्तमाः ॥३९॥

इति भारतीये नाट्यशास्त्रे कौहलीयं पूर्वरङ्गविधानं नाम पञ्चमाध्याय-परिशिष्टम् ।

[8]B. कार्यमन्ते. [9] C. मध्य. [10] B प्रथमाम सतत, G. प्रथमन सतत [11]B. G मुनिजन (गण) सहितम् [12] B. वलयित. [13] B.G. त्रिभुवन सहितम्, Bd -नमितम् 33-39 (B 218-224 ; G 09 214) [1] G विक्षिप्तायां. [2] G.त्रिपुरान्तकरं. [3] G. बहुलीलं.

# षष्ठोऽध्यायः

पूर्वरङ्गविधिं श्रुत्वा पुनराहुर्महत्तमाः ।
मुनयो भरतं सर्वे प्रश्नान् पञ्च [1]ब्रवीहि नः ॥१॥
ये रसा इति पठ्यन्ते नाट्ये नाट्यविचक्षणैः ।
रसत्वं केन वा तेषां एतदाख्यातुमर्हसि ॥२॥
भावाश्चैव कथं प्रोक्ताः किं वा ते [2]भावयन्ति हि ।
संग्रहं कारिकां चैव निरुक्तं चैव तत्त्वतः ॥३॥
तेषां तु वचनं श्रुत्वा मुनीनां भरतो मुनिः ।
प्रत्युवाच पुनर्वाक्यं रसभावविकल्पनम् ॥४॥
अहं व: कथयिष्यामि निखिलेन तपोधनाः ।
संग्रहं कारिकां चैव निरुक्तं च यथाक्रमम् ॥५॥
न शक्यमिह नाट्यस्य गन्तुमन्तं कथञ्चन ।
कस्माद् बहुत्वाद् ज्ञानानां शिल्पानां चाप्यनन्ततः ॥६॥
एकस्यापि न वै शक्यमन्तं ज्ञानार्णवस्य हि ।
गन्तुं [3]किमुत सर्वेषां ज्ञानानामर्थतत्त्वतः ॥७॥
[4]किन्त्वल्पसूत्रग्रन्थार्थमनुमानप्रसाधकम् ।
नाट्यस्यास्य प्रवक्ष्यामि रसभावादिसंग्रहम् ॥८॥
विस्तरेणोपदिष्टानामर्थानां सूत्रभाष्ययोः ।
निबन्धो यः समासेन संग्रहं तं विदुर्बुधाः ॥९॥
रसा भावा ह्यभिनया धर्मीवृत्तिप्रवृत्तयः ।
सिद्धिस्वरास्तथातोद्यं गानं रङ्गश्च संग्रहः[1] ॥१०॥
अल्पाभिधानेनार्थो यः समासेनोच्यते बुधैः ।
सूत्रतः सा तु[1] विज्ञेया कारिकाऽर्थप्रदर्शिनी ॥११॥

1-9 (B G *same*) [1] B. ब्रवीहि नः [2] B भावयन्त्यपि. [3] G. किं पुनः सर्वेषां 5 Bd C. सूत्रगूढा B G सूत्रग्रन्थ. 10 (B.G *same*) [1] B reads after this उपचारस्तथा विप्रा नाट्यपायति सर्वतः । यथौदयविधौ चैव ज्ञापितो नाट्यसंग्रहः. 11 (B.12 ; G 11). [1] G. मन्तव्या.

नानानामाश्रयोत्पन्नं निघण्टुं निगमान्वितम् ।
धात्वर्थहेतुसंयुक्तं नानासिद्धान्तसाधितम् ॥१२॥
स्थापितोऽर्थो भवेद्यत्र समासेनार्थसूचक ।
धात्वर्थवचनेनेह निरुक्तं तत् प्रचक्षते ॥१३॥
संग्रहो यो मया प्रोक्तः समासेन द्विजोत्तमाः ।
विस्तरं तस्य वक्ष्यामि सनिरुक्तं सकारिकम् ॥१४॥
शृङ्गारहास्यकरुणा रौद्रवीरभयानकाः ।
बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः ॥१५॥
एते ह्यष्टौ रसाः प्रोक्ता द्रुहिणेन महात्मना ।
पुनश्च भावान् वक्ष्यामि स्थायिसञ्चारिसत्त्वजान् ॥१६॥
रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।
जुगुप्सा विस्मयश्चेति स्थायिभावा प्रकीर्तिताः ॥१७॥
निर्वेदग्लानिशङ्काख्यास्तथासूयामदश्रमाः ।
आलस्यं चैव दैन्यं च चिन्ता मोहः स्मृतिर्धृतिः ॥१८॥
व्रीडा चपलता हर्ष आवेगो जडता तथा ।
गर्वो विषाद औत्सुक्यं निद्रापस्मार एव च ॥१९॥
सुप्तं प्रबोधोऽमर्षश्चाप्यवहित्थमथोग्रता ।
मतिर्व्याधिरथोन्मादस्तथा मरणमेव च ॥२०॥
त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः ।
त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामतः ॥२१॥
स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरसादोऽथ वेपथुः ।
वैवर्ण्यमश्रुप्रलय इत्यष्टौ सात्त्विकाः स्मृताः ॥२२॥
आङ्गिको वाचिकश्चैव आहार्यः सात्त्विकस्तथा ।
चत्वारोऽभिनया ह्येते विज्ञेया नाट्यसंश्रयाः ॥२३॥
लोकधर्मी नाट्यधर्मी धर्मो तु द्विविधः स्मृतः ।
भारती सात्त्वती चैव कैशिक्यारभटी तथा ॥२४॥

12-13 (B. 13-14 ; G 12-13) 14-17 (B.15-18 ; G.14-17). 18-23 (B. 19-24 ; G.18-23). 24 (B 25-26a ; G 24-25).

चतस्रो वृत्तयो ह्येता यासु नाट्यं प्रतिष्ठितम्।
आवन्ती दाक्षिणात्या च तथा चैवोड्रमागधी ॥२५॥
पाञ्चाली मध्यमा चैव ज्ञेया नाट्यप्रवृत्तयः।
दैविकी मानुषी चैव सिद्धिः स्याद्द्विविधैव च ॥२६॥
शारीरा वैणवाश्चैव सप्त षड्जादयः स्वराः[1]।
ततं चैवावनद्धं च घनं सुषिरमेव च ॥२७॥
चतुर्विधं च विज्ञेयमातोद्यं लक्षणान्वितम्।
ततं तन्त्रीगतं ज्ञेयमवनद्धं तु पौष्करम् ॥२८॥
घनस्तु तालो विज्ञेयः सुषिरो वंश एव च।
प्रवेशाक्षेपनिष्क्रामप्रासादिकमथान्तरम्[1] ॥२९॥
गानं पञ्चविधं ज्ञेयं ध्रुवायोगसमन्वितम्।
चतुरस्रो विकृष्टश्च रङ्गस्त्र्यस्रश्च कीर्तितः ॥३०॥
एवमेषोऽल्पसूत्रार्थो निर्दिष्टो नाट्यसङ्ग्रहः।
अतः परं प्रवक्ष्यामि सूत्रग्रन्थविकल्पनम् ॥३१॥

तत्र रसानेव तावदादावभिव्याख्यास्यामः। न हि रसादृते कश्चिदर्थः प्रवर्तते। तत्र विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः। को वा दृष्टान्त इति चेत्—उच्यते यथा नानाव्यञ्जनौषधिद्रव्यसंयोगाद्रसनिष्पत्तिः[1], तथा नानाभावोपगमाद्रसनिष्पत्तिः। यथा हि गुडादिभिर्द्रव्यैर्व्यञ्जनैरोषधीभिश्च षड् रसा निर्वर्त्यन्ते, एवं नानाभावोपहिता अपि स्थायिनो भावा रसत्वमाप्नुवन्ति। [2]अत्राह—रस इति कः पदार्थः? उच्यते आस्वाद्यत्वात्। कथमास्वाद्यते[3] रसः? अत्रोच्यते—यथाहि नानाव्यञ्जनसंस्कृतमन्नं भुञ्जाना रसानास्वादयन्ति सुमनसः पुरुषा हर्षादींश्चा-

25-26 (B 26b-27; G 26-27a) 27-29 (B 28a; 29-30, G 27b-29, 30a) [1] B adds after 27a निषादर्षभगान्धारमध्यमपञ्चमधैवताः. 29-30 (B 31, 33a; G.30b-31a). [1] B. adds after 29 उत्तमाधममध्यमा च प्रकृतिस्त्रिविधा स्मृता। वाद्याभ्यन्तरसम्भूतमुपचारद्वयं भवेत् 31 (B 33b-34 *prose*; G 31 and *prose*).

[1] G adds after this तथा नानाभावोपगमाद्रसनिष्पत्तिः, but B om this [2] G. कथय for अत्राह. [3] G. आस्वाद्यो.

प्यधिगच्छन्ति, तथा नानाभावाभिनयव्यञ्जितान् वागङ्गसत्त्वोपेतान् स्थायिभावानास्वादयन्ति सुमनसः प्रेक्षकाः हर्षादींश्चाधिगच्छन्ति। 'तस्मान् नाट्यरसाः' इति व्याख्याताः। अत्रानुवंश्यौ श्लोकौ भवतः—

यथा बहुद्रव्ययुतैर्व्यञ्जनैर्बहुभिर्युतम्।
आस्वादयन्ति भुञ्जाना भक्तं भक्तविदो जनाः ॥३२॥
भावाभिनयसंयुक्तान् स्थायिभावांस्तथा बुधाः।
आस्वादयन्ति मनसा तस्मान्नाट्यरसाः स्मृताः ॥३३॥

अत्राह—किं रसेभ्यो भावानामभिनिर्वृत्तिरुताहो भावेभ्यो रसानामिति? अत्र केषाञ्चिन्मतं परस्परसम्बन्धादेषामभिनिर्वृत्तिरिति। तन्न। कस्मात्? दृश्यते हि भावेभ्यो रसानामभिनिर्वृत्तिरिति, न तु रसेभ्यो भावानामभिनिर्वृत्तिरिति। भवन्ति चात्र श्लोकाः—

नानाभिनयसम्बन्धान् भावयन्ति रसानिमान्।
यस्मात्तस्मादमी भावा विज्ञेया नाट्ययोक्तृभिः ॥३४॥
नानाद्रव्यैर्बहुविधैर्व्यञ्जनं भाव्यते यथा।
एवं भावा भावयन्ति रसानभिनयैः सह ॥३५॥
न भावहीनोऽस्ति रसो न भावो रसवर्जितः।
परस्परकृता सिद्धिस्तयोरभिनये भवेत् ॥३६॥
[1]व्यञ्जनौषधिसंयोगो यथान्नं स्वादुतां नयेत्।
एवं भावा रसाश्चैव भावयन्ति परस्परम् ॥३७॥
यथा बीजाद् भवेद् वृक्षो वृक्षात् पुष्पं फलं यथा।
तथा मूलं रसाः सर्वे तेभ्यो भावा व्यवस्थिताः[1] ॥३८॥

तदेषां रसानामुत्पत्तिवर्णदैवतनिदर्शनान्यभिव्याख्यास्यामः। तेषामुत्पत्तिहेतवश्चत्वारो रसाः। तद्यथा शृङ्गारो रौद्रो वीरो बीभत्स इति।

32-33 (B.35-37 ; G.32-33 *prose*). 34-35 (B 38-39 ; G.34-35). 36 (B 40 ; G.36). 37 (B 41 ; G.37) [1] G. व्यौषध॰. 38 (B 42 and *prose* 43 ; G.38 and *prose*) [1] B adds after 38 (śloka) एवमेते स्थायिभावाः रसनामानः प्रस्तवनमन्यत् and before the *prose*. 39 (B 44 ; G 39). 40-41 (B.45 46 ; G.40-41)

अत्र—

शृङ्गाराद्धि भवेद्धास्यो रौद्रात्तु करुणो रसः ।
वीराच्चैवाद्भुतोत्पत्तिर्बीभत्साच्च भयानकः ॥३९॥
शृङ्गारानुकृतिर्या तु स हास्य इति संज्ञितः ।
रौद्रस्यापि च यत् कर्म स ज्ञेयो करुणो रसः ॥४०॥
वीरस्यापि च यत् कर्म सोऽद्भुतः परिकीर्तितः ।
बीभत्सदर्शनं यच्च भवेत् स तु भयानकः ॥४१॥

अथ वर्णाः—

श्यामो भवेत्तु शृङ्गारः सितो हास्यः प्रकीर्तितः ।
कपोतः करुणश्चैव रक्तो रौद्रः प्रकीर्तितः ॥४२॥
गौरो वीरस्तु विज्ञेयः कृष्णश्चापि भयानकः ।
नीलवर्णस्तु बीभत्सः पीतश्चैवाद्भुतः स्मृतः ॥४३॥

अथ दैवतानि—

शृङ्गारो विष्णुदैवतो हास्यः प्रमथदैवतः ।
रौद्रो रुद्राधिदैवश्च करुणो यमदैवतः ॥४४॥
बीभत्सस्य महाकालः कालदेवो भयानकः ।
वीरो महेन्द्रदेवः स्यादद्भुतो ब्रह्मदैवतः ॥४५॥

एवमेतेषामुत्पत्तिवर्णदैवतान्यभिव्याख्यातानि । इदानीं विभावानुभावव्यभिचारिसंयुक्तानां लक्षणनिदर्शनान्यभिव्याख्यास्यामः । स्थायिभावांश्च [1]रसत्वमुपनेष्यामः ।

तत्र शृङ्गारो नाम रतिस्थायिभावप्रभव उज्ज्वलवेषात्मकः। यथा—यत्किञ्चिल्लोके शुचि मेध्यं दर्शनीयं वा तच्छृङ्गारेणोपमीयते। यस्तावदुज्ज्वलवेषः स शृङ्गारवानित्युच्यते। यथा च गोत्रकुलाचारोत्पन्नान्याप्तोपदेशसिद्धानि पुंसां नामानि भवन्ति तथैवैषां रसानां भावानां च नाट्याश्रितानां चार्थानामाचारोत्पन्नान्याप्तोपदेशसिद्धानि नामानि

42-43 (B 47-48, G 42-43) 44-45 (49-50 and prose; G 44-45 and prose). [1] B रसान् संयुक्तिश्च न इति.

एवमेष आचारसिद्धो ह्द्योज्ज्वलवेषात्मकत्वाच्छृङ्गारो रसः। स च स्त्रीपुंसहेतुक उत्तमयुवप्रकृतिः।

तस्य द्वे अधिष्ठाने सम्भोगो विप्रलम्भश्च। तत्र सम्भोगस्तावद् ऋतुमाल्यानुलेपनालङ्कारेष्टजनविषयवरभवनोपभोगोपवनगमनानुभवनश्रवणदर्शनक्रीडालीलादिभिर्विभावैरुत्पद्यते। तस्य नयनचातुर्यभ्रूविक्षेपकटाक्षसञ्चारललितमधुराङ्गहारवाक्यादिभिरनुभावैरभिनयः प्रयोक्तव्य। व्यभिचारिणस्त्रासालस्यौग्र्यजुगुप्सावर्ज्या। विप्रलम्भकृतस्तु निर्वेदग्लानिशङ्कासूयाश्रमचिन्तौत्सुक्यनिद्रासुप्तस्वप्नविबोधव्याध्युन्मादापस्मारजाड्यमोहमरणादिभिरनुभावैरभिनेतव्यः। अत्राह— यद्ययं रतिप्रभवः शृङ्गारः कथमस्य करुणाश्रयिणो भावा भवन्ति? अत्रोच्यते—पूर्वमेवाभिहितं सम्भोगविप्रलम्भकृतः शृङ्गार इति। [1]वैशिकशास्त्रैश्च दशावस्थोऽभिहितः। ताश्च सामान्याभिनये वक्ष्याम।

करुणस्तु [2]शापक्लेशविनिपतनेष्टजनविप्रयोगविभवनाशवधबन्धनसमुत्थो निरपेक्षभाव औत्सुक्यचिन्तासमुत्थः सापेक्षभावो विप्रलम्भकृतः। एवमन्य करुणः अन्यश्च विप्रलम्भ। ऐवमेष सर्वभावसंयुक्त शृङ्गारो भवति। अपि च—

सुखप्रायेष्टसम्पन्न ऋतुमाल्यादिसेवक।
पुरुषप्रमदायुक्तः शृङ्गार इति संज्ञितः॥४६॥

अपि चात्र सूत्रानुबद्धे आर्ये भवतः—

ऋतुमाल्यालङ्कारैः प्रियजनगान्धर्वकाव्यसेवाभिः।
उपवनगमनविहारैः शृङ्गाररसः समुद्भवति॥४७॥
नयनवदनप्रसादैः स्मितमधुरवचोधृतिप्रमोदैश्च।
मधुरैश्चाङ्गविकारैस्तस्याभिनयः प्रयोक्तव्य.॥४८॥

अथ हास्यो नाम हासस्थायिभावात्मकः। स च विकृतवेषालङ्कारधार्ष्ट्यलौल्यकुहकासत्प्रलापव्यङ्गदर्शनदोषोदाहरणादिभिर्विभावैरुत्पद्यते। [2]तस्यौष्ठदंशननासाकपोलस्पन्दनदृष्टिव्याकोशाकुञ्चनस्वेदास्यरागपार्श्वग्रहणादिभिरनुभावैरभिनय. प्रयोक्तव्यः।

[1] BG वैशिकशास्त्रकारैः [2] B G. विनिपतितेष्ट. 46 (B 52; G 46) 47-48 (B. 54-55 and *prose* 56-57; G 47-48 and *prose*) 1 C ककद for कुहक. 2 C. तस्यौष्ठ°स्फुरणात् 48 (B. 58; G.49) 50 (B.

व्यभिचारिणश्चास्य आलस्यावहित्थातन्द्रानिद्रास्वप्नप्रबोधासूयादयः । द्विविधश्चायमात्मस्थः परस्थश्च । यदा स्वयं हसति तदात्मस्थः । यदापरं हासयति तदा परस्थः ।

अत्रानुवंश्ये आर्ये भवतः—

विपरीतालङ्कारैर्विकृताचाराभिधानवेषैश्च ।
विकृतैरङ्गविकारैर्हसतीति रसः स्मृतो हास्यः ॥४९॥
[1]विकृताकारैर्वाक्यैरङ्गविकारैर्विकृतवेषैश्च ।
हासयति जनं यस्मात् तस्माद् ज्ञेयो रसो हास्यः ॥५०॥
स्त्रीनीचप्रकृतावेष भूयिष्ठं दृश्यते रसः ।
षड् भेदाश्चास्य विज्ञेयास्तांश्च वक्ष्याम्यहं पुनः ॥५१॥
स्मितमथ हसितं विहसितमुपहसितञ्चापहसितमतिहसितम् ।
द्वौ द्वौ भेदौ स्यातामुत्तममध्यमाधमप्रकृतौ ॥५२॥
स्मितहसिते ज्येष्ठानां मध्यानां विहसितोपहसिते च ।
अधमानामपहसितं ह्यतिहसितं चापि विज्ञेयम् ॥५३॥

अत्र श्लोकाः [ उत्तमानाम्—

[1]ईषद्विकसितैर्गण्डैः कटाक्षैः सौष्ठवान्वितैः ।
अलक्षितद्विजं धीरमुत्तमानां स्मितं भवेत् ॥५४॥
उत्फुल्लाननेत्रैस्तु गण्डैर्विकसितैरथ ।
किञ्चिल्लक्षितदन्तं च हसितं तद्विधीयते ॥५५॥

अथ मध्यानाम्—

आकुञ्चिताक्षिगण्डं यत् सस्वरं मधुरं तथा ।
कालागतं सास्यरागं तद्वै विहसितं भवेत् ॥५६॥
उत्फुल्लनासिकं यच्च [1]जिह्मदृष्टिनिरीक्षणम् ।
[2]निकुञ्चितांसकशिरस्तच्चोपहसितं भवेत् ॥५७॥

59 ; G 50) 1 B विकृताकारैः. 51 (B 60 , G 51) 52 (B 61 ; G 52) 53 (B 62 , G 53) 1 G तथातिहसितं च 54 (B 65 ; G 54) 1 C ईषद्विहसितैः 55 (B 66, G 55) 1 C गण्डैर्विकसितैरथ 56 (B 6., G 56) 57 (B 69 ; 57) 1 C. जिह्मेक्षण 2.B C, निकुञ्चितांसक 58 (B 70 ; G 58) 59 (B 72 ;

अधमानाम्—

अस्थानहसितं यत्र साश्रुनेत्रं तथैव च ।
उत्कम्पितांसकशिरस्तच्चापहसितं भवेत् ॥५८॥
संरब्धसाश्रुनेत्रं च विक्रुष्टस्वरमुद्धतम् ।
करोपगूढपार्श्वं च तच्चातिहसितं भवेत् ॥५९॥
हासस्थानानि यानि स्युः कार्योत्पन्नानि नाटके ।
उत्तमाधममध्यानामेवं तानि प्रयोजयेत् ॥६०॥
एवमात्मसमुत्थ च तथा परसमुत्थितम् ।
द्विविधस्त्रिप्रकृतिकः षड्भेदोऽस्य रसः स्मृतः ॥६१॥

अथ करुणो नाम शोकस्थायिभावप्रभवः । स च शापक्लेशविनिपातेष्टजनविप्रयोग विभवनाशवधबन्धविद्रवोपघातव्यसनसंयोगादिभिर्विभावैः समुपजायते । तस्य चाश्रुपातनपरिदेवनमुखशोषणवैवर्ण्यस्रस्तगात्रतानिःश्वासस्मृतिविलोपादिभिरनुभावैरभिनय प्रयोक्तव्य । व्यभिचारिणश्चास्य निर्वेदग्लानिचिन्तौत्सुक्यावेगमोहश्रमभयविषाद-दैन्यव्याधिजडतोन्मादापस्मारत्रासालस्यमरणस्तम्भवेपथुवैवर्ण्याश्रुस्वरभेदादयः ।

अत्रार्ये भवतः—

इष्टवधदर्शनाद्वा विप्रियवचनस्य संश्रवाद्वापि ।
एभिर्भावविशेषैः करुणरसो नाम संभवति ॥६२॥
सस्वनरुदितैर्मोहागमैश्च परिदेवितैर्विलपितैश्च ।
अभिनेयः करुणरसो देहायासाभिघातैश्च ॥६३॥

अथ रौद्रो नाम क्रोधस्थायिभावात्मकः रक्षोदानवोद्धतमनुष्यप्रभवः[1] सङ्ग्राम-हेतुकः । स च क्रोधाधर्षणाधिक्षेपावमानानृतवचन[2]वाक्पारुष्याभिद्रोहमात्सर्यादिभिर्विभावैरुत्पद्यते । तस्य च ताडनपाटनपीडन[3]छेदनभेदनप्रहरणाहरणशस्त्रसंपात-

G 59). 60 (B 73, G 60). 61 (B 74 and *prose*, G 61 and *prose*). 1 B G. reads this as इत्येव स्वसमुत्थस्तथा परसमुत्थितश्च विज्ञेय । द्विविधस्त्रिप्रकृतिस्तस्मात्षड्भेदस्तथा रसो नाम ; we with C. 62 (B 76, G 62) 63 (B 77 and *prose* 78; G 63 and *prose*). 1 B G प्रकृति. 2 B G वचनोपघातवाक्पारुष्य भिद्रोह. 3 G छेदभेद for छेदनभेदन। 4 B करपादपटहृतो, G करपदतो 5 C Gg व्यभिचारिण्यश्च. 6 B adds सर्व before भेद.

सप्रहाररुधिराकर्षणाद्यानि कर्माणि। पुनश्च रक्तनयन[1]भ्रुकुटीकरणावष्टम्भदन्तौष्ठपीडनगण्डस्फुरणहस्ताग्रनिष्पेषादिभिरनुभावैरभिनयः प्रयोक्तव्यः। [2]भावाश्चास्य सम्मोहोत्साहवेगामर्षचपलतौग्र्य-स्वेदवेपथुरोमाञ्चगद्गदादयः। अत्राह—यदभिहितं राक्षसदानवादीनां रौद्रो रसः, किमन्येषां नास्तीत्युच्यते। अस्त्यन्येषामपि रौद्रः। किन्त्वधिकारोऽत्र गृह्यते। ते हि स्वभावत एव रौद्राः। कस्मात्—बहुबाहवो बहुमुखाः प्रोद्धूतविकीर्णपिङ्गलशिरोजाः रक्तोद्वृत्तविलोचना भीमासितरूपिणश्चैव। यच्च किञ्चित्समारभन्ते स्वभावचेष्टितं वागङ्गादिकं वा तत्सर्वं रौद्रमेवेति। शृङ्गारश्च तैः प्रायशः प्रसभं सेव्यते। तेषां चानुकारिणो ये पुरुषास्तेषामपि संग्रामसंप्रहारकृतो रौद्ररसोऽनुमन्तव्यः। अत्रानुवंश्ये आर्ये भवतः—

युद्धप्रहारघातनविकृतच्छेदनविदारणैश्चैव।
संग्रामसम्भ्रमाद्यैरेभिः संजायते रौद्रः ॥६४॥
नानाप्रहरणमोक्षैः शिरःकबन्धभुजकर्तनैश्चैव।
एभिश्चार्थविशेषैस्तस्याभिनयः प्रयोक्तव्यः ॥६५॥
इति रौद्ररसो दृष्टो रौद्रवागङ्गचेष्टितः।
शस्त्रप्रहारभूयिष्ठ उग्रकर्मक्रियात्मकः ॥६६॥

अथ वीरो नाम उत्तमप्रकृतिरुत्साहात्मकः। स च असंमोहाध्यवसायनयविनयबलपराक्रमशक्तिप्रतापप्रभावादिभिर्विभावैरुत्पद्यते। तस्य स्थैर्यशौर्यधैर्यत्यागवैशारद्यादिभिरनुभावैरभिनयः प्रयोक्तव्यः। [1]सञ्चारिभावाश्चास्य धृतिमतिगर्वावेगौग्र्यामर्षस्मृतिरोमाञ्चादयः।

अत्रार्ये भवतः—

उत्साहाध्यवसायादविषादित्वादविस्मयामोहात्।
विविधादर्थविशेषाद्वीररसो नाम सम्भवति ॥६७॥
स्थितिधैर्यवीर्यगर्वैरुत्साहपराक्रमप्रभावैश्च।
वाक्यैश्चाक्षेपकृतैर्वीररसः सम्यगभिनेयः ॥६८॥

64 (B 79, G 65) 65 (B 80, G.66) 66 (B 81; G.67), 66 (B 81 and 82 *prose*; G 68 and *prose*) 1 Gg. सञ्चारिभावा C. व्यभिचारिभावाः. 67 (B 83; G 68). 68 (B 84, 85 *prose*, G.69 and *prose*) 1 G स्रग्मदकरण, G. मरण for करण 2 G. चपलतावास.

अथ भयानको नाम भयस्थायिभावात्मकः। स च विकृतरवसत्त्वदर्शनशिवोलूकत्रासोद्वेगशून्यागारारण्य-[1]प्रवेशमरणस्वजनवधबन्धदर्शनश्रुतिकथादिभिर्विभावैरुत्पद्यते। तस्य प्रवेपितकरचरणनयनचलनपुलकमुखवैवर्ण्यस्वरभेदादिभिरनुभावैरभिनयः प्रयोक्तव्यः। [2]व्यभिचारिभावाश्चास्य स्तम्भस्वेदगद्गदरोमाञ्चवेपथुस्वरभेदवैवर्ण्यशङ्कामोहदैन्यावेग[3]चापलजडतात्रासापस्मारमरणादयः।

अत्रानुवंश्या आर्या भवन्ति—

विकृतरवसत्त्वदर्शनसंग्रामारण्यशून्यगृहगमनात्।
गुरुनृपयोरपराधात् कृतकश्च भयानको ज्ञेयः ॥६९॥
गात्रमुखदृष्टिभेदैरुरुस्तम्भाभिवीक्षणोद्वेगैः[1]।
सन्नमुखशोषहृदयस्पन्दनरोमोद्गमैश्च भयम् ॥७०॥
एतत् स्वभावजं स्यात् सत्त्वसमुत्थं तथैव कर्तव्यम्।
पुनरेभिरेव भावैः कृतकं मृदुचेष्टितैः कार्यम् ॥७१॥
करचरणवेपथुस्तम्भगात्रसङ्कोचहृदयप्रकम्पेन।
शुष्कौष्ठतालुकण्ठैर्भयानको नित्यमभिनेयः ॥७२॥

अथ बीभत्सो नाम जुगुप्सास्थायिभावात्मकः। स चाहृद्याप्रिया-[1]चोक्षानिष्टश्रवणदर्शनपरिकीर्तनादिभिर्विभावैरुत्पद्यते। तस्य सर्वाङ्गसंहारमुखनेत्रविकूणनोल्लेखननिष्ठीवनोद्वेजनादिभिरनुभावैरभिनयः प्रयोक्तव्यः। व्यभिचारिभावाश्चास्यापस्मारावेगमोहव्याधिमरणादयः।

अत्रानुवंश्ये आर्ये भवतः—

अनभिमतदर्शनेन च रसगन्धस्पर्शशब्ददोषैश्च।
उद्वेजनैश्च बहुभिर्बीभत्सरसः समुद्भवति ॥७३॥

[1] See p. 88. [2] B. om व्यभिचारि. [3] See p 88 note 2 69 (B 86; G.70). 70 (B.87; G.71). [1] G. -स्तम्भातिवीक्षणोद्वेगैः. 71 (B 88; G 72). 72 (B.89-90 *prose*). [1] G.-चैक्षानिष्टश्रवणदर्शनपरिकीर्तन-. B -[?]मोक्षणमपरिकीर्तन. 73 (B.92; G.74).

मुखनेत्रविकूणनया नासाप्रच्छादनावनमितास्यैः ।
अव्यक्तपादपतनै-[2]र्बीभत्सः सम्यगभिनेयः ॥७४॥

अथाद्भुतो नाम विस्मयस्थायिभावात्मकः । स च दिव्यदर्शनेप्सितमनोरथावा-[3]प्त्युत्तमभवनदेवकुलाभिगमनसभाविमानमायेन्द्रजालसाधनादिभिर्विभावैरुत्पद्यते[4] तस्य नयनविस्ताराऽनिमिषप्रेक्षणरोमाञ्चाश्रुस्वेदहर्षसाधुवादप्रदानप्रबन्ध[5]हाहाकारकरबाहुवदनचेलाङ्गुलिभ्रमणादिभिरनुभावैरभिनयः प्रयोक्तव्यः । [6]व्यभिचारिभावाश्चास्य अश्रुस्तम्भस्वेदगद्गदरोमाञ्चावेगसम्भ्रमजडताप्रलयादयः ।

अत्रानुवंश्ये आर्ये भवत —

यत्त्वतिशयार्थयुक्तं वाक्यं [1]शील च कर्म रूपं च ।
[2]एभिस्त्वर्थविशेषै रसोऽद्भुतो नाम विज्ञेय. ॥७५॥
[1]स्पर्शग्रहोल्लुकसनैर्हाहाकारैश्च साधुवादैश्च ।
वेपथुगद्गदवचनै· स्वेदाद्यैरभिनयस्तस्य ॥७६॥

शृङ्गारं त्रिविध विद्याद् वाङ्नेपथ्यक्रियात्मकम् ।
अङ्गनेपथ्यवाक्यैश्च हास्यरौद्रौ त्रिधा स्मृतौ ॥७७॥
धर्मोपघातजश्चैव तथा त्वपचयोद्भवः ।
तथा शोकहृतश्चैव करुणस्त्रिविधः स्मृतः ॥७८॥
दानवीरं धर्मवीरं युद्धवीरं तथैव च ।
रसं वीरमपि प्राहुस्तज्ज्ञास्त्रिविधमेव हि ॥७९॥
व्याजाच्चैवापराधाच्च वित्रासितकमेव च ।
पुनर्भयानक चापि विद्यात् त्रिविधमेव च ॥८०॥
बीभत्सः क्षोभजः शुद्ध उद्वेगी स्यात् तृतीयक· ।
विष्ठाकृमिभिरुद्वेगी क्षोभजो रुधिरादिज ॥८१॥

74 (B 93-94 *prose* , G 75 and *prose*). [1] C.-नेत्रविघूर्णनपवनास.. [2] C. सम्यगभिनय, प्रयोक्तव्य·. [3] B.G. प्राप्त्युत्तमदेव-. [4] B. -जालसाधना. [5] G. हाहाकारकरचलनाङ्गुलिभ्रमण. [6] B om. this 75 (B 95, G.76) [1] B.G. शिल्प. [2] B G. read. तत्सर्वंमद्भुतरसे विभावरूप हि विज्ञेयम्. 76 (B 96; G. 77). [1] G. स्पर्शग्रहोल्लुकसनै:– C. स्पर्शग्रहोत्फुल्लकरै. 77-82 (B 97-102; G. 78-83)

दिव्यश्चानन्दजश्चैव द्विधा ख्यातोऽद्भुतो रसः ।
दिव्यदर्शनजो दिव्यो हर्षादानन्दजः स्मृतः ॥८२॥
एवमेते रसा ज्ञेयास्त्वष्टौ लक्षणलक्षिताः ।
अत ऊर्ध्वं प्रवक्ष्यामि भावानामपि लक्षणम् ॥८३॥

इति भारतीये नाट्यशास्त्रे रसविकल्पो नाम षष्ठोऽध्यायः ।

83 (G 84) [1] B reads here a discourse on शान्तरस (an interpolation) and ends the chapter with a variant of 83 as follows: एवमेते रसाः प्रोक्ता नव लक्षणलक्षिताः, अत ऊर्ध्वं etc.

# सप्तमोऽध्यायः

भावानिदानीं वक्ष्यामः । अत्राह—भावा इति कस्मात्, किं भावयन्तीति भावा[1] ? उच्यते—वागङ्गसत्त्वोपेतान् काव्यार्थान् भावयन्तीति भावाः । [2]भाव इति करणसाधनं—यथा भावितः वासितः कृत इत्यनर्थान्तरम् । लोकेऽपि सिद्धम् अहो ह्यन्योन्यगन्धेन रसेन वा सर्वमेव भावितम् । अपि च व्याप्त्यर्थं, श्लोकाश्चात्र भवन्ति—

विभावैराहृतो योऽर्थस्त्वनुभावेन गम्यते ।
वागङ्गसत्त्वाभिनयैः स भाव इति संज्ञितः ॥१॥

वागङ्गमुखरागैश्च सत्त्वेनाभिनयेन च ।
कवेरन्तर्गतं भावं भावयन् भाव उच्यते ॥२॥

नानाभिनयसम्बन्धान् भावयन्ति रसानिमान् ।
यस्मात्तस्मादमी भावा विज्ञेया नाट्ययोक्तृभिः ॥३॥

अथ विभाव इति कस्मादुच्यते । विभावो [1]विज्ञानार्थः । विभावः कारणं निमित्तं हेतुरिति पर्यायाः । विभाव्यन्तेऽनेन वागङ्गसत्त्वाभिनया इति विभावः । यथा विभावितं [2]विज्ञातमित्यनर्थान्तरम् ।

अत्र श्लोकः—

बहवोऽर्था विभाव्यन्ते वागङ्गाभिनयाश्रिताः ।
अनेन यस्मात्तेनायं विभाव इति संज्ञितः ॥४॥

अथानुभाव इति कस्माद् उच्यते । अनुभाव्यतेऽनेन वागङ्गसत्त्वैः कृतोऽभिनय इति । अत्र श्लोकः—

वागङ्गाभिनयेनेह यतस्त्वर्थोऽनुभाव्यते ।
[1]वागङ्गोपाङ्गसंयुक्तस्त्वनुभावस्ततः स्मृतः ॥५॥

1 (B 1-2 ; G *same*) [1] B G किं भवन्तीति भावाः किं वा भावयन्तीति भावाः. [2] B.G. भू इति करणे धातुस्तथा च भावित वासित कृतमित्यनर्थान्तरम्. Bt भाव इति व्याप्तमित्यनर्थान्तरम्.
2 (B 3 ; G.2). 3 (B 4-5 ; G 3). [1] B G add नाम after this. [2] C.-मित्यनर्थान्तरम्
4 (B 6 ; G.4) 5 (B 7-8 and *prose*). [1] B वागङ्गोपाङ्ग-

[1]एतेषां विभावानुभावसंयुक्तानां लक्षणनिदर्शनान्यभिव्याख्यास्यामः। तत्र विभावानुभावौ लोकप्रसिद्धावेव। लोकस्वभावोपगतत्वाच्चैषां लक्षणं नोच्यते। अतिप्रसङ्गनिवृत्त्यर्थं च। भवति चात्र श्लोकः—

लोकस्वभावसंसिद्धा लोकयात्रानुगामिनः।
अनुभावविभावाश्च ज्ञेयास्त्वभिनयैर्बुधैः ॥६॥

तत्राष्टौ भावाः स्थायिनः, त्रयस्त्रिंशद् व्यभिचारिणः, अष्टौ सात्त्विका इति भेदाः[1] एवमेते काव्यरसाभिव्यक्तिहेतवः एकोनपञ्चाशद् भावाः [2]प्रत्यवगन्तव्याः। एभ्यश्च सामान्यगुणयोगेन रसा निष्पद्यन्ते। भवति चात्र श्लोकः—

योऽर्थो हृदयसंवादी तस्य भावो रसोद्भवः।
शरीरं व्याप्यते तेन शुष्कं काष्ठमिवाग्निना ॥७॥

अत्राह—यद्यन्योन्यार्थसंश्रितैर्विभावानुभावव्यञ्जितैरेकोनपञ्चाशद्भावैः सामान्यगुणयोगेनाभिनिष्पद्यन्ते रसास्तत् कथं स्थायिन एव भावा रसत्वमाप्नुवन्ति? उच्यते—यथा हि समानलक्षणास्तुल्यपाणिपादोदरशरीराः समानप्रत्यया अपि पुरुषाः कुलशीलविद्याकर्मशिल्पविचक्षणत्वाद् राजत्वमाप्नुवन्ति तत्रैव चान्येऽल्पबुद्धयस्तेषामेवानुचरा भवन्ति, तथा विभावानुभावव्यभिचारिणः स्थायिभावानुपाश्रिता भवन्ति[।] आश्रयत्वात् स्वामिभूताश्च स्थायिनो भावाः। तद्वत् [1]स्थायिनि वपुषि गुणीभूता अन्ये भावाः तान् गुणवत्तयाऽऽश्रयन्ते। [ते] परिजनभूता व्यभिचारिणो भावाः। [2]को दृष्टान्त इति? यथा नरेन्द्रो बहुजनपरिवारोऽपि सन् स एव नाम लभते, नान्यः सुमहानपि पुरुषः, [3]तथा विभावानुभावव्यभिचारिपरिवृतः स्थायी भावो रसनाम लभते[4]।

भवति चात्र श्लोकः—

यथा नराणां नृपतिः शिष्याणां च यथा गुरुः।
एवं हि सर्वभावानां भावः स्थायी महानिह ॥८॥

[1] B G read before this एव (ए) ते विभावानुभावसंयुक्ता भावा इति अभिमतत्या (व्याख्याता)। अतश्चैषां (अतो ह्येषां) सिद्धिर्भवति (all this om by Ga p) तस्मात्. 6 (B 9, G 6) [1] B विशेषा. 7 (B 10-11; G 7) [1] B G स्थायीभूतगुणभूता. [2] B G add before this अत्राह [3] G C adds तथा च बहुषु गच्छत्सु कश्चित् कश्चित् पृच्छति कोऽयम् इति। स तम् आह राजेति [4] G C add नरेन्द्रवत्। 8 (B 12 13; G 8 and *prose*)

लक्षणं खलु पूर्वमभिहितमेतेषां रससंज्ञकानाम्। इदानीं तु भावसामान्यलक्षणमभिधास्यामः। तत्रादौ स्थायिभावान् व्याख्यास्यामः। तत्र रतिर्नाम आमोदात्मको भावः [1]ऋतुमाल्यानुलेपनाभरणप्रियजनवरभवनानुभवनाप्रतिकूल्यादिभिर्विभावैः समुत्पद्यते। तामभिनयेत् [2]स्मितमधुरवचनभ्रूक्षेपकटाक्षादिभिरनुभावैः। भवति चात्र श्लोकः—

इष्टार्थविषयप्राप्त्या रतिः समुपजायते।
सौम्यत्वादभिनेया सा वाङ्माधुर्याङ्गचेष्टितैः ॥९॥

अथ हासो नाम [1]परचेष्टानुकरणासंबद्धप्रलापपौरोभाग्यमौर्ख्यादिभिर्विभावैरुत्पद्यते। तमभिनयेत् पूर्वोक्तैर्हसितादिभिः। भवति चात्र श्लोकः—

परचेष्टानुकरणाद्धासः समुपजायते।
स्मितहासातिहसितैरभिनेयः स पण्डितैः ॥१०॥

शोको नाम इष्टजनवियोगविभवनाशवधबन्धनदुःखानुभवनादिभिर्विभावैरुत्पद्यते। तस्यास्रपातविलपितपरिदेवितवैवर्ण्यस्वरभेदस्रस्तगात्रताभूमिपाताक्रन्दित-[1]दीर्घनिश्वसितजडतोन्मादमोहमरणादिभिरनुभावैरभिनयः प्रयोक्तव्यः। रुदितम् अत्र त्रिविधम्। आनन्दजमार्तिजमीर्ष्यासमुत्थं चेति।

तत्रार्या:—

[1]हर्षोत्फुल्लकपोलं सानुस्मरणं च वागनिभृतास्रम्।
रोमाञ्चाञ्चितगात्रं रोदनमानन्दजं भवति ॥११॥
पर्याप्तविमुक्तास्रं सस्वनमस्वस्थगात्रगतिचेष्टम्।
[1]भूमिनिपातितचेष्टितविलपितमित्यार्तिजं भवति ॥१२॥
प्रस्फुरितौष्ठकपोलं सशिरःकम्पं तथा सनिश्वासम्।
भ्रुकुटीकटाक्षकुटिलं स्त्रीणामीर्ष्याकृतं भवति[1] ॥१३॥

[1] B G -मरबमीजनवरभवन. [2] B. स्मितवदनमधुरकथन. 9 (B 14-15; G. 9 and *prose*) [1] B -कररूकुरकासम्बद्ध. 10 (B 16-17; G.10 and *prose*) [1] G inserts here विचेष्टित. 11 (B 19, G 11) [1] B reads before this पादन्देर्यात्ति हत. त्रिविधं रुदित मत्तावृत्तं चैतन् तत न्वभिनयोगत् विभावयति. प्रवृत्त्यति 12 (B.20; G.12) [1] G. भूमिपातविवर्तित, B भूमिनिपतननिवर्तित 13 (B 21; G 13) [1] C. adds हास्यनशैवराय प्रवेशाय विद्धनुक्त। चोरेमान्तचारी वायं लनक कोश.

भवति श्लोकः—

स्त्रीनीचप्रकृतिष्वेष शोको व्यसनसम्भवः ।
धैर्येणोत्तममध्यानां नीचानां रुदितेन च ॥१४॥

क्रोधो नाम आधर्षणाक्रुष्टकलहविवादप्रतिकूल्यादिभिर्विभावैरुत्पद्यते[1] । [2]तमभिनयेद् उत्फुल्लनासापुटोद्वृत्तनयनसन्दष्टोष्ठपुटगण्डस्फुरणादिभिरनुभावैः ।

रिपुजो गुरुजश्चैव प्रणयिप्रभवस्तथा ।
भृत्यजः कृतकश्चेति क्रोधः पञ्चविधः स्मृतः ॥१५॥

अत्रार्या भवन्ति—

भ्रुकुटिकुटिलोत्कटमुखः सन्दष्टोष्ठः स्पृशन् करेण करम् ।
[1]धृष्टभुजशिरउरस्कः [2]शत्रोर्विनियन्त्रणं कुर्यात् ॥१६॥
किञ्चिदवाङ्मुखदृष्टिः किञ्चित्स्वेदापमार्जनपरश्च ।
अव्यक्तोल्बणचेष्टो [1]गुरोर्विनियन्त्रणं रुष्येत् ॥१७॥
अल्पतरप्रविचारो निकिरन्नश्रूण्यपाङ्गविक्षेपैः ।
[1]सभ्रुकुटीस्फुरदोष्ठः [2]प्रणयाभिगतां प्रियां रुष्येत् ॥१८॥
यः परिजने तु रोषस्तर्जननिर्भर्त्सनाक्षिविस्तारैः ।
विप्रेक्षणैश्च विविधैस्तस्याभिनयः प्रयोक्तव्यः ॥१९॥
कारणमपेक्षमाणः प्रायेणायासलिङ्गसंयुक्तः ।
उभयरसान्तरचारी कार्यः कृतको [1]भवेद्रोषः ॥२०॥

उत्साहो नाम उत्तमप्रकृतिः । स चाविषादशक्तिधैर्य-[2]शौर्यादिभिर्विभावैरुत्पद्यते । तस्य [4]स्थैर्यत्यागारम्भवैशारद्यादिभिरनुभावैरभिनयः प्रयोक्तव्यः ।

अत्र श्लोकः—

असम्मोहादिभिर्व्यक्तो व्यवसायनयात्मकः ।
उत्साहस्त्वभिनेयोऽसावप्रमादक्रियादिभिः[1] ॥२१॥

14 (B 22-23, G 14 and *prose*). [1] B. मनुष्यदर्शने, [2] B. अस्य विकृष्टनासापुटो॰ हतनयनसन्दष्टोष्ठ॰ । अ वश्चाभिनय प्रयोक्तव्य । 15 (B.24-25 G. *om*) 16 (B 2 ; G 15) [1] B G. कर ... ) ममुखमोटी. C -भुजशिरवक्षा. [2] B शत्रो निय॰ण. 17 (B 27 ; G 16) [1] B गुरी विनयच्छिन, 18 (B 28 G.17). [1] B G स्फुरिताष्ठ [2] B G. प्रणयोपगताकुर्य. 19 (B.29 ; G 18). [1] B G. अभिनेय कृतरावृहित. 20 (B 30 31 ; G.19 and *prose*). [1] G. हिरसान्तरचारी, [2] G भवति रोष, B माति कोप, [3] G. शौर्यसाधादि. [4] G. धैर्यत्याग. 21 (B.32-33 G.20 and *prose*). [1] B.G.॰ दप्रमादोद्यमादिभि॰

भयं नाम स्त्रीनीचप्रकृतिकं गुरुराजापराधशून्यागाराटवीपर्वतदर्शन[2]निर्भत्सन-दुर्दिननिशान्धकारोलूकनक्तञ्चारारावश्रवणादिभिर्विभावैरुत्पद्यते। तस्य प्रवेपित-करचरणहृदयकम्पनस्तम्भमुखशोषणजिह्वापरिलेहनस्वेद- [3]वेपथुपरित्राणमन्वेषणधावनो-त्क्रुष्टादिभिरनुभावैरभिनयः प्रयोक्तव्यः।

अत्र श्लोकाः—

गुरुराजापराधेन रौद्राणाञ्चापि दर्शनात्।
श्रवणादपि घोराणां भयं मोहेन जायते ॥२२॥
[1]गात्रादिकम्पवित्रासैः वक्त्रशोषणसम्भ्रमैः।
विस्फारितेक्षणैः कार्यमभिनेयं क्रियागुणैः ॥२३॥
सत्त्ववित्रासनोद्भूतं भयमुत्पद्यते नृणाम्।
स्रस्ताङ्गाक्षिनिमेषैश्चाप्यभिनेयत्तु नर्तकैः ॥२४॥

अत्रार्या—

करचरणहृदयकम्पैः [1]स्तम्भनजिह्वोपलेहमुखशोषैः।
[2]स्रस्तसुविषण्णगात्रैरस्याभिनयः प्रयोक्तव्यः ॥२५॥

जुगुप्सा नाम स्त्रीनीचप्रकृतिका। सा [4]चाहृद्यश्रवणदर्शनादिभिर्विभावै-रुत्पद्यते। तस्याः सर्वाङ्गसङ्कोचननिष्ठीवनमुखविकूणनहृल्लेखादिभिरनुभावैरभिनयः प्रयोक्तव्यः।

भवत्यत्र श्लोकः—

नासाप्रच्छादनेनेह गात्रसङ्कोचनेन च।
उद्वेजनैः सहृल्लेखैर्जुगुप्सामभिनिर्दिशेत् ॥२६॥

विस्मयो नाम मायेन्द्रजालमानुषकर्मातिशयविद्याचित्रपुस्तच्छिल्पातिशयाद्यै-र्विभावैरुत्पद्यते। तस्य [1]नयनविस्तारानिमिषप्रेक्षणभ्रूक्षेपणरोमहर्षसाधुवादादिभिरनु-भावैरभिनयः प्रयोक्तव्यः।

[2] B G. निर्भर्त्सनकान्तारद्- [3] B - वेपथुत्रासपरित्राण. 22 (B.34; G 21) 23 (B 35; G 22). [1] B G गात्रकम्पनविभ्रान्ते 24 (B 36; G.23) 25 (B 37 and *prose*; G.24 and *prose*). [1] B मुखशोषणवदनलेहनसम्भ्रमैः, [2] B स्तम्भनवदनवैवर्ण्य स्रस्ताङ्गैरभिनयोऽस्य. [3] G सविकारैः. [4] B. अश्रवणदर्शनानि- 26 (B 40-41; G.25 and *prose*). [1] B. -रोमहर्षणादि.कम्प-

अत्र श्लोकः—

> कर्मातिशयनिर्वृत्तो विस्मयो हर्षसम्भवः ।
> सिद्धिस्थाने त्वसौ साध्यो प्रहर्षपुलकादिभिः ॥२७॥

[1]एवमेते स्थायिभावाः प्रत्यवगन्तव्याः ।

व्यभिचारिण इदानीं [2]वक्ष्यामः—अत्राह व्यभिचारिण इति कस्माद् उच्यते ? वि अभि इत्येतावुपसर्गौ । चर गतौ धातुः । [3]विविधमभिमुखेन रसेषु[4] चरन्तीति व्यभिचारिणः[5] । चरन्ति नयन्तीत्यर्थः । कथं नयन्ति ? उच्यते—यथा सूर्य इदं नक्षत्रममुं वासरं नयतीति । न च तेन बाहुभ्यां स्कन्धेन वा नीयते । किं तु लोकप्रसिद्धमेतत् । यथायं सूर्यो नक्षत्रं दिनं वा नयतीति एवमेते व्यभिचारिण इत्यवगन्तव्याः । [6]इमे एवं गृहीतास्त्रयस्त्रिंशद्भावाः । तान् वर्णयिष्यामः ।

तत्र निर्वेदो नाम दारिद्र्योपगमाधिक्षेपाकुष्टक्रोधताडनेष्टजनवियोगतत्त्वज्ञानादिभिर्विभावैरुत्पद्यते । स्त्रीनीचप्रकृतीनां तमभिनयेत् रुदितविनिश्वसितोच्छ्वसितसंप्रधारणादिभिरनुभावैः—

भवति चात्र श्लोकः—

> दारिद्र्येष्टवियोगैश्च निर्वेदो नाम जायते ।
> संप्रधारणनिःश्वासैस्तस्य त्वभिनयो भवेत् ॥२८॥

अत्रानुवश्ये आर्ये भवतः—

> इष्टजनविप्रयोगाद् दारिद्र्याद् व्याधितस्तथा दुःखात् ।
> [1]परवृद्धिं वा दृष्ट्वा निर्वेदो नाम संभवति ॥२९॥
> बाष्पपरिप्लुतनयनः पुनश्च[1] निःश्वासदीनमुखनेत्रः ।
> योगीव [2]ध्यानपरो भवति हि निर्वेदवान् पुरुषः ॥३०॥

27 (B. 42-43 ; G.26 and *prose*). [1] G. एवमप्येते ; B. एवमेते स्थायिनो भावा रसमज्ञाः प्र०. [2] B. व्याख्यास्याम [3] C. चात्वर्थं नानारसोपेतान् विविधम्. [4] G. रसान् [5] B. adds नाना रसोपेतान् प्रयोगे रसान् नयन्तीति व्यभिचारिण अत्राह कथं नयन्तीति. [6] B. त इह संचाराभिहिता-स्त्रयस्त्रिंशद्व्यभिचारिणो भावा तान्वर्णयिष्याम. G. त इमे संचाराभिहितास्त्रयस्त्रिंशद्भावा तान्, C. इति व्यभिचारिणस्ते इमे एवं गृहीतास्त्रयस्त्रिंशद्भावा तान् [7] B.G. दारिद्र्य व्याधिअवमानाधि-क्षेपाकुष्टक्रोधताडने. 28 (B.44 , G.27). 29 (B 45-46 ; G 28). [1] B. चापि परस्य दृष्ट्वा. 30 (B.47-48 ; G.29). [1] G पुनः पुनः श्वास. [2] G. ध्यानरतो.

ग्लानिर्नाम [3]वान्तविरिक्तव्याधितपोनियमोपवासमनस्तापातिपानमदनसेवातिव्यायामाध्वगमनक्षुत्पिपासानिद्राच्छेदादिभिर्विभावैः समुत्पद्यते । तस्याः क्षामवाक्यनयनकपोलमन्दपदोत्क्रमानुत्साहतनुगात्रवैवर्ण्यादिभिरनुभावैरभिनयः प्रयोक्तव्यः ।

अत्रार्ये भवतः—

वान्तविरिक्तव्याधिषु तपसा जरसा च जायते ग्लानिः ।
कार्श्येन साभिनेया [1]मन्दक्रमणानुकम्पेन ॥३१॥
गदितैः क्षामक्षामैर्नेत्रविकारैश्च दीनसञ्चारैः ।
[1]श्लथभावाच्चाङ्गानां मुहुर्मुहुर्निर्दिशेद् ग्लानिम् ॥३२॥

शङ्का नाम [2]सन्देहात्मिका स्त्रीनीचाना। चौर्याभिग्रहणनृपापराधपापकर्मकरणादिभिर्विभावैः समुत्पद्यते । सा च [3]मुहुर्मुहुरवलोकनावकुण्ठनमुखशोषणजिह्वापरिलेहनमुखवैवर्ण्यवेपनशुष्कोष्ठकण्ठावसादादिभिरनुभावैरभिनीयते । अत्र श्लोकः —

चौर्यादिजनिता शङ्का प्रायः कार्या भयानके ।
प्रियव्यलीकजनिता तथा शृङ्गारिणी मता ॥३३॥

अत्राकारसंवरणमपि [1]केचिदिच्छन्ति । तच्च कुशलैरुपाधिभिरिङ्गितैश्चोपलक्ष्यम् ।
अत्रार्ये भवतः—

द्विविधा शङ्का कार्या ह्यात्मसमुत्था च परसमुत्था च ।
या तत्रात्मसमुत्था सा ज्ञेया दृष्टिचेष्टाभिः ॥३४॥
किंचित् [1]प्रवेपिताङ्गो [2]तथोन्मुखो वीक्षते च पार्श्वानि ।
गुरुसज्जमानजिह्वः श्यामास्यः शङ्कितः पुरुषः ॥३५॥

असूया नाम नानापराधद्वेषपरैश्वर्यसौभाग्यमेधालीलाविद्यादिभिर्विभावैरुत्पद्यते ।

[3] B -मनस्तापातिश्रमदन्मदसेवनातिव्यायामा. 31 (B 49 ; G 30-31 . [1] B G. मन्दमदैन कम्पेन. 32 (B.50-51 ; G31) [1] B G. श्लथभावेनाङ्गाना. [2]G. *om* सन्देहात्मिका स्त्रीनीचानाम्, G.-स्त्रीनीचप्रभवा. [3] G.-नावकुण्ठन, B.-नावकुण्ठन ''रैवर्ण्यस्वरभेदवेपथुशुष्कोष्ठकण्ठावसादाद्यादिरनुभावैरभिनयः प्रयोक्तव्यः. 33 (B 52-53 , G 32 and *prose*) [1] B इच्छन्तीति केचित्. 34 (B.54 ; G 33) 35 (B 55 56 ; G 34 and *prose*). [1] B.-ताङ्गस्त्वधोमुखो. [2] C. मुहुर्मुहुर्वीक्षते

तस्याश्च परिषदि दोषप्रख्यापनं [1]गुणोपघातेर्ष्याचक्षुःप्रदानाधोमुखभ्रुकुटिक्रियावज्ञान-कुत्सनादिभिरनुभावैरभिनयः प्रयोक्तव्यः ।

अत्रार्ये भवतः—

परसौभाग्येश्वरतामेधालीलासमुच्छ्रयं दृष्ट्वा ।
[1]उत्पद्यते ह्यसूया कृतापराधो भवेद्यश्च ॥३६॥
भ्रुकुटिकुटिलोत्कटमुखैः सेर्ष्याक्रोधपरिवृत्तवक्त्रैः[2] ।
गुणनाशनविद्वेषैरस्याभिनयः प्रयोक्तव्यः ॥३७॥

अथ मदो नाम मद्योपयोगादुत्पद्यते । स च त्रिविधः पञ्चविभावश्च ।

अत्रार्या भवन्ति—

त्रिविधस्तु मदः कार्यस्तरुणो मध्यस्तथावकृष्टश्च ।
करणं पञ्चविधं स्यात् [1]तस्याभिनये प्रयोक्तव्यम् ॥३८॥
कश्चिन् मत्तो गायति रोदिति कश्चित्तथा हसति कश्चित् ।
परुषवचनाभिधायी कश्चित् कश्चित् तथा स्वपिति ॥३९॥
उत्तमसत्त्वः शेते हसति च गायति च मध्यमप्रकृतिः ।
परुषवचनाभिधायी रोदित्यपि चाधमप्रकृतिः ॥४०॥
स्मितवदनमधुररागो हृष्टतनुः किञ्चिदाकुलितवाक्यः ।
सुकुमाराविद्धगतिस्तरुणमदस्तूत्तमप्रकृतिः ॥४१॥
स्खलिताघूर्णितनयनः स्रस्तव्याकुलितबाहुविक्षेपः ।
[1]कुटिलव्याविद्धगतिर्मध्यमदो मध्यमप्रकृतिः ॥४२॥
नष्टस्मृतिर्हतगतिश्छर्दितहिक्काकफैः सुबीभत्सः ।
गुरुसज्जमानजिह्वो निष्ठीवति चाधमप्रकृतिः ॥४३॥
रङ्गे पिबतः कार्या मदवृद्धिर्नाट्ययोगमासाद्य ।
कार्यो मदक्षयो वै यः खलु पीत्वा प्रविष्टः स्यात् ॥४४॥

[2] C. -घातनावज्ञ. 36 (B 57; G.35). [1] G. -र्भिनेतव्यास्या. 37 (B.58-59; G.36 and prose). [2] G. परिवर्तनैर्विवै. B परिवृत्तनेत्रैश्च. 38 (B 60; B.37) [1] B.C. स्याभिनयः प्रयोक्तव्य-. 39 (B 61; B.38). 40 (B.6-; G 39). 41 (B 63; G.40). 42 (B.64; G. 41). [1] B. -र्निर्गतिर्मदी. 43 (B 65; G 42). 44 (B 66; G 43)

मन्त्रामाच्छोकाद्वा भयप्रकर्षाच्च कारणोपगत।
[1]उत्क्रम्यापि हि कार्यो [2]मदप्रणाशस्तथा तज्ज्ञैः ॥४५॥
एभिर्भावविशेषैर्मदो द्रुतं संप्रणाशमुपयाति।
अभ्युदयसुखैर्वाक्यैस्तथैव शोकः क्षयं याति ॥४६॥

श्रमो नाम [1]अध्वगतिव्यायामसेवादिभिर्विभावैरुत्पद्यते। तस्य [2]गात्रसंवाहनानि श्वसितमुखविकूणनजृम्भणाङ्गमर्दमन्दपादोत्क्षेपणनयनविघूर्णन सीत्कारादिभिरनुभावैरभिनयः प्रयोक्तव्यः।

अत्रार्या—

[1]अध्वगतिव्यायामैर्नरस्य सञ्जायते श्रमो नाम।
निःश्वासखेदगमनैस्तस्याभिनयः प्रयोक्तव्यः ॥४७॥

आलस्यं नाम स्वभावखेदव्याधिसौहित्यगर्भादिभिर्विभावैः समुत्पद्यते स्त्रीनीचानाम्। तदभिनयेत् सर्वकर्मप्रद्वेषशयनासनतन्द्रानिद्रासेवनादिभिरनुभावैः।

अत्रार्या—

[1]आलस्यं त्वभिनेयं खेदव्याधिस्वभावजं वापि।
आहारवर्जितानमारम्भाणामनारम्भात् ॥४८॥

दैन्य नाम दौर्गत्यमनस्तापादिभिर्विभावैरुत्पद्यते। [1]तस्याधृतिशिरोरोगगात्रस्तम्भमृजापरिवर्जनादिभिरनुभावैरभिनयः प्रयोक्तव्यः।

अत्रार्या—

चिन्तौत्सुक्यसमुत्था दुःखाद्वा दीनता भवेत् पुंसाम्।
सर्वमृजापरिहारैर्विविधोऽभिनयो भवेत्तस्य ॥४९॥

45 (B 67; G. 44). [1] C उत्क्रम्यापि. G. उत्क्रान्तापि. [2] B. -णाश क्रमागतैः-
46 (B.68-69; G 45 and *prose*) [1] B G अध्वव्यायाम [2] B गात्रपरिमर्दन निःश्वसित-विजृम्भित - क्षेपणनयनवदनविकूणनसीत्कारादिभि. 47 (B 70-71; G. 46 and *prose*). B. मृगाध्वव्यायामानरस्य। G-व्यायामान्नरस्य. 48 (B.72-73; G.47 and *prose*). [1] G. तस्याङ्गशिरो गात्रगौरवमृजा-, B गात्रगौरवास्यमन्दत्वमृजा-. 49 (B.74-75; G.48 and *prose*)

चिन्ता नाम ऐश्वर्यभ्रंशेष्टद्रव्यापहारदारिद्र्यादिभिर्विभावैरुत्पद्यते। तामभिनयेन् [1]निश्वसितोच्छ्वसितसन्तापध्यानाधोमुखचिन्तनतनुकार्श्यादिभिरनुभावै।

अत्रार्ये भवतः—

ऐश्वर्येष्टद्रव्यापहारजनिता बहुप्रकारा तु।
हृदयौत्सुक्योपगता चिन्ता तु नृणां समुद्भवति ॥५०॥
सोच्छ्वासैर्निश्वसितैः सन्तापैश्चैव हृदयशून्यतया।
अभिनेतव्या चिन्ता मृजाविहीनैरधृत्या च ॥५१॥

मोहो नाम [1]दैवोपघातव्यसनव्याधिभयावेगपूर्ववैरस्मरणादिभिर्विभावैरुत्पद्यते। तस्य [2]निश्चेष्टिताङ्गभ्रमणपतनघूर्णनादर्शनादिभिरनुभावैरभिनयः प्रयोक्तव्यः।

अत्र श्लोकः—

अस्थाने तस्करान् दृष्ट्वा [1]त्रासनैर्वा पृथग्विधैः।
तत्प्रतीकारशून्यस्य मोहः समुपजायते ॥५२॥

अत्र आर्या—

[1]व्यसनाभिघातभयपूर्ववैरसंस्मरणजो भवति मोहः।
[2]सर्वेन्द्रियसम्मोहादस्याभिनयः प्रयोक्तव्यः ॥५३॥

स्मृतिर्नाम सुखदुःखकृतानां भावानामनुस्मरणम्। सा च स्वास्थ्यजघन्यरात्रिनिद्राच्छेदसमानदर्शनोदाहरणचिन्ताभ्यासादिभिर्विभावैरुत्पद्यते। तामभिनयेत् शिरःकम्पनावलोकनभ्रूसमुन्नमनादिभिरनुभावैः।

अत्र श्लोकार्ये भवतः—

[1]सुखदुःखमतिक्रान्तं तथा मतिविभावितम्।
विस्मृतं च यथावृत्तं स्मरेद् यः स्मृतिमानसौ ॥५४॥

[1] G निश्वसितसन्ताप 50 (B 76, G.49) [1] B G हृदयवितर्कोपगता 51 (B 77-78; G.50 and *prose*) B G दैवोपघातव्यसनाभिघात. [2] B G निश्चेतनभ्रमणपतनो- 52 (B 79, G 51) [1] B चान्यैर्विविधैः 53 (B 80-81, G 52 and *prose*) [1] B -भवाद्वरोगजो, [2] B. मोहात्मका, G मोहात्मका. 54 (B 82, G 53) [1] B G. सुखदुःखमतिक्रान्तं तथा मतिविभावितं यथावृत्तम्। चिरविस्मृतं स्मरति यः स्मृतिमानिति वदितव्योऽसौ

स्वास्थ्याभ्याससमुत्था श्रुतिदर्शनसंभवा स्मृतिर्निपुणैः ।
शिरउद्वाहनकरणैर्भ्रूविक्षेपैः साभिनेतव्या ॥५५॥

धृतिर्नाम शौर्यविज्ञानश्रुतिविभवशौचाचारगुरुभक्त्य[1]धिकार्थलाभक्रीडादिभिर्विभावैरुत्पद्यते। तामभिनयेत् प्राप्तानां विषयाणामुपभोगाद् अप्राप्तातीतोपहृतविनष्टानामननुशोचनादिभिरनुभावैः ।

अत्रार्ये—

विज्ञानशौचविभवश्रुतिशक्तिसमुद्भवा धृतिः सद्भिः ।
भयशोकविषादाद्यै रहिता तु सदा प्रयोक्तव्या ॥५६॥
प्राप्तानामुपभोगः शब्दस्पर्शरसरूपगन्धानाम् ।
[1]अप्राप्तौ नहि शोको यस्यां हि भवेद् धृतिः सा तु ॥५७॥

व्रीडा नाम अकार्यकरणात्मिका [2]गुरुव्यतिक्रमणावज्ञानप्रतिज्ञानिर्वहण[2]पश्चात्तापादिभिर्विभावैरुत्पद्यते। तां [3]निगूढवदनाधोमुखचिन्तनोर्वीलिखनवस्त्राङ्गुलीयकसंस्पर्शनखनिकृन्तनादिभिरनुभावैरभिनयेत् ।

अत्रार्ये भवतः—

किञ्चिदकार्यं [1]कुर्वन् यो हि नरो दृश्यते शुचिभिरन्यैः ।
पश्चात्तापेन युतो व्रीडित इति वेदितव्योऽसौ ॥५८॥
लज्जानिगूढवदनो भूमिं विलिखन् [1]नखांश्च विनिकृन्तन् ।
वस्त्राङ्गुलीयकानां संस्पर्शं व्रीडितः कुर्यात् ॥५९॥

चपलता नाम रागद्वेषमात्सर्यामर्षेर्ष्याप्रतिकूल्यादिभिर्विभावैरुत्पद्यते। तस्याश्च वाक्पारुष्यनिर्भर्त्सनसम्प्रहारवधबन्ध[2]ताडनादिभिरनुभावैरभिनयः प्रयोक्तव्यः ।

अत्रार्या—

अविमृश्य तु यः कार्यं पुरुषो [1]वधताडनं समारभते ।
अविनिश्चितकारित्वात् स तु खलु चपलो बुधैर्ज्ञेयः ॥६०॥

55 (B 83-84 ; G 54 and prose) [1] B G -विक्रमौदार्यदर्शन C.-लाभविविधक्रीडा. 56 (B 85 ; G.55). 57 (B 86-87 ; G 56 and prose) [1] C सम्प्राप्तौ. B सम्प्राप्ते [2] C.प्रत्यादिष्ट before पश्चात्ताप-. [3] G विनम्र विलिखन. 58 (B 88 G 57) [1] G.कुर्वाणो एव यो B कुर्वन्नेव यो 59 (B 89-90 ; G 58) [1] C. नखांश्च [2] C G -ताडनताडनादि-. 60 (B 91 ; G 59) [1] C.वधताडनादिक

हर्षो नाम [2]मनोरथलाभेष्टजनसमागमन.परितोषदेवगुरुराजभर्तृप्रसादभोजना-च्छादनधनलाभोपभोगादिभिर्विभावैरुत्पद्यते । तमभिनयेत् [3]नयनवदनप्रसादप्रिय-भाषणालिङ्गन[3]कण्टकितालस्वेदादिभिरनुभावैः ।

अत्रार्ये भवतः—

[1]प्राप्ये वा प्राप्ये वा लब्धेऽर्थे प्रियसमागमे चापि ।
हृदयमनोरथलाभे हर्षः सञ्जायते पुंसाम् ॥६१॥
[1]नयनवदनप्रसादैः प्रियभाषालिङ्गनैश्च रोमाञ्चैः ।
ललितैश्चाङ्गविहारैः स्वेदाद्यैरभिनयस्तस्य ॥६२॥

आवेगो नाम उत्पातवातवर्षाग्निकुञ्जरोद्भ्रमणप्रियाप्रियश्रवणव्यसनाभिघाता-दिभिर्विभावैरुत्पद्यते । तत्रोत्पातकृतो नाम विद्युदुल्कानिर्घातप्रपतनचन्द्रसूर्योपराग-केतुदर्शनादिभिर्विभावैरुत्पद्यते । तमभिनयेत् [1]सर्वाङ्गस्रस्ततावैमनस्यमुखवैवर्ण्य-विस्मयादिभिः । वातकृतं [2]पुनरवगुण्ठनाक्षिमर्दनवस्त्रसंग्रहणत्वरितगमनादिभिरनुभावैः । वर्षकृतं नाम [3]सर्वाङ्गसंपिण्डनप्रधावनच्छत्राश्रयणादिभिः । अग्निकृतं तु [4]धूमाकुल-नेत्रसंकोचनाङ्गसंवेगनिक्रान्तपादादिभिः । कुञ्जरोद्भ्रमणकृतमपि त्वरितापसर्पणचपल-गमनभयस्तम्भवेपथुपश्चादवलोकनविस्मयादिभिः । प्रियश्रवणकृतं तु अभ्युत्थानालिङ्ग-नवस्त्राभरणप्रदानाश्रुपुलकादिभिः । अप्रियश्रवणकृतं [5]भूमिपतनपरिदेवितविषम-परिवर्तितपरिधावितविलापाक्रन्दितादिभिः । [6]व्यसनाभिघातकृतं तु [7]सहसापक्रमण-शस्त्रवर्मधारणगजतुरगरथारोहणसंप्रहरणादिभिरभिनयेत् ।

इत्येषोऽष्टविधो ज्ञेय आवेगः संभ्रमात्मकः ।
स्थैर्येणोत्तममध्यानां नीचानां चापसर्पणात् ॥६३॥

[2] G -लाभेष्टजन. [3] B G. -कण्टकितपुलकित स- 61 (B 93, G.60). [1] C. प्राज्ञे B. अप्राप्ये प्राप्ये. 62 (B 94-95, G 61 and *prose*) [1] C. -स्रस्तविषण्णवैमनस्य B G. वैवर्ण्यविषादविस्मय-. [2] B -अवकुण्ठना-, G. -वस्त्रावगुण्ठन- [3] B सर्वाङ्गसम्पीडन. G C -च्छत्राश्रयादिभिः [4] B नेत्रसंकोचनविधूननातिक्रान्तपादा-, G -नेत्राङ्गसंवेग विधूननातिक्रान्तपदान्ता-, C. -नेत्रसंकुचिताङ्गसंवेगविधूननातिक्रान्तपादादिभिः [5] B भूमिपतन-विषमविवर्तनपरिधावनविलापनाक्रन्दनादिभिः [6] B व्यसनाभिघातकृतं -तु. [7] B. सहसापक्रमण-शस्त्रवर्म ……संप्रहरणादि. G. समग्रशस्त्रवर्मवेदनाज C संप्रहरणादिभिः. 63 (B 96-97, G.62 and *prose*) [1] B एवमष्टविधस्त्वयम्.

अत्रार्ये भवतः—

अप्रियनिवेदनादिश्रवणाद्वधीरितवचनस्य[1] ।
शस्त्रक्षेपत्रासादावेगो नाम सम्भवति ॥६४॥
अप्रियनिवेदनाद्यो विषादभावाश्रयो ऽनुभावोऽस्य ।
[1]सहसारिदर्शनं चेत् [2]प्रहरणपरिघट्टनं कार्यम् ॥६५॥

जडता नाम सर्वकार्याप्रतिपत्तिः इष्टानिष्टश्रवणदर्शनव्याध्यादिभिर्विभावैरुत्पद्यते । [3]तामभिनयेदकथनाभाषणतूष्णींभावानिमेषनिरीक्षणपरवशत्वादिभिरनुभावैः ।

अत्रार्या—

इष्टं वानिष्टं वा सुखदुःखं वा न वेत्ति यो मोहात् ।
तूष्णीकः परवशगः स भवति जडसंज्ञकः पुरुषः ॥६६॥

गर्वो नाम ऐश्वर्यकुलरूपयौवनविद्याबलधनलाभादिभिर्विभावैरुत्पद्यते । तस्यावज्ञाधर्षणानुत्तरदानासंभाषणासावलोकनविभ्रमापहसनपारुष्यगुर्वतिक्रमणाधिक्षेपादिभिरनुभावैरभिनयः प्रयोक्तव्यः ।

अत्रार्या—

[1]विद्यावाप्ते रूपादैश्वर्यादथ धनागमाद्वापि ।
गर्वः खलु नीचानां दृष्ट्याङ्गविचारणैः कार्यः ॥६७॥

विषादो नाम [2]कार्यारम्भानिस्तरणदैवव्यापत्तिसमुत्थः । तमभिनयेत् सहायान्वेषणोपायचिन्तनोत्साहविघातवैमनस्यनिःश्वसितादिभिरनुभावैरुत्तममध्यमानाम् । अधमानां तु [3]परिधावनावलोकनमुखशोषणसृक्कपरिलेहननिद्रानिःश्वसितध्यानादिभिरनुभावैः ।

अत्रार्या श्लोकश्च—

कार्यानिस्तरणकृतश्चौर्याभिग्रहणराजदोषाद्यैः ।
दैवादिष्टो योऽर्थस्तदसम्प्राप्तौ विषादः स्यात् ॥६८॥

64 (B 98 ; G 63) [1] B निवेदनाद्वा सहसा ह्यभिधारितादिवचनेन, G. निवेदनाद्वा श्रवणाद् अवधारितादिवचनस्य. 65 (B 99-100 , G 64 and *prose*). [1] B G. -दर्शनादेत्. [2] B. परिघट्टने कार्यं. [3] C. -येत् कथनाभाषणतूष्णीभावाप्रतिभनिमेष-. 66 (B 101-102 ; G.65 and *prose*) [1] C वाक्पारुष्य for पारुष्य 67 (B 103-104 ; G 66 and *prose*) [1] विद्या वैभवगा-. [2] B. कार्यानिस्तरण. [3] B C -धावनावलोकन. 68 (B 105 ; G.67)

[1]वैचित्योपायचिन्ताभ्यां कार्यमुत्तममध्ययोः ।
निद्रानि श्वसितध्यानैरधमानां तु दर्शयेत् ॥६९॥

औत्सुक्यं नाम इष्टजनवियोगानुस्मरणोद्यानदर्शनादिभिर्विभावैरुत्पद्यते । तस्य [2]दीर्घनिःश्वसिताधोमुखविचिन्तननिद्रातन्द्रीशयनाभिलाषादिभिरभिनयः प्रयोक्तव्यः ।

अत्रार्या—

[1]इष्टजनादिवियोगादौत्सुक्यं जायते ह्यनुस्मृत्या ।
चिन्तानिद्रातन्द्रीगात्रगुरुत्वैरभिनयोऽस्य ॥७०॥

निद्रा नाम [2]दौर्बल्यश्रमक्लमदालस्यचिन्ताऽत्याहारस्वभावादिभिर्विभावैरुत्पद्यते । तामभिनयेद् [3]वदनगौरवगात्रपरिलोडननेत्रविघूर्णनजृम्भणगात्रविमर्दोच्छ्वसितनिःश्वसितसन्नगात्रताक्षिनिमीलनसम्मोहादिभिरनुभावैः ।

अत्रार्ये भवतः—

आलस्याद् दौर्बल्यात्क्लमाच्छ्रमाच्चिन्तनात् स्वभावाच्च ।
रात्रौ जागरणादपि निद्रा पुरुषस्य सम्भवति ॥७१॥
[1]तां [2]मुखगौरवगात्रपरिलोडननयननिमीलनजडत्वैः ।
जृम्भणगात्रविमर्दैरनुभावैरभिनयेत् [3]प्राज्ञः ॥७२॥

अपस्मारो नाम [4]देवनागयक्षराक्षसपिशाचादीनां [5]ग्रहणादनुस्मरणाद् उच्छिष्टशून्यागारसेवनाशुचि[6]-कालान्तरातिपातधातुवैषम्यादिभिर्विभावैरुत्पद्यते । तस्य स्फुरितकम्पितनिःश्वसितधावनपतन-[7]स्वेदवदनफेनहिक्काजिह्वापरिलेहनादिभिरनुभावैरभिनयः प्रयोक्तव्यः । अत्रार्ये भवतः—

भूतपिशाचग्रहणानुस्मरणोच्छिष्टशून्यगृहगमनात् ।
कालान्तरातिपातादशुचेश्च भवेद् अपस्मारः ॥७३॥

69 (B 106-107 ; G 68 and *prose*) [1] Bc. वैचित्र्येण य C. विचित्रोपाय- [2] G -श्वसनाधस्तन्द्रीश्वसनादिभिः. 70 (B 108 109 , G 69 and *pr*) [1] B G. इष्टजनस्य. [2] C -श्रमसदालस्य. [3] G गौरवगौरवोल्लुननेत्रघर्षण निमीलनमर्दक्रियासम्मोहादिः, B -गौरवगौरवलोडननेत्रघूर्णनगात्रविजृम्भणमात्रोच्छ्वसितसन्नगात्रताक्षिनिमीलनादि- 71 (B 110 ; G 70). 72 (B 111-112 ; G 71 and *prose*) [1] C तथा [2] B व परिमीलन-नयननिमीलनजडत्वैः [3] B[:] प्रयोक्ता [4] B G -यक्षनागब्रह्मराक्षस. [5] B G ग्रहणानुस्मरण. [6] B -कालान्तरा परिपतनव्याध्यादिभि. [7] B G स्वेदफेनस्तन 73 (B 113 , G 72).

सहसा भूमौ पतनं प्रकम्पनं वदनफेनमोक्षश्च ।
[1]निःसंज्ञस्योत्थानं रूपाण्येतान्यपस्मारे ॥७४॥

सुप्तं नाम [2]निद्रासमुत्थम् । [3]निद्राभिभवेन्द्रियविषयोपगमनमोहनक्षितितलशयनप्रसारणानुत्कर्षणादिभिर्विभावैः समुत्पद्यते । तदुच्छ्वसितनिःश्वसितसन्नगात्राक्षिनिमीलनसर्वेन्द्रियसम्मोहोत्स्वप्नादिभिरनुभावैरभिनयेत् ।

अत्रार्ये—

निद्राभिभवेन्द्रियोपगमनमोहनैर्भवेत् सुप्तम् ।
अक्षिनिमीलोच्छ्वसनैः स्वप्नायितजल्पितैः कार्यः ॥७५॥

सोच्छ्वासैर्निःश्वासैर्मन्दाक्षिनिमीलनेन निश्चेष्टः ।
सर्वेन्द्रियसंमोहात्सुप्तं [1]स्वप्नं प्रयुञ्जीत ॥७६॥

विबोधो नाम [2]निद्राच्छेदाहारविपरिणामदुःस्वप्नतीव्रशब्दस्पर्शादिभिर्विभावैरुत्पद्यते । तं [3]जृम्भणाक्षिमर्दनशयनमोक्षादिभिरनुभावैरभिनयेत् ।

अत्रार्या—

आहारविपरिणामाच्छब्दस्पर्शादिभिश्च सम्भूतः ।
प्रतिबोधस्त्वभिनेयो जृम्भणवदनाक्षिपरिमर्दैः ॥७७॥

अमर्षो नाम विद्यैश्वर्यधनबलाधिकैरधिक्षिप्तस्यावमानितस्य वा समुत्पद्यते । तं शिरःकम्पनप्रस्वेदाधो-[1]मुखविचिन्तनाध्यवसायध्यानोपायान्वेषणादिभिरनुभावैरभिनयेत् ।

अत्र श्लोकः —

आक्षिप्तानां सभामध्ये विद्यैश्वर्यबलाधिकैः ।
[1]नृणामुत्साहसंपन्नो ह्यमर्षो नाम जायते ॥७८॥

74 (B 114-115 ; G.73 and *prose*) [1] C. निःकम्पस्योत्थान [2] B G *om.* [3] G.C. om till समुत्पद्यते. 75 (B.116 ; C G *om*) 76 (B 117-118 ; G 74 and *prose*). [1] B स्वप्नं च युञ्जीत [2] B -च्छेदाहारविपरिणामनिद्राच्छेदस्वप्नान्तीव्रशब्दस्पर्शश्रवणादिभि. [3] C.G. मोट(चा)न र(ण)मुखावेपथु(भग्नविवेश)-जनिबोटनादि-, 77 (B 119-120 ; G.75 and *prose*). [1] B. -मुखचिन्तनध्यानाध्यवसायोपायसहाय मेषणा., G -विचिन्तनोत्साहाध्यवसायध्यानोपाया-. 78 (B 121 , G.76 . [1] G. नृणामुत्सहसंपन्नो.

लज्जाह्यध्यवसायाभ्यामधोमुखविचिन्तनैः ।
शिरःप्रकम्पस्वेदाद्यैस्तु प्रयुञ्जीत नाट्यवित्[1] ॥७९॥

अवहित्थं नाम आकारप्रच्छादानात्मकम्। तच्च [2]लज्जाभयापजयगौरव-जैह्म्यादिभिर्विभावैरुत्पद्यते । [3]तस्यान्यथाकथनावलोकितकथाभङ्गकृतकधैर्यादिभिरनुभावैरभिनयः प्रयोक्तव्यः । अत्र श्लोकः—

धार्ष्ट्यजैह्म्यादिसंभूतमवहित्थं भयात्मकम् ।
तच्चागणनया कार्यं [1]नातिचोत्तरभाषणात् ॥८०॥

[2]अथोग्रता नाम [3]चौर्याभिग्रहनृपापराधासत्प्रलापादिभिर्विभावैरुत्पद्यते । तां च वधबन्धनताडननिर्भर्त्सनादिभिरनुभावैरभिनयेत ।

अत्रार्या—

[1]चौर्याभिग्रहयोगान्नृपापराधात्तथोग्रता[2] भवति ।
वधबन्धताडनादिभिरनुभावैरभिनयस्तस्याः ॥८१॥

मतिर्नाम नानाशास्त्रार्थचिन्तनोहापोहादिभिर्विभावैरुत्पद्यते । तामभिनयेच्छिष्योपदेशार्थविकल्पनसंशयच्छेदनादिभिरनुभावैः ।

अत्र श्लोकः—

[1]नानाशास्त्रविनिष्पन्ना मतिः संजायते नृणाम् ।
शिष्योपदेशार्थकृतस्तस्यास्त्वभिनयो भवेत् ॥८२॥

व्याधिर्नाम वातपित्तकफसंनिपातप्रभवः । तस्य ज्वरादयो विशेषाः । ज्वरस्तु खलु द्विविधः सशीतः सदाहश्च । [2]सशीतस्तावत् [3]प्रवेपितसर्वाङ्गोत्कम्पनकुञ्चितहनुचलननासाविकूणनमुखशोषणरोमाञ्चपरिदेवितादिभिरनुभावैरभिनये प्रयोक्तव्यः । [4]सदाहस्तु [5]विक्षिप्तवस्त्रकरचरणभूम्यभिलाषानुलेपनशीताभिलाषपरिदेवितोत्क्रुष्टादिभिः ।

79 (B 122-123; G 77 and *prose*). [1] B G. पश्चित्. [2] G. om भयजय. [3] B.-कदनावधीरित-, C.-कदाभङ्गकृतैरनुभावैः. 80 (B 124-125; G 78 and *prose*). [1] C. तानि for नाति. [2] B उग्रत. [3] B C.-ग्रहण- for -ग्रह-. 81 (B. 126-127; G 79 and *prose*). [1] C. चौर्यग्रहणनिरोधात् B. चौर्याभिग्रहणयमान्. [2] B. -राधाद्दोषता. 82 (B 128-'29; G 80 and *prose*). [1] G. नानाशास्त्रार्थनिष्पन्ना. B. न नाशास्त्रार्थबोधेन. [2] B G. adds तत्र before this [3] G. -चलनाक्षिकूणन-रोमाञ्चपरिदेविता, C. नासाविकूणन...रोमाञ्चास नैकपरिदेवनादि-. [4] B. सदाहो नाम, C. सदाह. पुनः.

ये चान्येऽपि व्याधयः तेऽपि खलु [6]मुखविकूणनगात्रस्तम्भनिःश्वसितस्तनितोत्क्रुष्टवेपनादिभिरनुभावैरभिनेयाः ।

अत्र श्लोकः —

सामान्यतस्तु व्याधीनां कर्तव्योऽभिनयो बुधैः ।
स्रस्ताङ्गगात्रविक्षेपैस्तथा [1]मुखविकूणनैः ॥८३॥

उन्मादो नाम इष्टजनवियोगविभवनाशाभिघातवातपित्तश्लेष्मप्रकोपादिभिर्विभावैरुत्पद्यते । तमनिमित्तहसितरुदितोत्क्रुष्टासम्बद्ध-[2]प्रलापशयितोपविष्टोत्थितप्रधावितनृत्तगीतपठितभस्मपांसुरवधूलनतृणनिर्माल्यकुचेलचीर-[3]घटकपालशरावाभरणधारणोपभोगैरनेकैश्चानवस्थितचेष्टाकरणादिभिरनुभावैरभिनयेत् ।

अत्रार्ये भवतः —

इष्टजनविभवनाशादभिघाताद्वातपित्तकफकोपात् ।
विविधाच्चित्तविकारादुन्मादो नाम सम्भवति ॥८४॥
अनिमित्तहसितरुदितोपविष्टगतिप्रधावितोत्क्रुष्टैः ।
अन्यैश्च विकारकृतैरुन्मादं सम्प्रयुञ्जीत ॥८५॥

मरणं नाम व्याधिजमभिघातजं च । [1]तत्र यदान्त्रयकृच्छूलदोषधातुवैषम्यगण्डपिटकाज्वरविषूचिकादिभिर्विभावैरुत्पद्यते तद्व्याधिप्रभवम् । अभिघातजं तु शस्त्राहिदंशविषपानश्वापदगजतुरगरथ[2]पशुयानपातविनाशप्रभवम् । एतयोरिदानीमभिनयविशेषं वक्ष्यामि । तत्र व्याधिजे [3]विषण्णगात्रव्यपेताङ्गचेष्टितनिमीलितनयन[4]हिक्काश्वासोपेतमनवेक्षितपरिजनमव्यक्ताक्षरकथनादिभिरनुभावैरभिनयेत् ।

अत्र श्लोकः —

व्याधीनामेकभावो हि मरणाभिनयः स्मृतः ।
विषण्णगात्रैर्निश्चेष्टैरिन्द्रियैश्च विवर्जितः ॥८६॥

[1] G [illegible], B [illegible] [6] B [illegible]. 83 (B 130-131, G 81 and prose). [1] B [illegible] [2] C [illegible] [3] C [illegible]. 84 (B 132, G 82). 85 (B 132-133, G 83 and prose). [1] B [illegible] [2] C [illegible] [3] C [illegible] [4] C [illegible]. 86 (B 134-135, G 84 and prose). [1] B adds before this — [illegible]

अभिघातजे तु नानाप्रकाराभिनयविशेषाः। यथा [2]शस्त्रक्षते तावत् [3]सहसा-भूमिपतनादिभिरनुभावैरभिनयः प्रयोक्तव्यः। [4]अहिदष्टे तु विषपीते वा विषवेगाः, यथा कार्श्यवेपथुदाहहिक्काफेनस्कन्धभङ्गजडतामरणानीत्यष्टौ विषवेगाः।

अत्रानुवंश्यौ श्लोकौ भवतः—

कार्श्यं तु प्रथमे वेगे द्वितीये [1]वेपथुस्तथा।
दाहं तृतीये हिक्कां तु चतुर्थे सम्प्रयोजयेत् ॥८७॥
फेनं तु पञ्चमे कुर्यात् षष्ठे [1]तु स्कन्धभञ्जनम्।
जडतां सप्तमे कुर्यादष्टमे मरणं तथा ॥८८॥

अत्रार्या भवति—

श्वापदजं [1]तुरगरथोद्भवं तु पशुयानपतनजं चापि।
शस्त्रक्षतवत् कुर्यादनपेक्षितगात्रसञ्चारम् ॥८९॥
इत्येवं मरणं ज्ञेयं नानावस्थान्तरात्मकम्।
प्रयोक्तव्यं बुधैः सम्यग् यथावागङ्गचेष्टितैः ॥९०॥

त्रासो नाम विद्युदुल्काशनिपात-[1]निर्घाताम्बुधरमहासत्त्वदर्शनपश्वारावादिभिर्वि-भावैरुत्पद्यते। संक्षिप्ताङ्गोत्कम्पनवेपथुस्तम्भरोमाञ्चगद्गदप्रलापादिभिरनुभावैरभि-नयेत्।

अत्र श्लोकः—

महाभैरवनादाद्यैस्त्रासः समुपजायते।
स्रस्ताङ्गाक्षिनिमेषाद्यैस्तस्य त्वभिनयो भवेत् ॥९१॥

वितर्को नाम [1]सन्देहविमर्शविप्रत्ययादिभिर्विभावैरुत्पद्यते। तमभिनयेद् विविध-

[1] [illegible]. [2] B. [illegible]. [3] G. -[illegible]. B. -[illegible]. [4] B. [illegible]. G. अहिदष्टविषपीते वा नानाविधैः..
87 (B 137, G 85) [1] G C. [illegible] 88 (B 138; G 86) [1] B.G स्कन्धस्य भञ्जनम्.
89 (B.139, G 87). [1] C. -[illegible]. 90 (B 140-141; G 88) [1] C. -[illegible]. 91 (B 142-143; G 89). [1] B -[illegible]-

विचारितसंलापसंप्रधारण-[3]मन्त्रसंगूहनादिभिरनुभावैः ।

अत्र श्लोकः—

> विचारणादिसंभूतः [1]संदेहजननात्मकः ।
> [2]वितर्कस्त्वभिनेयः स्याच्छिरोभ्रूपक्ष्मकम्पनैः ॥९२॥

एवमेते त्रयस्त्रिंशद् व्यभिचारिणो [3]भावा देशकालावस्थानुगतमध्यमाधमोत्तम-[4]स्त्रीपुंसैः प्रयोगवशादुत्पाद्या इति ।

अत्र श्लोकः—

> त्रयस्त्रिंशदिमे भावा [1]विज्ञेया व्यभिचारिणः ।
> सात्त्विकांस्तु पुनर्भावान् व्याख्यास्याम्यनुपूर्वशः ॥९३॥

अत्राह किमन्ये भावाः सत्त्वेन [2]विनाभिनीयन्ते [3]यत एते सात्त्विका इत्युच्यन्ते ? [4]अत्रोच्यते इह सत्त्वं नाम मनःप्रभवम् । तच्च समाहितमनस्त्वाद् [5]उत्पद्यते । मनसः समाधानाच्च सत्त्वनिष्पत्तिर्भवति । तस्य च योऽसौ स्वभावः [6]रोमाञ्चाश्रुवैवर्ण्यादिको न शक्यतेऽन्यमनसा कर्तुम् इति लोकस्वभावानुकरणत्वाच्च [8]नाट्यस्य सत्त्वमीप्सितम् । को दृष्टान्त इति चेत्, अत्रोच्यते इह हि नाट्यधर्मीप्रवृत्ताः सुखदुःखकृता भावाः [9]तथा सत्त्वविशुद्धाः कार्याः यथा स्वरूपा भवन्ति । तत्र दुःखं नाम रोदनात्मकम् । तत्कथमदुःखितेन, सुखं प्रहर्षात्मकम् [10]असुखितेनाभिनेतुं शक्यते इति सत्त्वमीप्सितमिति कृत्वा सात्त्विको नाम इति भावः । एतदेवास्य [11]सत्त्वं [12]यद् दुःखितेन सुखितेन वा अश्रुरोमाञ्चौ दर्शयितव्याविति [13]व्याख्यातम् । इमे

[2] C. -मन्त्रसगूहनादि- 92 (B.144-145; G.90 and *prose*). [1] B. सन्देहातिशयात्मकः. [2] B वितर्कं चोऽभिनेयस्तु. [3] C. विभावा. [4] G स्त्रीपु मध्यमाधमोत्तमस्थानाः. 93 (B. 146-147; G.91 and *prose*) [1] G. व्यभिचारा प्रकीर्तिताः. [2] G. ना for विना. [3] B. यस्मादुच्यन्ते एते सात्त्विका इति. [4] B अत्रोच्यते एवमितत् कस्मात् । इह हि. G अत्रोच्यते इह हि. [5] B. उच्यते तस्य समाधौ सत्त्वनिर्वर्त्यं भवति. [6] C. reads before this रोमाञ्च. [7] C, शक्यते मनसा कर्तुं. [8] C. नाट्यस्य [9] C. तथा सत्त्वविशुद्धाभिनेया कर्या यथा स्वरूपो भवति [10] G. अभिनेयम्. B. अभिनेतुं. [11] B.C. सत्त्व B [सं]. [12] B दुःखितेन रुदता. [13] B.G. इत्यत सात्त्विका भावा इत्यभिव्याख्याताः for व्याख्यातम्.

स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरसादोऽथ वेपथुः ।
वैवर्ण्यमश्रुप्रलय इत्यष्टौ सात्त्विकाः [1]स्मृताः ॥९४॥

तत्र

क्रोधभयहर्षलज्जादुःखश्रमरोगतापघातेभ्यः ।
व्यायामक्लमधर्मात् स्वेदः सम्पीडनाच्चैव ॥९५॥

हर्षभयरोगविस्मयविषादमदरोषसंभवः स्तम्भः ।
शीतभयहर्षरोषस्पर्शजरासम्भवः कम्पः ॥९६॥

आनन्दामर्षाभ्यां धूमाञ्जनजृम्भणाद् भयाच्च ।
[1]शोकानिमिषप्रेक्षणशीताद्रोगाद् भवेदस्रम् ॥९७॥

शीतक्रोधभयश्रमरोगक्लमतापजं च वैवर्ण्यम् ।
स्पर्शभयशीतहर्षात् क्रोधाद्रोगाच्च रोमाञ्चः ॥९८॥

[1]स्वरसादो भयहर्षक्रोधज्वररोगमदजनितः ।
श्रममूर्च्छामदनिद्राभिघातमोहादिभिः प्रलयः ॥९९॥

एवमेते बुधैर्ज्ञेया भावा ह्यष्टौ तु सात्त्विकाः ।
कर्म चैषां प्रवक्ष्यामि ह्यनुभावानुभावकम् ॥१००॥

[1]निश्चेष्टो निष्प्रकम्पश्च [2]स्थितः शून्यजडाकृतिः ।
[3]निःसंज्ञः स्तब्धगात्रश्च स्तम्भं त्वभिनयेद् बुधः ॥१०१॥

[1]व्यजनग्रहणाच्चापि स्वेदापनयनेन च ।
स्वेदस्याभिनयो योज्यस्तथा वाताभिलाषतः ॥१०२॥

मुहुः कण्टकितत्वेन तथोल्लुकसनेन च ॥१०३॥
[1]रोमाञ्चस्त्वभिनेयोऽसौ गात्रसंस्पर्शनेन च ॥१०३॥

94 (B 148 ; G.92) [1] B.G मताः. 95-97 (B.149-151 ; G.93-95) [1] B G. चनिमिषप्रेक्षणात् शीताद् रोगात्. 98 (B.152 ; G 96) 99 (B 153 ; G.97). [1] B G. स्वरभेद. 100 (B 154, G.98) 101 (B 155 ; G 100). [1] B. निःसंज्ञो [2] C. स्थित ; G. स्थिर. [3] B. स्तब्धगात्रतया चेत. 102 (B 156 ; G.99). [1] G C व्यञ्जन. 103 (B. 157 ; G 102). [1] G. पुलकेन च रोमाञ्च गात्रसंस्पर्शनेन च B. पुलकेन च, रोमाञ्च गात्रस्पर्शेन दर्शयेत्.

[1]स्वरभेदं तथा चैव [2]भिन्नगद्गदनिस्वरैः ।
वेपनात् स्फुरणात् कम्पाद् वेपथुं संप्रयोजयेत्[3] ॥१०४॥
मुखवर्णपरावृत्त्या नाडीपीडनयोगतः ।
वैवर्ण्यमभिनेतव्यं [1]प्रयत्नाद्देहसंश्रयम् ॥१०५॥
[1]नेत्रसंमार्जनैर्बाष्पैरश्रु त्वभिनयेद् बुधः ।
[2]निश्चेष्टो निष्प्रकम्पत्वादव्यक्तश्वसितादपि ।
[3]मेदिनीपतनाच्चापि प्रलयाभिनयो भवेत् ॥१०६॥
एकोनपञ्चाशदिमे यथावद् भावास्त्ववस्था [1]गदिता मया च ।
[2]येषां च ये यत्र रसे नियोज्यास्तान् श्रोतुमर्हन्ति च विप्रमुख्याः ॥१०७॥
ग्लानि शङ्का ह्यसूया च श्रमश्चपलता तथा ।
सुप्त निद्रावहित्थं च शृङ्गारे वेपथुस्तथा ।१०८॥
आलस्यौग्र्यजुगुप्साभिर्भावैस्तु परिवर्जिता ।
उद्भावयन्ति शृङ्गारं सर्वे भावा स्वसंज्ञया ॥१०९॥
[1]ग्लानि शङ्का ह्यसूया च श्रमश्चपलता तथा ।
सुप्तनिद्रावहित्थश्च हास्ये भावाः प्रकीर्तिता.[2] ॥११०॥
निर्वेदश्चैव चिन्ता च दैन्यग्लान्यस्रमेव च ।
जडता मरणं चैव व्याधिश्च करुणे रसे ॥१११॥
गर्वोऽसूया तथोत्साह आवेगो मद एव च ।
क्रोधश्चपलता हर्षो रौद्रे तूग्रत्वमेव च ॥११२॥
असम्मोहस्तथोत्साहः आवेगोऽमर्ष एव च ।
मतिश्चैव तथोग्रत्वं हर्ष उन्माद एव च ॥११३॥

104 (B 158 ; G 101) [1] B. स्वरभेदोऽभिनेतव्यो [2] B C. गद्गदस्वनैः [3] B. सम्यग् दर्शयेत्.
105 (B 159 ; G 103b-104a) [1] B प्रयत्नादङ्गसंश्रयम् 106 (B.160 ; G.103a, 104) [1] B. बाष्पाम्बुप्लुतनेत्रत्वान्नेत्रसंमार्जनेन च । मुहुरश्रुकणापातैरस्रं त्वभिनयेद्बुधः (100). [2] C. om this hem [3] B G. महीनिपतनाच्चापि 107 (B 162 ; 104) [1] B उदिता. G. एषां च ये. B. मुख्य ये. [3] B (163-168) has the five more couplets:
108-109 (B.169 ; G 106-107) [1] Bd. reads 108 in B p 383 f n 7. [2] B. adds after this यथा रसेभ्यो निष्पत्तिर्भावानां विस्तरेण च । रसोत्पत्तिं प्रवक्ष्यामि रसानामथ कल्पितम्.
110-113 (B 171-174 ; G.108-111)

रोमाञ्चः प्रतिबोधश्च क्रोधासूये धृतिस्तथा ।
गर्वश्चैव वितर्कश्च वीरे भावा भवन्ति हि ॥११४॥
[1]स्वेदश्च वेपथुश्चैव रोमाञ्चो गद्गदस्तथा ।
[2]त्रासश्च मरणं चैव दैवर्ण्यं च भयानके ॥११५॥
अपस्मारस्तथोन्मादो विषादो मद एव च ।
मृत्युर्व्याधिर्भयं चैव भावा [1]बीभत्ससंश्रिता. ॥११६॥
स्तम्भ. स्वेदश्च मोहश्च रोमाञ्चो विस्मयस्तथा ।
आवेगो जडता हर्षो मूर्छा चैवाद्भुताश्रयाः ॥११७॥
[1]ये त्वेते सात्त्विका भावा नानाभिनयसंश्रिता. ।
रसेष्वेतेषु सर्वेषु विज्ञेया नाट्ययोक्तृभिः ॥११८॥
न ह्येकरसजं काव्यं किञ्चिदस्ति प्रयोगतः ।
भावो वापि रसो वापि प्रवृत्तिर्वृत्तिरेव वा ॥११९॥
[1]सर्वेषा समवेतानां रूपं यस्य भवेद् बहु ।
स मन्तव्यो रसः स्थायी शेषा सञ्चारिणो मता.[2] ॥१२०॥
विभावानुभावयुतो ह्यङ्गवस्तुसमाश्रय. ।
संचारिभिस्तु संयुक्त स्थाय्येव तु रसो भवेत् ॥१२१॥
स्थायी सत्त्वातिरेकेण प्रयोक्तव्यः प्रयोक्तृभिः ।
सञ्चार्याकारमात्रेण स्थायी यस्माद् व्यवस्थितः[1] ॥१२२॥
[1]चित्राणि न विरज्यन्ते लोके चित्रं हि दुर्लभम् ।
[2]विमर्दो रागमायाति [3]प्रयु[क्तो]हि प्रयत्नत.[4] ॥१२३॥

114-115 (B 175-176 ; G.112-113) [1] B. वेपथु स्वरभेदश्च. [2] B. स्तम्भश्च. 116 (B 177 ; G.114). [1] B. बीभत्स समाश्रया. 117-118 (B 178-179 , G 115-116). B द्वे चान्ये. 119 (B 180 ; G 117) 120 (B.181 ; G 118). [1] B. बहूनां. [2] B. adds दीप्यन्त. प्रवर्तन्ते ये पुन. स्थायिन रसम् । ते तु सञ्चारिणो ज्ञेयास्ते हि स्थायित्वमागता . 121 (B 183 ; G.119) 122 (B.184 , G 120) [1] B.185 practically repeats 118 123 (B.186 ; G.121). [1] B reads 123a as नह्येकरसज काव्य नैकभावैकशिल्पकम् [2] B विमर्दे. [3] B प्रयुक्त हि प्रयत्नत., C.प्रयुक्तमपि. [4] B. adds भा वा वापि रसः वापि प्रवृत्तिर्वृत्तिरेव वा । नानाभावसमन्वितानां वैविध्य भाव कथ्यते । यथा वर्णा रसानां वैचित्र्य नानाभावसमन्वितम् । सत्त्वयोजितो ह्यर्थः प्रयोगोऽत्र विराजते । विदित्वा हि विराजन्ते लोके चित्र हि दुर्लभम्.

[1]नानार्थभावनिष्पन्ना [2]स्थायिसत्त्वविचारिणः ।
[3]पुंसानुकीर्णाः कर्तव्याः [4]काव्येषु हि रसाश्रयाः ॥१२४॥
एवं [1]रसाश्च भावाश्च व्यवस्था नाटके स्मृता[2] ।
य एवमेतान् जानाति स गच्छेत् सिद्धिमुत्तमाम् ॥१२५॥

इति भारतीये नाट्यशास्त्रे भावव्यञ्जको नाम सप्तमोऽध्यायः ।

124 ( B 189b-190a ; G 122 ). [1] B G. नानाभावार्थनिष्पन्ना. [2] B. स्थायिसत्त्वाभिचारिण. G स्थायिभावा विचारिण. [3] B.G पुष्पावकीर्णा. [4] C. काव्ये रसस्वरसाश्रये. B G काव्येषु हि रसा बुधे. 125 ( B 190bc ; G 123 ) [1] B. एव रसानां भावानां [2] C. व्यवस्था. B. व्यवस्थानमिह मतम्.

# अष्टमोऽध्यायः

भावानां च रसानां च समुत्थानं यथाक्रमम् ।
त्वत्प्रसादाच्छ्रुतं सर्वमिच्छामो वेदितुं पुनः ॥१॥
नाट्ये कतिविधः कार्यस्तज्ज्ञैरभिनयक्रमः ।
कथं वाभिनयो ह्येष कतिभेदस्तु कीर्तितः ॥२॥
सर्वमेतद्यथातत्त्वं भगवन् वक्तुमर्हसि ।
यो यथाभिनयो यस्मिन् योक्तव्यः सिद्धिमिच्छता ॥३॥
तेषां तु वचनं श्रुत्वा मुनीनां भरतो मुनिः ।
प्रत्युवाच पुनर्वाक्यं चतुरोऽभिनयान् प्रति ॥४॥
अहं वः कथयिष्यामि निखिलेन तपोधनाः ।
यस्मादभिनयो ह्येष विधिवत् समुदाहृतः ॥५॥

यदुक्तं चत्वारोऽभिनया इति तान् [1]वर्णयिष्यामः । अत्राह—अभिनय इति कस्मात् । अत्रोच्यते—अभीत्युपसर्गः णीञ् प्रापणार्थो धातुः । अस्याभिनीत्येव व्यवस्थितस्य अच्प्रत्ययान्तस्याभिनय इति रूपं सिद्धम् । एतच्च धात्वनुवचनेनावधार्यम् ।

भवति चात्र श्लोकः —

अभिपूर्वस्तु णीञ्धातुराभिमुख्यार्थनिर्णये ।
[1]यस्मात् प्रयोगं नयति तस्मादभिनयः स्मृतः ॥६॥

विभावयति यस्माच्च नानार्थान् हि प्रयोगतः ।
शाखाङ्गोपाङ्गसंयुक्तस्तस्मादभिनयः स्मृतः ॥७॥
[1]चतुर्विधश्चैव भवेन्नाट्यस्याभिनयो द्विजाः ।
[2]अनेकभेदबहुलं नाट्यं ह्यस्मिन् प्रतिष्ठितम् ॥८॥

1 2 (B G. *same*). 3 (B G. *same*) 4 (B G. *same*) 5 (B 5-6, G 5) 6 (B 7; G 6) [1] C वर्णयिष्यामः [2] C. यस्मात् पदार्थान्नयति 7 (B 8, G 7) 8 (B 9, G 8). [1] C. चतुर्विधश्चैव. [2] C. भेदबाहुल्यम्.

आङ्गिको वाचिकश्चैव आहार्यः सात्त्विकस्तथा ।
ज्ञेयस्त्वभिनयो विप्राश्चतुर्धा परिकल्पित ॥९॥
सात्त्विकः पूर्वमुक्तस्तु भावैश्च सहितो मया ।
[1]अङ्गाभिनयमेवादौ गदतो मे निबोधत ॥१०॥
त्रिविधस्त्वाङ्गिको ज्ञेयः शारीरो मुखजस्तथा ।
तथा चेष्टाकृतश्चैव शाखाङ्गोपाङ्गसंयुत ॥११॥
शिरोहस्तकटीवक्षः पार्श्वपादसमन्वित ।
अङ्गप्रत्यङ्गसंयुक्त षडङ्गो नाट्यसङ्ग्रह ॥१२॥
तस्य शिरोहस्तोरःपार्श्वकटीपादत. षडङ्गानि ।
नेत्रभ्रूनासाधरकपोलचिबुकान्युपाङ्गानि ॥१३॥
[1]अस्य शाखा च नृत्तं च तथैवाङ्कुर एव च ।
वस्तून्यभिनयस्येह विज्ञेयानि प्रयोक्तृभि ॥१४॥
आङ्गिकस्तु भवेच्छाखा अङ्कुरः सूचना भवेत् ।
अङ्गहारविनिष्पन्नं नृत्तं तु करणाश्रयम् ॥१५॥
मुखजेऽभिनये विप्रा नानाभावसमाश्रये ।
शिरस. प्रथमं कर्म गदतो मे निबोधत ॥१६॥

आकम्पितं कम्पितं च धुतं विधुतमेव च ।
परिवाहितोद्वाहितमवधुतं तथाञ्चितम् ॥१७॥
निहञ्चितं परावृत्तमुत्क्षिप्तं चाप्यधोगतम् ।
लोलितं चैव विज्ञेयं त्रयोदशविधं शिरः ॥१८॥
शनैराकम्पनादूर्ध्वमधश्चाकम्पितं भवेत् ।
द्रुतं तदेव बहुशः कम्पितं कम्पितं शिरः ॥१९॥

9 (B. 10 ; G.9) 10 (B 11 ; G 10 [1] C -मेवादौ. 11 (B 12 ; G.11). 12 (B 13 ; G 12) 13 (B 14 ; G 13) 14 (B 15 ; G 14) [1] B. तस्य. 15 (B 16 , G 15) 16 (B.17 ; G 16 . 17-18 (B 18-19 · G.17-18). 19 (B.20 , G.19).

संज्ञोपदेशपृच्छासु स्वभावाभाषणे तथा ।
निर्देशावाहने चैव भवेदाकम्पितं शिरः[1] ॥२०॥
रोषे वितर्के विज्ञाने प्रतिज्ञानेऽथ तर्जने
व्याख्यमर्षणयोश्चैव शिरः कम्पितमिष्यते ॥२१॥
शिरसो रेचनं यत्तु शनैस्तद् धुतमिष्यते ।
द्रुतमारेचनाच्चैतद्विधुतं तु भवेच्छिरः ॥२२॥
अनीप्सिते विषादे च विस्मये प्रत्यये तथा ।
पार्श्वावलोकने शून्ये प्रतिषेधे धुतं शिरः ॥२३॥
शीतग्रस्ते भयार्ते च त्रासिते ज्वरिते तथा ।
पीतमात्रे तथा मद्ये विधुतं तु भवेच्छिरः ॥२४॥
पर्यायशः पार्श्वगतं शिरः स्यात् परिवाहितम् ।
सकृदुद्वाहितं चोर्ध्वमुद्वाहितमिति स्मृतम् ॥२५॥
साधने विस्मये हर्षे [1]स्मृते चामर्षिते तथा ।
विचारे [2]विहृते चैव लीलायां परिवाहितम्[1] ॥२६॥
गर्वेच्छादर्शने चैव तथा चोर्ध्वनिरीक्षणे ।
उद्वाहितं तु कर्तव्यमात्मसम्भावनादिषु ॥२७॥
तदधः सकृदाक्षिप्तमवधुतं तु तच्छिरः ।
सन्देशावाहनालापसंज्ञादिषु तदिष्यते ॥२८॥
किञ्चित्पार्श्वानतग्रीवं शिरो विज्ञेयमञ्चितम् ।
व्याधिते मूर्छिते मत्ते सचिन्ते दुःखिते भवेत् ॥२९॥
[1]उत्क्षिप्तबाहुशिखरं तथाञ्चितशिरोधरम् ।
निहञ्चितं तु विज्ञेयं स्त्रीणामेतत् प्रयोजयेत् ॥३०॥
गर्वे विलासे ललिते विब्वोके किलकिञ्चिते ।
मोट्टायिते कुट्टमिते [2]स्तम्भे माने निहञ्चितम् ॥३१॥

20 (B 21 ; G.20) [1] B reads after this one couplet. 21-23 (B 23-25 ; G 21-23). 24 (B.26 ; G.24). 25 (B 27 : G.25). [1] G reads between the two hemistichs स्कन्धपार्श्वात् [illegible] परिवाहितमिष्यते. 26 (B.28 ; G.26) [1] G. °स्मिते. C. °स्थिते. [2] Ckh °[illegible]. 27 (B.29 : G 28). 29 (B.31 ; G 29), 30-31 (B 32-33 ; G.30-31). [1] C. उत्क्षिप्तबाहुशिर-स्कन्ध. [2] C. [illegible].

पराभृत्तानुकरणात् परावृत्तं शिरः स्मृतम् ।
तत् स्यान्मुखापहरणे पृष्ठतः प्रेक्षणादिषु ॥३२॥
उत्क्षिप्तं चापि विज्ञेयमुन्मुखावस्थितं शिरः ।
प्रांशुदिव्यास्त्रयोगेषु स्यादुत्क्षिप्तं प्रयोगतः ॥३३॥
[1]अधोमुखं स्थितं चापि शिरः प्राहुरधोगतम् ।
लज्जाया च प्रणामे च दुःखे चाधोगतं भवेत् ॥३४॥
सर्वतो लोलनाच्चापि शिरः स्यात् परिलोलितम् ।
[1]मूर्च्छाव्याधिमदावेशग्रहनिद्रादिषु स्मृतम्[2] ॥३५॥
एभ्योऽन्ये वहवो भेदा लोकाभिनयसंश्रयाः ।
ते च लोकस्वभावेन प्रयोक्तव्या प्रयोक्तृभिः ॥३६॥
त्रयोदशविधं ह्येतच्छिरःकर्म मयोदितम् ।
अतः परं प्रवक्ष्यामि दृष्टीनामिह लक्षणम् ॥३७॥

कान्ता भयानका हास्या करुणा चाद्भुता तथा ।
रौद्री वीरा च बीभत्सा विज्ञेया रसदृष्टयः ॥३८॥
स्निग्धा हृष्टा च दीना च क्रुद्धा दृप्ता भयान्विता ।
जुगुप्सिता विस्मिता च स्थायिभावेषु दृष्टयः ॥३९॥
शून्या च मलिना चैव श्रान्ता लज्जान्विता तथा ।
ग्लाना च शङ्किता चैव विषण्णा मुकुला तथा ॥४०॥
कुञ्चिता चाभितप्ता च जिह्मा सललिता तथा ।
वितर्कितार्धमुकुला विभ्रान्ता विप्लुता तथा ॥४१॥
आकेकरा विकोशा च त्रस्ताथ मदिरा तथा ।
षट्त्रिंशद् दृष्टयो ह्येता नामतोऽभिहिता मया ॥४२॥
अस्य दृष्टिविधानस्य नानाभावरसाश्रयम् ।
लक्षणं सम्प्रवक्ष्यामि यथाकर्मप्रयोगतः ॥४३॥

32 (B 34, G 32) 33 (B 35 ; G.33) 34 (B 36, G.34) [1] C चाधोमुखं स्थि॰.
35 (B 37 ; G 35) [1] C. -मदावेश॰ [2] B reads after this one couplet.
36 37 (B 39-40 ; G.36-37) 38 (B 41 ; G 38) 39 (B 42 ; G.39) 40-42
(B 43-45, G 40-42) 43 (B 46 ; G 43)

हर्षप्रसादजनिता कान्तात्यर्थं समन्मथा ।
सभ्रूक्षेपकटाक्षा च शृङ्गारे दृष्टिरिष्यते ॥४४॥
प्रोद्वृत्तनिष्टब्धपुटा [1]स्फुरदुद्वृत्ततारका ।
दृष्टिर्भयानकात्यर्थं भीता ज्ञेया भयानके ॥४५॥
क्रमादाकुञ्चितपुटा [1]सविभ्रान्तालपतारका ।
हास्या दृष्टिस्तु कर्तव्या कुहकाभिनयं प्रति ॥४६॥
पतितोर्ध्वपुटा सास्रा मन्युमन्थरतारका ।
नासाग्रानुगता दृष्टिः करुणा करुणे रसे ॥४७॥
या त्वाकुञ्चितपक्ष्माग्रा साक्षर्योद्वृत्ततारका ।
सौम्या विकसितान्ता च साद्भुता दृष्टिरद्भुते ॥४८॥
क्रूरा रूक्षारुणोद्वृत्तनिष्टब्धपुटतारका ।
[1]भ्रुकुटीकुटिला दृष्टी रौद्री रौद्ररसे स्मृता ॥४९॥
दीप्ता विकसिता क्षुब्धा गम्भीरा समतारका ।
उत्फुल्लमध्या दृष्टिस्तु वीरा वीररसाश्रया ॥५०॥
निकुञ्चितपुटापाङ्गा घृणोपप्लुततारका ।
[1]संश्लिष्टस्थितपक्ष्मा च बीभत्सा दृष्टिरिष्यते[2] ॥५१॥
रसजा दृष्टयो ह्येता विज्ञेया लक्षणान्विता ।
अत परं [1]लक्षयिष्ये स्थायिभावसमाश्रया ॥५२॥

व्याकोशमध्या मधुरा [1]स्थिरतारामिलाषिणी ।
सानन्दाश्रुकृता दृष्टिः स्निग्धेयं रतिभावजा ॥५३॥
चला हसितगर्भा च [1]विशत्तारानिमेषिणी ।
किञ्चिदाकुञ्चिता हृष्टा दृष्टिर्हासे प्रकीर्तिता ॥५४॥

44 (B 47 ; G 44) 45 (B 48 , G.45) [1] C सस्फुरदुद्वृत्ततारका. 46 (B 49 ; G.46).
[1] C. विभ्रान्ताकुलतारका. 47 (B 50 ; G 47). 48 (B 51 ; G 48). 49 (B.52 , G.49).
[1] C.-कुटिल दृष्टि रौद्रे रौद्री रसा स्मृता 50 (B 53 ; G 50). 51 (B 54 , G.51).
[1] C. सश्लिष्टस्थित- [2] B G. adds after this : नासाग्रसक्तानिमिषा तथाधोभागचारिणी । आवेकत्पुटा चैव योज्या दृष्टिर्भवेदसौ. 52 (B 56 , G 53). [1] G वक्ष्यामि. 53 (B,57 ; G.54) [1] C. स्थित, B खेद. 54 (p 8 B 55 , G 55) [1] C.विशततारा- [2] C दृष्टि: हृष्टा हासे,

ईषत्स्रस्तोत्तरपुटा किञ्चित्संरब्धतारका ।
मन्दसञ्चारिणी दीना सा शोके दृष्टिरिष्यते ॥५५॥
रूक्षा [1]स्थितोद्वृत्तपुटा [2]निष्टब्धोद्वृत्ततारका ।
कुटिला भ्रुकुटिर्दृष्टिः क्रुद्धा क्रोधे विधीयते ॥५६॥
संस्थिते तारके यस्याः [1]स्थिता विकसिता तथा ।
सत्त्वमुद्गिरती दृप्ता दृष्टिरुत्साहसम्भवा ॥५७॥
विस्फारितोभयपुटा भयकम्पिततारका ।
निष्क्रान्तमध्या दृष्टिस्तु भयभावे भयान्विता ॥५८॥
संकोचितपुटन्यासा दृष्टिर्मीलिततारका ।
पक्ष्मोद्देशात् समुद्विग्ना जुगुप्साया जुगुप्सिता ॥५९॥
[1]भृशमुद्वृत्ततारा च [2]स्तब्धोभयपुटान्विता ।
समा विकसिता दृष्टिर्विस्मिता विस्मये स्मृता ॥६०॥
स्थायिभावाश्रया ह्येता लक्षिता दृष्टयो मया ।
सचारिणीनां दृष्टीनां सम्प्रवक्ष्यामि लक्षणम् ॥६१॥

समतारा समपुटा निष्कम्पा शून्यदर्शना ।
बाह्यार्थग्राहिणी क्षामा शून्या दृष्टिः प्रकीर्तिता ॥६२॥
प्रस्पन्दमानपक्ष्मान्ता नात्यर्थमुकुलैः पुटैः ।
मलिनान्ता च मलिना [1]दृष्टिर्विद्रुततारका ॥६३॥
श्रमप्रम्लापितपुटा क्षामान्ताञ्चितलोचना ।
सन्ना पतिततारा च श्रान्ता दृष्टिः प्रकीर्तिता ॥६४॥
किञ्चिदञ्चितपक्ष्माग्रा पतितोर्ध्वपुटा ह्रिया ।
त्रपाधोमुखतारा च दृष्टिर्लज्जान्विता तु सा ॥६५॥

55 (p 9 B 56 . G 56) 56 (p 9. B 57 ; G.57). [1] C. स्थितोद्वृत्तपुटा. [2] C. निष्टब्धोद्वृत्ततारका. 57 (p.9, B.58, G 58). [1] B स्थिता. 58 (B.59 ; G 59). 59 (B 60, G 60) 60 (B 61, G 61). [1] C. विस्तीर्णोद्वृत्ततारा, [2] C. स्तब्धा-. 61 (B.62 · G 62). 62 (B 63 ; G.63), 63 (B (B 64 ; G 64). [1] B. दृष्टिर्विद्रुततारका. 64 (B 65 ; G 65), 65 (B.66 ; G.66),

[1]ग्लानभ्रूपुटपक्ष्मा या शिथिला मन्दचारिणी ।
क्षमप्रविष्टतारा च ग्लाना दृष्टिस्तु सा स्मृता ॥६६॥
किञ्चिच्चला स्थिरा किञ्चिदुन्नता किञ्चिदायता ।
गूढा चकिततारा च शङ्किता दृष्टिरिष्यते ॥६७॥
विपादविस्तीर्णपुटा पर्यस्तान्ता निमेषिणी ।
किञ्चिन्निष्ठब्धतारा च कार्या दृष्टिर्विषादिनी ॥६८॥
स्फुरिताश्लिष्टपक्ष्माग्रा मुकुलोर्ध्वपुटाञ्चिता ।
सुखोन्मीलिततारा च मुकुला दृष्टिरिष्यते ॥६९॥
[1]आनिकुञ्चितपक्ष्माग्रा पुटैराकुञ्चितैस्तथा ।
सन्ना कुञ्चिततारा च कुञ्चिता दृष्टिरुच्यते ॥७०॥
मन्दायमानतारा या पुटैः प्रचलितैस्तथा ।
[1]सन्तापोपप्लुता दृष्टिरभितप्ता तु सव्यथा ॥७१॥
[1]लम्बिता कुञ्चितपुटा [2]शनैस्तिर्यङ्निरीक्षिणी ।
[3]निगूढा गूढतारा च जिह्मा दृष्टिरुदाहृता ॥७२॥
मधुरा कुञ्चितान्ता च सभ्रूक्षेपाऽथ सस्मिता ।
समन्मथविकारा च दृष्टिः सा ललिता स्मृता ॥७३॥
वितर्कोद्वर्तितपुटा तथैवोत्फुल्लतारका ।
अधोगतविचारा च दृष्टिरिष्टा वितर्किता ॥७४॥
[1]अर्धव्याकोशतारा च ह्लादार्धमुकुलैः पुटैः ।
[2]स्मृतार्धमुकुला दृष्टिः किञ्चिल्लुलिततारका ॥७५॥
[1]विभ्रान्ततारका या तु विभ्रान्तपुटदर्शना ।
विस्तीर्णोत्फुल्लमध्या च विभ्रान्ता दृष्टिरुच्यते ॥७६॥

66-67 (B 67-68 ; G 67-68) [1] B म्लान-. 68 B 69 , G 69). 69 (B 70 ; G 70) 70 (B 71 ; G 71). [1] G. या निकुञ्चित- 71 (B 72 ; G 72). 72 (B.73 ; G.73). [1] G. मधुरामुचित - [2] G. निरीक्षणं . [3] G. निगूढगूढ . 73 (B.74 , G.74). 74 (B.75 ; G 75) 75 (B 76 ; G.76). [1] G. व्याकोश पक्ष्मा. [2] C. स्थिर-. 76 (B.77 ; G.77) [1] G. reads 76a as अनवस्थित नेत्रा या तथा विभ्रान्ततारका.

पुटौ प्रस्फुरितौ यस्य निष्टब्धौ पतितौ पुनः ।
विप्लुतोद्वृत्ततारा च दृष्टिरेषा तु विप्लुता ॥७७॥
आकुञ्चितपुटापाङ्गा सङ्गतार्धनिमेषिणी ।
मुहुर्व्यावृत्ततारा च दृष्टिराकेकरा स्मृता ॥७८॥
विकोशितोभयपुटा प्रोत्फुल्ला चानिमेषिणी ।
अनवस्थिततारा च विकोशा दृष्टिरुच्यते ॥७९॥
त्रासोद्वृत्तपुटा या तु त्रासोत्कम्पिततारका ।
[1]सत्रासोत्फुल्लमध्या च त्रस्ता दृष्टिरुदाहृता ॥८०॥
व्याघूर्णमानमध्या या क्षामान्ताञ्चितलोचना ।
दृष्टिर्विकसितापाङ्गा मदिरा तरुणे मदे ॥८१॥
किञ्चिदाकुञ्चितपुटा ह्यनवस्थिततारका ।
तथा [2]चलितपक्ष्मा च दृष्टिर्मध्यमदे भवेत् ॥८२॥
सनिमेषानिमेषा च किञ्चिद् दर्शिततारका ।
अधोभागचरी दृष्टिरधमे तु मदे स्मृता ॥८३॥

इत्येव दर्शिता ह्येषा षट्त्रिंशद् दृष्टयो मया ।
रसजा भावजाश्चासां विनियोगं निबोधत ॥८४॥
रसजास्तु रसेष्वेव स्थायिषु स्थायिदृष्टय. ।
[1]शृणुध्वं व्यभिचारिण्यः सञ्चारिषु यथा हि ता ॥८५॥
शून्या दृष्टिस्तु चिन्तायां स्तम्भे चापि प्रकीर्तिता ।
निर्वेदे चापि मलिना वैवर्ण्ये च विधीयते ॥८६॥
श्रान्ता श्रमार्तौ स्वेदे च लज्जाया लज्जिता तथा ।
अपस्मारे तथा व्याधौ ग्लाने ग्लाना विधीयते ॥८७॥

77 (B 78, G 78) 78 (B 79, G 79) 79 (B 80; G.80) 80 (B 81 G.81). [1] G. सत्रासो. 81 (B 82; 82) 82 (B.83, G 83) [1] B. किञ्चिद्लुलित· [2] G. पक्ष्मका. 83 (B 84, G 84). 84 (B 85; G 85) 85-87 (B 86-88 G 86 88) [1] B G. श्रणुत. 86-98 (B 87-94); G 87-94.

शङ्कायां शङ्किता ज्ञेया विषादार्थे विषादिनी ।
निद्रास्वप्रसुखार्थेषु मुकुला दृष्टिरिष्यते ॥८८॥
[1]कुञ्चितासूयितानिष्टदुष्प्रेक्षाक्षिव्यथासु च ।
अभितप्ता च निर्वेदे ह्यभिघाताभितापयोः ॥८९॥
जिह्मा दृष्टिरसूयायां जडतालस्ययोस्तथा ।
धृतौ हर्षे सललिता स्मृतौ तर्के च तर्किता ॥९०॥
आह्लादेष्वर्धमुकुला गन्धस्पर्शसुखादिषु ।
विभ्रान्ता दृष्टिरावेगे सम्भ्रमे विभ्रमे तथा ॥९१॥
विप्लुता चापलोन्मादद्दुःखार्तिमरणादिषु ।
आकेकरा दुरालोके [2]विच्छेदप्रेक्षितेषु च ॥९२॥
[3]विबोधामर्षगर्वौग्र्यमतिषु स्याद्विकोशिता ।
त्रस्ता त्रासे भवेद्दृष्टिर्मदिरा च मदेष्विति ॥९३॥
षट्त्रिंशद् दृष्टयो ह्येता यथावत् प्रतिपादिताः ।
रसजाना तु दृष्टीनां भावजानां तथैव च ॥९४॥
तारापुटभ्रुवां कर्म गदतो मे निबोधत ।

भ्रमणं वलनं पातश्चलनं संप्रवेशनम् ॥९५॥
[1]विवर्तनं समुद्वृत्तं निष्क्रामः प्राकृतं तथा[2] ।
[1]पर्यस्तं मण्डलावृत्तिस्तारयोर्भ्रमणं स्मृतम् ॥९६॥
[2]वलनं गमनं त्र्यस्रं पातनं स्रस्तता तथा ।
चलनं कम्पनं ज्ञेयं प्रवेशोऽन्तःप्रवेशनम् ॥९७॥
विवर्तनं कटाक्षस्तु समुद्वृत्तं समुन्नतिः ।
निष्क्रामो निर्गमः प्रोक्तः प्राकृतं तु स्वभावजम् ॥९८॥
[1]तयोषां रसभावेषु विनियोगं निबोधत ।
भ्रमणं चलनोद्वृत्ते निष्क्रामो वीररौद्रयोः ॥९९॥

88-95 (B 95-96; G 89-95. [1] G. कुञ्चिता सूचिता. [2] प्रेच्छितेषु 95-96 (B.96b-97a; G 96) [1] C निवर्तन. [2] B 97 adds एतानि नवकर्माणि तारकर्म विजानत । भ्रमणं चलनं तावत् मध्य पीतिरं स्मृतम्. 96-99 (B 98b-102a; G 98 102a) [1] G पुटाल्मंसनुवृत्ति- [2] G चलनं.

निष्क्रामणं संवलतं कर्तव्यं हि भयानके ।
हास्यबीभत्सयोश्चापि प्रवेशनमिहेष्यते ॥१००॥
पातनं करुणे कार्यं निष्क्रामणमथाद्भुते ।
प्राकृतं शेषभावेषु शृङ्गारे च विवर्तितम् ॥१०१॥
स्वभावसिद्धमेवैतत् कर्म लोकक्रियाश्रयम् ।
एवं सर्वेषु भावेषु ताराकर्म नियोजयेत् ॥१०२॥

अथात्रैव प्रवक्ष्यामः प्रकारं दर्शनस्य तु ।
समं साच्यनुवृत्ते तु आलोकितविलोकिते ॥१०३॥
प्रलोकितोल्लोकिते चाप्यवलोकितमेव च ।
समतारं च सौम्यं च यद् दृष्टं तत् समं स्मृतम् ॥१०४॥
पक्ष्मान्तर्गततारं च व्यस्तं साचीकृतं तु तत् ।
[1]रूपनिर्वर्णनायुक्तमनुवृत्तमिति स्फुटम् ॥१०५॥
सहसा दर्शनं यत् स्यात्तदालोकितमुच्यते ।
विलोकितं पृष्ठतस्तु पार्श्वाभ्या तु प्रलोकितम् ॥१०६॥
ऊर्ध्वमुल्लोकितं ज्ञेयमवलोकितमप्यध ।
इत्येष दर्शनविधिः सर्वभावरसाश्रयः ॥१०७॥

ताराकृतोऽस्यानुगतं पुटकर्म निबोधत ।
उन्मेषश्च निमेषश्च प्रसृतं कुञ्चितं समम् ॥१०८॥
विवर्तितं प्रस्फुरितं पिहितं [1]सविताडितम् ।
विश्लेषः पुटयोर्यस्तु स तून्मेषः प्रकीर्तितः ॥१०९॥
समागतो निमेषः स्यादायामस्तु प्रसारितम् ।
आकुञ्चितं कुञ्चितं स्यात् समं स्वाभाविकं स्मृतम् ॥११०॥

100-101 (B 100b-103a ; G 102b-104a). 102 (B.104b-105a) 103-107 (B 105b-110a , G 104b-109a) [1] G. रूपनिर्वर्णना-, 108-111 (B 110b-113a ; G.109b-113a), [1] G. व्यापित. [2] G.C. विताडित,

विवर्तितं समुद्वृत्त स्फुरितं स्पन्दितं तथा ।
[1]स्थगित पिहित प्रोक्तमाहतं तु [2]वितादिनम् ॥१११॥
अथैषां रसभावेषु विनियोगं निबोधत ।
क्रोधे विवर्तित कार्यं निमेषोन्मेषणे सह ॥११२॥
विस्मयार्थे च हर्षे च वीर्ये चैव प्रसारितम् ।
अनिष्टदर्शने गन्धे रसे स्पर्शे च कुञ्चितम् ॥११३॥
शृङ्गारे च समं कार्यमीर्ष्यासु स्फुरितं भवेत ।
सुप्तमूर्च्छितवातोष्णधूमवर्षाञ्जनार्तिषु ॥११४॥
नेत्ररोगे च पिहितमभिघाते विताडितम् ।
इत्येवं रसभावेषु तारकापुटयोर्विधि ॥११५॥

कार्यानुगतमस्यैव भ्रुवो कर्म निबोधत ।
उत्क्षेप पातन चैव भ्रुकुटी चतुरं भ्रुवो ॥११६॥
कुञ्चित रेचितं चैव सहजं चेति सप्तधा ।
भ्रुवोरुन्नतिरुत्क्षेप सममेकैकशोऽपि वा ॥११७॥
एकस्य वा द्वयोर्वापि पातनं स्यादधोमुखम् ।
भ्रुवोर्मूलमुत्क्षेपात भ्रुकुटी परिकीर्तिता ॥११८॥
चतुरं किञ्चिदुच्छ्वासान्मधुरायतयोर्भ्रुवोः ।
एकस्या उभयोर्वापि मृदु भङ्गेन कुञ्चितम् ॥११९॥
एकस्या एव ललितादुत्क्षेपाद्रेचितं[1] भ्रुव ।
सहजातं तु सहजं कर्म स्वाभाविकं स्मृतम् ॥१२०॥

अथैषां संप्रवक्ष्यामि रसभावप्रयोजनम् ।
कोपे वितर्के हेलायां लीलादौ सहजे तथा ॥१२१॥
दर्शने श्रवणे चैव भ्रुवमेका समुत्क्षिपेत् ।
उत्क्षेपो विस्मये हर्षे रोषे चैव द्वयोरपि ॥१२२॥

112-115 (B 114b-118a ; G 113b-117a) 116-120 (B 118b-123 ; G 118-122a). 121-122 (B.123b-125a , G 122b-124a)

असूयिते जुगुप्सायां हासे घ्राणे च पातनम् ।
क्रोधस्थानेषु दीप्तेषु योजयेद् भ्रुकुटीं बुधः ॥१२३॥
शृङ्गारे ललिते सौम्ये स्पर्शे च चतुरं भवेत्[1] ।
मोट्टायिते कुट्टमिते विलासे किलिकिञ्चिते ॥१२४॥
विकुञ्चितं तु कर्तव्यं नृत्ते योज्यं तु रेचितम् ।
अनाविद्धेषु भावेषु विद्यात् स्वाभाविकं बुधः ॥१२५॥
[2]इत्येवं तु भ्रुवः प्रोक्ता नासाकर्म निबोधत ।

नता मन्दा विकृष्टा च सोच्छ्वासा च विकूणिता ॥१२६॥
स्वाभाविकी चेति बुधैः षड्विधा नासिका स्मृता ।
नता मुहुः श्लिष्टपुटा मन्दा तु निभृता स्मृता ॥१२७॥
विकृष्टोत्फुल्लितपुटा सोच्छ्वासाकृष्टमारुता ।
विकूणिता संकुचिता समा स्वाभाविकी स्मृता ॥१२८॥
नासिकालक्षणं ह्येतत् विनियोगं निबोधत ।
[1]विच्छिन्नमन्दरुदिते सोच्छ्वासे च नता स्मृता ॥१२९॥
निर्वेदौत्सुक्यचिन्तासु मन्दा शोके तु कीर्तिता ।
विकृष्टा [2]तीव्रगन्धे श्वासरोषभयार्तिषु ॥१३०॥
सोच्छ्वासा मधुरे गन्धे दीर्घोच्छ्वासकृतेषु च ।
विकूणितोक्ता हास्येषु जुगुप्सायामसूयिते ॥१३१॥
स्वाभाविकी शेषभावेष्वित्येव नासिका स्मृता ।

क्षामं फुल्लं च पूर्णं च कम्पितं कुञ्चितं समम् ॥१३२॥
षड्विधं गण्डमुद्दिष्टं तस्य लक्षणमुच्यते ।
क्षामं त्ववनतं ज्ञेयं फुल्लं विकसितं भवेत् ॥१३३॥

123-125 (B 125b 129a, G.124b-127a). [1] B reads after this an additional couplet 126-128 B 129b-132a, G. 127b-130a). [2] O. इत्येता भ्रुकुट्यः प्रोक्ताः. 129-132 (B 132b, 134-136a, G 130b-133) [1] Instead of 129b B, reads मन्दं त्वपवमायुक्ते नासौत्समनुरोधन । निःश्वासे च नता कार्या नासिका नाट्ययोक्तृभिः ...
[2] C. तीव्रगन्धे श्वासे 132-134 (B 136b-138, G 134-136a)

उन्नतं [1]पूर्णमन्नोक्तं कम्पितं स्फुरितं भवेत् ।
स्यात् कुञ्चितं संकुञ्चितं समं प्राकृतमुच्यते ॥१३४॥
गण्डयोर्लक्षणं प्रोक्तं विनियोगं निबोधत ।
क्षामं तु खेषु कर्तव्यं प्रहर्षे फुल्लमिष्यते ॥१३५॥
पूर्णमुत्साहगर्वेषु रोषहर्षेषु कम्पितम् ।
कुञ्चित च सरोमाञ्चस्पर्शे शीते भये ज्वरे ॥१३६॥
प्राकृतं शेषभावेषु गण्डकर्म भवेदिति ।

विवर्तन कम्पनं च विसर्गो विनिगूहनम् ॥१३७॥
सन्दष्टक समुद्गश्च षट् कर्माण्यधरस्य तु ।
विकूणन विवर्तस्तु वेपनं कम्पन स्मृतम् ॥१३८॥
विनिष्कामो विसर्गस्तु प्रवेशो विनिगूहनम् ।
सन्दष्टकं द्विजैर्दष्ट' समुद्ग [1]सहिना गनि. ॥१३९॥
इत्योष्ठलक्षणं प्रोक्तं विनियोग निबोधत ।
असूयावेदनावज्ञालस्यादिषु विवर्तनम् ॥१४०॥
कम्पन वेदनाशीतज्वररोषभ[ज्ञा]प]दिषु ।
स्त्रीणां विलासे बिब्बोके विसर्गे रञ्जने तथा ॥१४१॥
विनिगूहनमायासे सन्दष्टं क्रोधकर्मणि ।
समुद्गस्त्वनुकम्पाया चुम्बने चाभिनन्दने ॥१४२॥

इत्योष्ठकर्माण्युक्तानि चिबुकस्य निबोधत ।
कुट्टनं खण्डनं छिन्न [1]चुक्कित लेहनं समम् ॥१४३॥
दष्टं च दन्तक्रियया चिबुकं त्विह लक्ष्यते ।
कुट्टनं दन्तसंघर्ष संस्फोटः खण्डन मुहुः ॥१४४॥

[1] G पूर्णकुञ्चित. 135 139 (B 139-143 ; G 136b 148a) [1] B सहजोदृति 140-144 (B 144-148 ; G 141b-145a . [1] Gp वद्ध वक्त्र G. -रञ्जह स्या, C -चुच्चावक्ता. [2] C. वेदन गोवज्याादिषु (B ज्वरादिषु) [1] G विक्षिल (v. l. सुचित).

छिन्न तु गाढसंश्लेषश्चुक्षितं दूरविच्युति. ।
लेहनं जिह्वया लेह' किञ्चिच्छे्लष. समं भवेत् ॥१४५॥
दन्तैर्दष्टेऽधरे दष्टम् इत्येषां विनियोजनम् ।
[1]भयशीतजराव्याधिग्रस्तानां कुट्टनं भवेत् ॥१४६॥
जप्याध्ययनसंलापभक्ष्ययोगे च खण्डनम् ।
[2]छिन्नं व्याधौ भये शीते व्यायामे [3]रुदितेक्षिते ॥१४७॥
जृम्भणे [4]चुक्षितं कार्यं तथा लौल्ये च लेहनम् ।
समं स्वभावभावेषु सन्दष्ट' क्रोधकर्मसु ॥१४८॥
इति दन्तोष्ठजिह्वानां करणाचिबुकक्रिया ।

विधुतं विनिवृत्तं च निर्भुग्नं भुग्नमेव च ॥१४९॥
[1]विवृत्तं च तथोद्वाहि कर्माण्यत्रास्यजानि तु ।
व्यावृत्तं विनिवृत्तं स्याद्विधुतं तिर्यगायतम् ॥१५०॥
अवाङ्मुखं च निर्भुग्नं व्याभुग्नं किञ्चिदायतम् ।
विश्लिष्टोष्ठं च [2]विवृतमुद्वाह्युत्क्षिप्तमेव च ॥१५१ ।
विनिवृत्तमसूयायाम् ईर्ष्याक्रोधकृतेन च ।
अवज्ञाविहृतादौ च स्त्रीणां कार्यं प्रयोक्तृभिः ॥१५२॥
विधुतं वारणे चैव नैवमित्येवमादिषु ।
निर्भुग्नं चापि विज्ञेयं गम्भीरालोकनादिषु ॥१५३॥
भुग्नं लज्जान्विते योज्यं [3]यतीनां तु स्वभा-जम् ।
निर्वेदौत्सुक्यचिन्तासु तथा च विनिमन्त्रणे ॥१५४॥
विवृत्तं चापि विज्ञेयं हास्यशोकभयादिषु ।
स्त्रीणामुद्वाहि लीलायां गर्वे गच्छत्यनादरे ॥१५५॥

145-146 (B 149-150a-G 145b-147) 145-149 (B 150b-153a ; G 148-150a). [1]C भयशीतज्वर. [2] G reads one additional hem. before this : गोत्रामर्षेण रौद्रेषु तद्योगेषु तत् स्मृतम् । [3] G रुदितेक्षणे [4] G. चिक्कि॰. [5] C. खण्ड.
149-156 (B 153b 160a, G 150b 157) [1] C निवृत्त. [2] C विहतमुद्वाह्युत्क्षिप्तम् [3] G. यादिनाम्.

एवं नामेतिकार्यं च कोपशक्ये विचक्षणैः ।
समं साचीकृतायुक्ता यत्र दृष्टिविकल्पिनम् ॥१५६॥
तज्ज्ञैस्तेनानुसारेण कार्यं तदनुग सुखम् ।

अथातो मुखरागश्च चतुर्धा परिकीर्तितः ॥१५७।
स्वाभाविकः प्रसन्नश्च रक्तः श्यामोऽर्थसंश्रयः ।
स्वाभाविकस्तु कर्तव्य. स्वभावाभिनयाश्रय. ॥१५८॥
मध्यस्थादिषु भावेषु मुखराग. प्रयोक्तृभि ।
प्रसन्नस्त्वद्भुते कार्यो हास्यशृङ्गारयोस्तथा ॥१५९॥
वीररौद्रमदाद्येषु रक्तः स्यात् करुणे तथा ।
भयानके सबीभत्से श्यामं सजायते मुखम् ॥१६०॥
एवं भावरसार्थेषु मुखराग प्रयोजयेत् ।
*शाखाङ्गोपाङ्गसंयुक्त. कृतोऽप्यभिनयः शुभः ॥१६१॥*
मुखरागविहीनस्तु नैव शोभान्वितो भवेत् ।
शरीराभिनयोऽल्पोऽपि मुखरागसमन्वित. ॥१६२॥
द्विगुणां लभते शोभां रात्राविव निशाकरः ।
नयनाभिनयोऽपि स्याद्नानाभावरसान्वितः ॥१६३॥
मुखरागान्वितो यस्मान्नाट्यमत्र प्रतिष्ठितम् ।
यथा नेत्रं प्रसर्पेत मुखभ्रूदृष्टिसंयुतम् ॥१६४॥
तथा भावरसोपेतं मुखराग प्रयोजयेत् ।
[1]इत्येष· मुखरागस्तु प्रोक्तो भावरसाश्रय. ॥१६५॥

अत. परं प्रवक्ष्यामि ग्रीवाकर्माणि वै द्विजा· ।
समा नतोन्नता त्र्यस्रा रेचिता कुञ्चिताञ्चिता ॥१६६॥

156-157 (B 160b 161a ; G.158) 157-158 B.161b-162a ; G 159 . 158-160 (B 162b 164 ; G.160-162a) 161-162 (B 165-166a , G.162b-163) *162-163 (B.166b-167a , G.164). 163 164 (B.167b 168a ; G.165).* 164-165 (B.168b-169 ; G 166-167a). [1] C. इदं. 166 (B 170 ; G.167b-168a).

वलिता च निवृत्ता च ग्रीवा नवविधार्थतः ।
समा स्वाभाविकी ध्यानस्वभावजपकर्मसु ॥१६७॥
नता नतास्याऽलङ्कारबन्धे कण्ठावलम्बने ।
उन्नताभ्युन्नतमुखी [1]ग्रैवेयेऽस्त्रादिदर्शने ॥१६८॥
त्र्यस्रा पार्श्वगता चैव स्कन्धभारेऽथ दुःखिते ।
रेचिता विधुता भ्रान्ता हावे मथननृत्तयोः ॥१६९॥
[3]कुञ्चिताऽकुञ्चिता मूर्ध्नि भारिते गलरक्षणे ।
अञ्चिताऽपसृतोद्बन्धे स्कन्धोर्ध्वदर्शने ॥१७०॥
पार्श्वोन्मुखी स्याद्वलिता ग्रीवाभङ्गे च वीक्षिते ।
निवृत्ताभिमुखीभूता स्वस्थानाभिमुखादिषु ॥१७१॥
इत्यादिलोकभावार्था ग्रीवा भङ्गैरनेकधा ।
ग्रीवाकर्माणि सर्वाणि शिरःकर्मानुगानि च ॥१७२॥
शिरसः कर्मणा कर्म ग्रीवायाः संप्रवर्तते ।
इत्येतल्लक्षणं प्रोक्तं शीर्षोपाङ्गसमाश्रयम् ।
अङ्गकर्माणि शेषाणि गदतो मे निबोधत ॥१७३॥

इति भारतीये नाट्यशास्त्रे उपाङ्गविधानं नाम अष्टमोऽध्यायः ।

167 171 (B.171 175, G 168b 173a) [1] B. ग्रीवा चोर्ध्वादिदर्शने. We with Bp. [3] G. कुञ्चिताकुञ्चि ; 172 173 (B 176 177 ; G. 173b 175).

# नवमोऽध्यायः

एवमेतच्छिरोनेत्रभ्रूनासोष्ठकपोलजम् ।
कर्म लक्षणसंयुक्तमुपाङ्गानां मयोदितम् ॥१॥
हस्तोर पार्श्वजठरकटीजङ्घोरुपादतः ।
लक्षणं सम्प्रवक्ष्यामि विनियोगं च तत्त्वतः ॥२॥
हस्तानां तु प्रवक्ष्यामि कर्म नाट्यप्रयोगजम् ।
यथा येनाभिनेयं च तन्मे निगदतः शृणु ॥३॥
पताकस्त्रिपताकश्च तथा वै कर्तरीमुखः ।
अर्धचन्द्रो ह्यरालश्च शुकतुण्डस्तथैव च ॥४॥
मुष्टिश्च शिखराख्यश्च कपित्थ कटकामुखः[1] ।
सूच्यास्यः पद्मकोशश्च [2]तथा वै सर्पशीर्षकः ॥५॥
[3]मृगशीर्षः परो ज्ञेयो हस्ताभिनययोक्तृभिः ।
[4]काङ्गूलोऽलपद्मश्च चतुरो भ्रमरस्तथा ॥६॥
हंसास्यो हंसपक्षश्च सन्दंशो मुकुलस्तथा ।
ऊर्णनाभस्ताम्रचूडश्चतुर्विंशतिरीरिता ॥७॥
असंयुता संयुताश्च गदतो मे निबोधत ।
अञ्जलिश्च कपोतश्च कर्कटः स्वस्तिकस्तथा ॥८॥
[1]कटकावर्धमानश्च उत्सङ्गो निषधस्तथा ।
दोलः पुष्पपुटश्चैव तथा मकर एव च ॥९॥
एते तु संयुता हस्ता मया प्रोक्तास्त्रयोदश ।
नृत्तहस्तानतश्चोर्ध्वं गदतो मे मे निबोधत ॥१०॥

1-3 (B.1,3,2 ; G. same). 4-7 (B G. 4-7a) [1] G. खटकामुख . [2] BG. धर्मशिरा: स्पर्शकः 3. B.G. om. this hem. [4] C. काङ्गूलोत्पलपद्म. 8-10 (B.G. 7b-10). [1] B.G. खटकावर्धमान.

चतुरस्रौ तथोद्वृत्तौ तथा तलमुखौ स्मृतौ ।
स्वस्तिकौ विप्रकीर्णौ चाप्यरालकटकामुखौ[1] ॥११॥
आविद्धवक्रौ सूच्यास्यौ रचितावर्धरेचितौ ।
उत्तानावञ्चितौ वापि पल्लवौ च तथा करौ ॥१२॥
नितम्बौ चापि विज्ञेयौ केशबन्धौ तथैव च ।
[2]सम्प्रोक्तौ चैव लताख्यौ करिहस्तौ तथैव च ॥१३॥
पक्षवञ्चितकौ चैव पक्षप्रद्योतकौ तथा ।
ज्ञेयौ गरुडपक्षौ च हंसपक्षौ तथैव च ॥१४॥
ऊर्ध्वमण्डलिनौ चैव पार्श्वमण्डलिनौ तथा ।
उरोमण्डलिनौ चैव उरःपार्श्वार्धमण्डलौ ॥१५॥
मुष्टिकस्वस्तिका चापि नलिनीपद्मकोशकौ ।
[3]अलपल्लवोल्बणौ च ललितौ वलितौ तथा ॥१६॥
चतुष्षष्टिकरा ह्येते नामतोऽभिहिता मया ।
अथ लक्षणमेतेषां कर्माणि च निबोधत ॥१७॥
प्रसारिताग्राः सहिता यस्याङ्गुल्यो भवन्ति हि ।
कुञ्चितश्च तथाङ्गुष्ठः स पताक इति स्मृतः ॥१८॥
एष प्रहारपाते प्रतापने नोदने प्रहर्षे च ।
गर्वेऽप्यहमिति तज्ज्ञैर्ललाटदेशोत्थितः कार्यः ॥१९॥
एषोऽग्निवर्षधारानिरूपणे पुष्पवृष्टिपतने च ।
संयुतकरणः कार्यः प्रविरलचलिताङ्गुलिर्हस्तः ॥२०॥
स्वस्तिकविच्युतिकरणात् पल्लवपुष्पोपहारशष्पाणि ।
विरचितमुर्वीसंस्थं यद् द्रव्यं तच्च निर्देश्यम् ॥२१॥
स्वस्तिकविच्युतिकरणात् पुनरेवाधोमुखेन कर्तव्यम् ।
संवृतविवृतं पार्श्वं छन्नं निबिडं च गोप्यं च ॥२२॥

11-17 (B G 11-17a) [1] G °टकामुखौ [2] B. उरःपार्श्वमण्डलौ. [3] G. चलपल्लवौ.
17-22 (B 18-23, . G 18-23)

अस्यैव चाङ्गुलीभिस्त्वधोमुखप्रस्थितोत्थितचलाभिः ।
[1]वायूर्मिवेगवेलाक्षोभश्चोयश्च कर्तव्यः ॥२३॥
उत्साहनं [2]बहु तथा महाजनं प्रांशुपुष्करप्रहतम् ।
पक्षोत्क्षेपाभिनयं रेचककरणेन प्रयुञ्जीत ॥२४॥
परिघृष्टतलस्थेन तु धौतं मृदितं प्रमृष्टपिष्टे च ।
पुनरेव शैलधारणमुद्घाटनमेव चाभिनयेत्[1] ॥२५॥
एवमेष प्रयोक्तव्यः स्त्रीपुंसाभिनये करः ।
अतः परं प्रवक्ष्यामि त्रिपताकस्य लक्षणम् ॥२६॥

पताके तु यदा वक्राऽनामिका त्वङ्गुलिर्भवेत् ।
त्रिपताकः स विज्ञेयः कर्म चास्य निबोधत ॥२७॥
आवाहनमवतरणं विसर्जनं वारणं प्रवेशश्च ।
उन्नामनं प्रणामो निदर्शनं विविधवचनं च ॥२८॥
माङ्गल्यद्रव्याणां स्पर्शः शिरसोऽथ सन्निवेशश्च ।
उष्णीषमुकुटधारणनासास्यश्रोत्रसंवरणम् ॥२९॥
अस्यैव चाङ्गुलीभ्यामधोमुखप्रस्थितोत्थितचलाभ्याम् ।
[1]लघुखगपतनस्रोतोभुजगभ्रमरादिकान् कुर्यात् ॥३०॥
अश्रुप्रमार्जनतिलकविरचनरोचनालभनकं च ।
त्रिपताकानामिकया [2]स्पर्शनमलकस्य कार्यञ्च ॥३१॥

स्वस्तिकत्रिपताकौ [तौ] गुरूणां पादवन्दने ।
परस्परमसंश्लिष्टौ कार्यौ वृद्धाहदर्शने ॥३२॥
विच्युतौ [तौ] ललाटस्थौ कर्तव्यौ नृपदर्शने ।
तिर्यक् स्वस्तिकमस्वद्धौ स्यातां तौ [1]ग्रहदर्शने ॥३३॥
तपस्विदर्शने कार्यावूर्ध्वावुत्तानसम्मुखौ[2] ।
परस्पराभिमुखौ च कर्तव्यौ द्वारदर्शने ॥३४॥

23-26 (B 24-25, 27a ; G. 24-25, 27a) [1] B बहु तदा B क्षोभावोद्य. [2] G. बहुमत [3] B G. add after 15 दशाख्य शताख्य सहस्र लक्षदिवस । पताकाभ्यां तु हस्ताभ्यामभिनेय इत्योक्रमि 26-31 (B G 27b-32) [1] C लघु पटपतन • भुजगतभ्रमरादिकान् [2] B. C. दर्शनमलकस्य . 32-34 (B G 33-35) [1] G. ग्रहदर्शने. [2] K. कार्यौ नीचौ चापि पराङ्मुखौ.

उत्तानाधोमुखौ [1]कार्यविमे वस्तुस्य संस्थितौ ।
वडवानलसंग्रामे मकराणां च दर्शने ॥३५॥
अभिनेयस्त्वनेनैव वानरप्लवनोर्मयः ।
[2]पवनश्च स्त्रियश्चैव नाट्ये नाट्यविचक्षणैः ॥३६॥
संमुखप्रसृताङ्गुष्ठ' कार्यो बालेन्दुदर्शने ।
पराङ्मुखस्तु कर्तव्यो याने नृणां प्रयोक्तृभिः ॥३७॥
त्रिपताके यदा हस्ते भवेत् पृष्ठावलोकिनी ।
तर्जनी मध्यमायाश्च तदासौ कर्तरीमुखः ॥३८॥
पथिचरणरचनरञ्जनरिङ्गणकरणान्यधोमुखेनैव ।
ऊर्ध्वमुखेन तु कुर्याद् दष्ट शृङ्ग च लेख्यं च ॥३९॥
पतनमरणव्यतिक्रमपरिवृत्तवितर्कितं तथा न्यस्तम् ।
भिन्नवलितेन कुर्यात् [1]कर्तर्यास्याङ्गुलिमुखेन ॥४०॥
संयुतकरणो वा स्यादसंयुतो वा प्रयुज्यते तज्ज्ञैः ।
रुरुचमरमहिषसुरगजवृषगोपुरशैलशिखरेषु । ४१॥
यस्याङ्गुल्यस्तु विनता सहाङ्गुष्ठेन चापवन
सोऽर्धचन्द्रो हि विज्ञेय' कर' कर्मास्य वक्ष्यते ॥४२॥
एतेन बालतरव. शशिलेखाकम्बुकलशवलयानि ।
निर्घाटनमायस्तं मध्यौपम्यं च पीनं च ॥४३॥
[4]रशनाजघनकटीनामाननतालपत्रकुण्डलादीनाम् ।
कर्तव्यो नारीणामभिनययोगोऽर्धचन्द्रेण ॥४४॥
आद्या धनुर्लता कार्या कुञ्चितोऽङ्गुष्ठकस्तथा
शेषा भिन्नोर्ध्ववलिता ह्यरालाङ्गुल्य. स्मृताः ॥४५॥
एतेन सत्त्वशौण्डीर्यवीर्यधृतिकान्तिदिव्यगाम्भीर्यम् ।
आशीर्वादाश्च तथा [1]भावा आहितसंज्ञका. कार्या. ॥४६॥

35-38 (B G 36-39) [1] G षष्ठे षधोवकृष्ट मध्यो, K -ये कुश्च च संस्थितौ. [2] K. पतत्र 39-40 (B G 40 42) [1] C -र्यास्याङ्गुलीयमुखेन. 41 (B G 43) 42-44 (B G 44-45) [1] G,- तिलपत्र-45-46 (B G 46-47) [1] C भावाभिनयसंज्ञका,

एतेन पुनः स्त्रीणां केशानां सम्प्रहस्तथोत्कर्षौः ।
सर्वाङ्गिकं तथैव च निर्वर्णनमात्मनः कार्यम् ॥४७॥
कौतुकविवाहयोगं प्रदक्षिणेनैव संप्रयोगं च ।
[1]अङ्गुल्यग्रस्वस्तिकयोगात् कुर्यात् परिमण्डलेनैव ॥४८॥
प्रादक्षिण्यं परिमण्डलं च कुर्यात् महाजनं चैव ।
यच्च महीतलरचितं द्रव्यं तच्चाभिनेयं स्यात् ॥४९॥
[2]आवाहने निवापे [4]निन्दाक्षेपाद्यनेकवचने च ।
स्वेदस्य चाभिनयने गन्धाघ्राणे शुभे चैव ॥५०॥
त्रिपताकहस्तजानि हि पूर्वं यान्यभिहितानि कर्माणि ।
तानि त्वरालयोगात् स्त्रीभिः सम्यक् प्रयोज्यानि ॥५१॥
अरालस्य यदा वक्राऽनामिकात्वङ्गुलिर्भवेत् ।
शुकतुण्डस्तु स करः कर्म चास्य निबोधत ॥५२॥
एतेन त्वभिनेयं नाहं न त्वं न कृत्यमिति चार्थे ।
आवाहने विसर्गे धिगितिवचने च सावज्ञम् ॥५३॥
अङ्गुल्यो यस्य हस्तस्य तलमध्येऽग्रसंस्थिताः ।
तासामुपरि चाङ्गुष्ठः स मुष्टिरिति संज्ञितः ॥५४॥
एष प्रहारे व्यायामे निर्गमे स्तनपीडने ।
संवाहनेऽसियष्टीनां कुन्तदण्डग्रहे तथा ॥५५॥
अस्यैव तु यदा मुष्टेरूर्ध्वोऽङ्गुष्ठः प्रयुज्यते ।
हस्तः स शिखरो नाम तदा ज्ञेयः प्रयोक्तृभिः ॥५६॥
[1]रश्मिकशाङ्कुशधनुषां तोमरशक्तिप्रमोक्षणं चैव ।
अधरोष्ठपादरञ्जनमलकस्योत्क्षेपणं चैव ॥५७॥
अस्यैव शिखराख्यस्य [ह्य]ङ्गुष्ठकनिपीडिता ।
यदा प्रदेशिनी वक्रा स कपित्थस्तदा स्मृतः ॥५८॥

47-51 (B.47-51 G. 4S-53) [1] C. अङ्गुल्यपवर्द्धितयोगात्. [2] G आवाहने च तथैव निर्वापे पाद्यनेकवचने च. 52-53 (B.G 53-54; G.5̄4 55). 54 55 (B-55-56; G.56-57). 56-57 (B.57-5S; G 58-59). [1] G रश्म्यङ्कुशाः. 58-59 (B.59-60; G.6061).

असिचापचक्रतोमरकुन्तगदाशक्तिवज्रबाणानि ।
शस्त्राण्यभिनेयानि तु कार्यं सत्यं च पथ्यं च ॥५९॥
उत्क्षिप्तवक्रा तु यदानामिका सकनीयसी ।
अस्यैव तु कपित्थस्य तदासौ कटकामुखः ॥६०॥
होत्रं हव्यं छत्रं प्रग्रहपरिकर्षणं च व्यजनकम् ।
आदर्शधारणं खण्डनं तथा पेषणं चैव ॥६१॥
आयतदण्डग्रहणं मुक्ताप्रालम्बसंग्रहं चैव ।
स्रग्दामधारणं खलु वस्त्रान्तालम्बनं चैव ॥६२॥
मन्थनशरावकर्षणपुष्पावचयप्रतोदकार्याणि ।
अङ्कुशरज्ज्वाकर्षणस्त्रीदर्शनमेव कार्यं च ॥६३॥
कटकाख्ये यदा हस्ते तर्जनी सम्प्रसारिता ।
हस्तः सूचीमुखो नाम तदा ज्ञेयः प्रयोक्तृभिः ॥६४॥
अस्य विविधान् प्रयोगान् वक्ष्यामि समासतः प्रदेशिन्याः ।
ऊर्ध्वनतलोलकम्पितविजृम्भितोद्वाहितचलायाः ॥६५॥
चक्रं तडित्पताकामञ्जर्यः कर्णचूलिकाश्चैव ।
कुटिलगतयश्च सर्वे निर्देश्याः साधुवादाश्च ॥६६॥
बालोरगपल्लवधूपदीपवल्लीलताशिखण्डाश्च ।
परिपतनवक्रमण्डलमभिनेयं चोर्ध्वलोलितया ॥६७॥
भूयश्चोर्ध्वविरचिता ताराघोणैकदण्डयष्टिषु च ।
विनता च पुनः कार्या दंष्ट्रिषु तथास्ययोगेन ॥६८॥
पुनरपि मण्डलगतया सर्वग्रहणं तथैव लोकस्य ।
[1]प्रणतीकृता च [2]कार्याऽध्याये दीर्घे च दिवसे च ॥६९॥
वदनाभ्यासे वक्रा विजृम्भणे वाक्यरूपणे च मुखे ।
मेति वदेति च योज्या प्रसारितोत्कम्पितोत्ताना ॥७०॥

59-63 (p.41, B.59-63; G 61-65). 64-71 (B 64-70a; G 66-72) [1]G. प्रणतोन्नता [2] C. कार्योऽध्याये च. [3] C. includes a variant of 70a as follows: वदनाभ्यासे तु चिरं विजृम्भिता वाक्यरूपणे कार्या after 79

कार्या प्रकम्पिता रोपदर्शने [1]स्वेदरूपणे चैव ।
कुन्तलकुण्डलाङ्गदगण्डाश्रयमण्डनाभिनये ॥७१-७२॥
गर्वेऽहमिति ललाटे रिपुनिर्देशे तथैव च क्रोधे ।
कोऽसाविति निर्देशेऽथ कर्णकण्डूयने चैव ॥७३॥
संयुक्ता संयोगे कार्या विश्लेपिता वियोगे च ।
कलहे स्वस्तिकयुक्ता परस्परोत्पीडिता बन्धे ॥७४॥
द्वाभ्यां तु [2]वामपार्श्वे दक्षिणतो दिननिशावसानानि ।
अभिमुखपराङ्मुखाभ्यां विश्लिष्टाभ्यां प्रयुञ्जीत ॥७५॥
पुनरपि च भ्रमिताग्रा [3]रूपशीलावर्तयन्त्रशैलेषु ।
परिवेषणे तथैव हि कार्या चाधोमुखी नित्यम्[4] ॥७६॥
श्लिष्टा ललाटपट्टेष्वधोमुखी शम्भुरूपणे कार्या ।
शक्रस्याभ्युत्थानात् तज्ज्ञैस्तिर्यक्स्थिता कार्या ॥७७॥
द्वाभ्यां सन्दर्शयेन्नित्यं सम्पूर्णं चन्द्रमण्डलम् ।
श्लिष्टा ललाटे शक्रस्य कार्याभ्युत्थानसंश्रिता ॥७८॥
परिमण्डलभ्रमितया [5]मण्डलमादर्शयेच्च चन्द्रस्य ।
हरनयने च ललाटे शक्रस्य च तिर्यगुत्ताना ॥७९॥
यस्याङ्गुल्यस्तु विरलाः सहाङ्गुष्ठेन कुञ्चिताः ।
ऊर्ध्वा [6]असंगताग्राश्च स भवेत् पद्मकोशकः ॥८०॥
बिल्वकपित्थफलानां ग्रहणं कुचदर्शनं च नारीणाम् ।
ग्रहणे ह्यामिषलाभे भवन्ति ताः कुञ्चिताग्रास्तु[7] ॥८१॥
देवार्चनबलिहरणे [8]संहृते चाग्रपिण्डदाने च ।
कार्यः पुष्पप्रकरश्च पद्मकोशेन हस्तेन ॥८२॥
मणिबन्धाश्लिष्टाभ्यां प्रविरलचलिताङ्गुलीयुतकराभ्याम् ।
कार्यौ विवर्तिताभ्यां विकसितकमलोत्पलाभिनयः ॥८३॥

71-83 (B. 71b-82; G. 73-84. 1 G. स्वेदमार्जने. 2 C. वामगमन. 3 G. शशिलापत. 4 C. नित्या. 5 C. मण्डलयो. 6 G असंगता. 7 B. adds a hem 8 G. समुद्गके; B. समुद्गे.

अङ्गुल्यः संहताः सर्वा सहाङ्गुष्ठेन यस्य च ।
तथा निम्नतलश्चैव स तु सर्पशिराः करः ॥८४॥
एष सलिलप्रदाने भुजङ्गगतौ तोयसेचने चैव ।
आस्फोटने च योज्यः करिकुम्भास्फालनाद्येषु ॥८५॥
अधोमुखीनां सर्वासामङ्गुलीनां समागमः ।
कनिष्ठाङ्गुष्ठकावूर्ध्वौ स भवेन् मृगशीर्षकः ॥८६॥
इह सांप्रतमस्त्यद्य शक्येऽथोल्लासनेऽक्षपाते च ।
स्वेदापमार्जनेषु च कुट्टमिते प्रचलितस्तु भवेत् ॥८७॥
त्रेताग्निसंस्थिता मध्या तर्जन्यङ्गुष्ठकास्तथा ।
काङ्गुलेऽनामिका वक्रा तथा चोर्ध्वा कनीयसी ॥८८॥
एतेन तरुणफलानि नानाविधानि च लघूनि कार्याणि ।
कार्याणि रोषजानि स्त्रीवचनान्यङ्गुलिक्षेपैः[1] ॥८९॥
आवर्तिन्यः करतले यस्याङ्गुल्यो भवन्ति हि ।
पार्श्वगता विकीर्णाश्च स भवेदलपद्मकः ॥९०॥
प्रतिषेधकृते योज्यः कस्य त्वं नास्ति शून्यवचनेषु ।
पुनरारम्भोपन्यासः स्त्रीणामेतेन कर्तव्यः ॥९१॥
तिस्रः प्रसारिता यत्र तथा चोर्ध्वा कनीयसी ।
तासां मध्यस्थिताङ्गुष्ठः स करश्चतुरः स्मृतः ॥९२॥
नयविनयनियमसुनिपुणबालातुरशाठ्यकैतवार्थेषु ।
वाक्ये युक्ते पथ्ये सत्ये [2]प्रशमे च विनियोज्यः ॥९३॥
एकेन द्वाभ्यां वा किञ्चिन्मण्डलकृतेन हस्तदण्डेन ।
[3]विवृतविचारितचरितं [4]वितर्कितं लज्जितं चैव ॥९४॥
नयनौपम्यं पद्मदलरूपणं हरिणकर्णनिर्देशः ।
संयुतकरणेनैव चतुरेणैतानि कुर्वीत ॥९५॥

84-95 (B. 84-96; G. 85-96). 1 B. adds : मरकतवैदूर्यादेः प्रदर्शनं कार्यम् (सुमनसां च कर्तव्यम्)। प्राद्यं विडालपदमिति चैव प्रयोगेषु ; C. •वैदुर्यादीनां निदर्शनम्. 2 C. प्रपने. 3 C. विसृतविचरित. 4 C. विवर्जितं.

लीलां रतिं रुचिं च स्मृतिबुद्धिविभावनाः क्षमां पुष्टिं च ।
संज्ञामाशां प्रणयं विचारणं सङ्गतं शौचम् ॥९६॥
चातुर्यं माधुर्यं दाक्षिण्यं मार्दवं सुखं शीलम् ।
प्रश्नं वार्तायुक्तिं वेषं मृदुशाड्वलं स्तोकम् ॥९७॥
विभवाविभवौ सुरतं गुणागुणौ यौवनं गृहं दारान् ।
नानावर्णांश्च तथा चतुरेणैवं प्रयुञ्जीत ॥९८॥
सितमूर्ध्वेन तु कुर्याद्रक्तं पीतं च मण्डलकृतेन ।
परिमृदितेन तु नीलं वर्णांश्चतुरेण हस्तेन ॥९९॥
मध्यमाङ्गुष्ठसन्दंशो वक्रा चैव प्रदेशिनी ।
ऊर्ध्वमन्ये प्रकीर्णे च अङ्गुल्यौ भ्रमरे करे ॥१००॥
पद्मोत्पलकुमुदानामन्येषां चैव दीर्घवृन्तानाम् ।
पुष्पाणां ग्रहणविधिः कर्तव्यः कर्णपूरश्च ॥१०१॥
विच्युतश्च सशब्दश्च कार्यो निर्भर्त्सनादिषु ।
[1]बलावलेपे शीघ्रे च ताले विश्वासने तथा ॥१०२॥
तर्जनीमध्यमाङ्गुष्ठास्त्रेताग्निस्था निरन्तराः ।
भवेयुर्हंसवक्त्रस्य शेषे द्वे सम्प्रसारिते ॥१०३॥
श्लक्ष्णाल्पशिथिललाघवनिस्साराथें मृदुतरप्रयोगेषु ।
कार्योऽभिनयविशेषः किञ्चित्प्रस्पन्दिताग्रेण ॥१०४॥
समाः प्रसारितास्तिस्त्रस्तया चोर्ध्वा कनीयसी ।
अङ्गुष्ठः कुञ्चितश्चैव हंसपक्ष इति स्मृतः ॥१०५॥
[2]एष च निवापसलिले दातव्ये [3]गन्धसंश्रये चैव ।
कार्यः [4]प्रतिग्रहाचमनभोजनार्थेषु विप्राणाम् ॥१०६॥
आलिङ्गने महास्तम्भनिदर्शने रोमहर्षणे चैव ।
स्पर्शोऽनुलेपनार्थे योज्यः संवाहने चैव ॥१०७॥

96-107 (B. 97-109 ; G. 97-109) 1 B C. बालालापे. 2 C. एष विधिः. 3 G. गजसंश्रये(?) B. गएडसंश्रये. 4 C. प्रतिग्रहावमान.

पुनरेव च नारीणां स्तनान्तरस्थेन विभ्रमविशेषाः ।
कार्या यथारसं स्युर्दुःखे हनुधारणे चैव ॥१०८॥
तर्जन्यङ्गुष्ठसन्दंशो ह्यरालस्य यथा भवेत् ।
आभुग्नतलमध्यश्च स सन्दंश इति स्मृतः ॥१०९॥
सन्दंशास्त्रिविधा ज्ञेया [1]अग्रतो [2]मुख[त]स्तथा ।
तथा पार्श्वगतश्चैव रसभावोपबृंहितः ॥११०॥
पुष्पापचयग्रथने ग्रहणे तृणपर्णकेशसूत्राणाम् ।
[3]शल्यावयवग्रहणापकर्षणे चाग्रसन्दंशः ॥१११॥
वृन्तात् पुष्पोद्धरणं वर्तिशलाकादिपूरणं चैव ।
धिगिति च वचनं रोषात्[4] मुखसन्दंशस्य कर्माणि ॥११२॥
[5]यज्ञोपवीतनि[धा]नवेधनगुणसूक्ष्मबाणलक्ष्येषु ।
[6]योगे ध्याने स्तोके संयुतकरस्तु कर्तव्यः ॥११३॥
[7]पेशलकुत्सासूयासदोषवचने च वामहस्तेन ।
किञ्चिद् विवर्तिताग्रः प्रयुज्यते पार्श्वसन्दंशः ॥११४॥
आलेख्यनेत्ररञ्जनवितर्कवृन्तप्रवालरचनेषु ।
निष्पीडितं तथालक्तकस्य कार्यं च नारीभिः ॥११५॥
[8]समा नताग्राः सहिता यस्याङ्गुल्यो भवन्ति हि ।
ऊर्ध्वा हंसमुखस्यैव भवेन्मुकुलकः करः ॥११६॥
देवार्चनबलिकरणे पद्मोत्पलमुकुलरूपणे चैव ।
विटचुम्बने च कार्यो विकुत्सिते विप्रकीर्णश्च ॥११७॥
भोजनहिरण्यगणनामुखसंकोचप्रदानशीघ्रेषु ।
मुकुलितकुसुमेषु तथा तज्ज्ञैरेष प्रयोक्तव्यः ॥११८॥
पद्मकोशस्य हस्तस्य अङ्गुल्यः कुञ्चिता यदा ।
ऊर्णनाभः स विज्ञेयः [1]केशचौर्यग्रहादिषु ॥११९॥

108-119 (B. 110-120 ; G. 110-120). 1 B. स्तवप्रजो. 2 mss. मुखज. 3 C. शल्याकर्ष-ग्रहणापकर्षणे. 4 BG. रोषे. 5 BgC. ०पवीतनिधन-. BG. पवीतधारण. 6 C. योगेऽध्ययने. 7 G.B. पेलवकुत्सा. 8 G.B. समागताग्रा.

शिरःकण्डूयने चैव कुष्ठव्याधिनिरूपणे ।
सिंहव्याघ्राद्यभिनये प्रस्तरग्रहणे तथा ॥१२०॥
मध्यमाङ्गुष्ठसन्दंशो वक्रा चैव प्रदेशिनी ।
शेषे तलस्थे कर्तव्ये ताम्रचूडे करेऽङ्गुली ॥१२१॥
विच्युतश्च सशब्दश्च कार्यो निर्भर्त्सनादिषु ।
ताले विश्वासने चैव शीघ्रार्थे संज्ञितेषु च ॥१२२॥
तथा कलासु काष्ठासु निमेषे तु [1]क्षणे तथा ।
एष एव करः कार्यो [2]बालालापनिमन्त्रणे ॥१२३॥
अङ्गुल्यः [3]संहिता वक्रा उपर्यङ्गुष्ठपीडिताः ।
प्रसारिता कनिष्ठा च ताम्रचूडः करः स्मृतः ॥१२४॥
शतं सहस्रं लक्षं च [4]कनकं चापि दर्शयेत् ।
क्षिप्रमुक्ताङ्गुलीभिस्तु स्फुलिङ्गान् विप्रुषस्तथा ॥१२५॥
असंयुक्ताः करा ह्येते मया प्रोक्ता द्विजोत्तमाः ।
पुनश्च संयुतान् हस्तान् गदतो मे निबोधत ॥१२६॥

पताकाभ्यां तु हस्ताभ्यां संश्लेषादञ्जलिः स्मृतः ।
देवतानां गुरूणां च मित्राणां चाभिवादने[5] ॥१२७॥
देवतानां शिरःस्थस्तु गुरूणामास्यसंस्थितः ।
वक्षःस्थश्चैव मित्राणां शेषे त्वनियमो भवेत् ॥१२८॥
उभाभ्यामपि हस्ताभ्यामन्योऽन्यं पार्श्वसंग्रहात् ।
हस्तः कपोतको नाम कर्म चास्य निबोधत ॥१२९॥
[1]एष विनयाभ्युपगमे प्रणामकरणे गुरोश्च सम्भाषे ।
शीते भये च कार्यो वक्षःस्थः कम्पितः स्त्रीभिः ॥१३०॥
अयमेवाङ्गुलिपरिघृष्यमाणमुक्तस्तु खिन्नवाक्येषु ।
एतावदिति च कार्यो नेदानीं कृत्यमिति चार्थे ॥१३१॥

120 131 (B. 121-1332 ; G. 121-132). 1 G. करे. 2 C. बलालाप. 3 G. संयुक्ता. 4 C. करेरोकेन. 5 B. adds after this स्थानान्यस्य पुनश्चैषि वद्यो वक्षं शिरस्तथा.

अङ्गुल्यो यस्य हस्तस्य अन्योन्यान्तरनिःस्सृताः ।
स कर्कट इति ज्ञेयः करः कर्म च वक्ष्यते ॥१३२॥
एष मदनाङ्गमर्दे सुप्तोत्थविजृम्भणे [1]वृहद्देहे ।
हनुधारणे च योज्यः शङ्खग्रहणे च तत्त्वज्ञैः ॥१३३॥
मणिबन्धनविन्यस्तावरालौ स्त्रीप्रयोजितौ[2] ।
उत्तानौ वामपार्श्वस्थौ स्वस्तिकः परिकीर्तितः ॥१३४॥
स्वस्तिकविच्युतिकरणाद् दिशो घना खं वनं समुद्रश्च ।
ऋतवो मही तथान्यद् विस्तीर्णं चाभिनेयं स्यात् ॥१३५॥
कटकः कटके न्यस्तः कटकावर्धमानकः ।
[3]शृङ्गारार्थे प्रयोक्तव्यः प्रमाणकरणे तथा[4] ॥१३५॥
अरालौ तु विपर्यस्तावुत्तानावूर्ध्वमानतौ ।
उत्सङ्ग इति विज्ञेयः स्पर्शस्य ग्रहणे करः ॥१३७॥
सनिष्पेषकरश्चैव रोषेऽमर्षेऽपि च स्मृतः ।
निष्पीडितः पुनश्चैव स्त्रीणामीर्ष्याकृते भवेत् ॥१३८॥
मुकुलं च यदा हस्तं कपित्थः परिवेष्टयेत् ।
स मन्तव्यस्तदा हस्तो निषधो नाम नामतः ॥१३९॥
संग्रहपरिग्रहो धारणं च समयश्च सत्यवचनं च ।
संक्षेपः संक्षिप्तं निपीडितेनाभिनेतव्यम् ॥१४०॥
[5]गृहीत्वा वामहस्तेन कूर्पराभ्यन्तरे भुजम् ।
दक्षिणं चापि वामस्य कूर्पराभ्यन्तरं न्यसेत् ॥१४०(क)॥
स चापि दक्षिणो हस्तः सम्यङ् मुष्टीकृतो भवेत् ।
इत्येष निषधो हस्त कर्म चास्य निबोधत ॥१४०(ख)॥

132-140kha (B. 133b-145; G. 133-141). 1 C. महद्देहे. 2 C. वर्धमान कौ. 3 C. शृङ्गारार्थेषु योक्तव्यः. 4 G.B. add अन्ये क्षुद्रोलचक्रन्तेन कर्तव्यच्छत्रधारणु 5 B C. and Gg. read these as 140 ka-ga given above and also add अथवा, द्वैधो वै निषधो नाम हंसपक्षौ पराङ्मुखौ। जालवातायनादीनां प्रयोक्तव्योऽभिधाने.

एतेन धैर्यमदगर्वसौष्ठवौत्सुक्यविक्रमाटोपा ।
अभिमानावष्टम्भः स्तम्भस्थैर्यादयः कार्याः ॥१४०(ग)॥
अंसौ प्रशिथिलौ मुक्तौ पताकौ प्रविलम्बितौ ।
यदा भवेतां करणे स दोल इति संज्ञितः ॥१४१॥
संभ्रमविषादमूर्च्छितमदाभिघाते तथैव चावेगे ।
व्याधिप्लुते च [1]शस्त्रक्षते च कार्योऽभिनययोग ॥१४२॥
यस्तु सर्पशिराः प्रोक्तस्तस्याङ्गुलिनिरन्तर· ।
द्वितीयः पार्श्वसंश्लिष्टः स तु पुष्पपुटः स्मृतः ॥१४३॥
[2]धान्यफलपुष्पभक्ष्याण्यनेन नानाविधानि युक्तानि ।
ग्राह्याण्युपनेयानि तोयानयनापनयने च ॥१४४॥
पताकौ तु यदा [3]हस्तावूर्ध्वाङ्गुष्ठावधोमुखौ ।
उपर्युपरि विन्यस्तौ तदा स मकरः करः ॥१४५॥
[4]सिंहव्यालद्वीपिप्रदर्शनं नक्रमकरमत्स्यानाम् ।
ये चान्ये क्रव्यादा [5]ह्यभिनेयास्तेऽर्थयोगेन ॥१४६॥
कूर्परांसाञ्चितौ हस्तौ यदास्तां सर्पशीर्षकौ ।
गजदन्तः स विज्ञेयः कर्म चास्य निबोधत ॥१४७॥
[6]एष च वरयानवधूग्रहणे चातिभारयोगे च ।
स्तम्भे ग्रहणे च तथा शैलशिलोत्पाटने चैव ॥१४८॥
शुकतुण्डौ करौ कृत्वा वक्षस्यभिमुखाञ्चितौ ।
शनैरधोमुखाविद्धौ सोऽवहित्थ इति स्मृत· ॥१४९॥
दौर्बल्ये निःश्वसिते गात्राणां दर्शने तनुत्वे च ।
उत्कण्ठिते च तज्ज्ञैरभिनययोगस्तु कर्तव्य·[7] ॥१५०॥

140g-150 (B. 146-157; G. 142-151). 1 C. शराहते 2 C. धान्यफल, पुष्पान्यनेन. C. धान्यजनं. 3 C. हस्तौ मूर्धाङ्गुष्ठा-. 4 C. सिंहव्याघ्रद्विरद-. 5 C. ह्यभिनेयास्तेन हस्तेन. 6 G. भूधर-धवराणामुद्वाहने, C. एष च वधूवराणामुद्वाहे. 7 C. Go. add after this मुकुलस्तु यदा हस्तः कपित्थपरिवेष्टितः । वर्धमानः स विज्ञेयः कर्म चास्य निबोधत ॥ संमर्दपरिमर्दौ धारणं च मर्मवच मल्लवचनं च । संदेशतन्त्र संविभजनिपीडितेनाभिनेतव्यम् ।

विज्ञेयो वर्धमानस्तु हंसपक्षौ पराङ्मुखौ।
जालवातायनादीनां प्रयोक्तव्यो विघाटने ॥१५१॥
उक्ता ह्येते द्विविधा ह्यसंयुताः संयुताश्च संक्षेपात्।
अभिनयकरा ये त्विह ते ह्यन्यत्राप्यर्थत[1] साध्याः ॥१५२॥
[2]आकृत्या चेष्टया चिह्नैर्जात्या विज्ञाय तत्पुनः।
स्वयं [3]वितर्क्य कर्तव्यं हस्ताभिनयनं बुधैः ॥१५३॥
नास्ति कश्चित्तथाऽहस्तो नाट्यार्थाभिनयं प्रति।
यस्य यद् दृश्यते रूपं बहुशस्तन्मयोदितम् ॥१५४॥
अन्ये चाप्यर्थसंयुक्ता लौकिका ये करास्त्विह।
छन्दतस्ते नियोक्तव्या रसभावविचेष्टितैः ॥१५५॥
देशं कालं प्रयोगं [3]च अर्थयुक्तिमवेक्ष्य च।
हस्ता ह्येते प्रयोक्तव्याः स्त्रीणां नृणां विशेषतः ॥१५६॥
सर्वेषामेव हस्तानां यानि कर्माणि सन्ति हि।
तान्यहं संप्रवक्ष्यामि रसभावकृतानि तु ॥१५७॥
उत्कर्षणं विकर्षणं तथा चैवापकर्षणम्[4]।
परिग्रहो निग्रहश्च आह्वानं नोदनं तथा ॥१५८॥
संश्लेषश्च वियोगश्च रक्षणं मोक्षणं तथा।
विक्षेपधूनने चैव [5]विसर्गस्तर्जनं तथा ॥१५९॥
छेदनं भेदनं चैव स्फोटनं [6]मोटनं तथा।
ताडनं चेति विज्ञेयं तज्ज्ञैः कर्म करान् प्रति ॥१६०॥
[7]उत्तानः पार्श्वगश्चैव तथाधोमुख एव च।
हस्तप्रचारस्त्रिविधो नाट्यनृत्तसमाश्रयः ॥१६१॥
सर्वे हस्तप्रचाराश्च प्रयोगेषु यथाविधि।
नेत्रभ्रूमुखरागैश्च कर्तव्या व्यञ्जिता बुधैः ॥१६२॥

151-162 (B. 158-170, G. 152-162). 1 G. प्रकृत्या 2 C. वितर्कित. 3 B.G. चाप्यर्थं. 4 G. आकर्षणं पुनः. 5 C. विसर्गस्त्वदनन्तरम्. 6 C. मोदनं. 7 G. om. this couplet.

करणं कर्म स्थानं प्रचारयुक्तिं क्रियां च संप्रेक्ष्य ।
हस्ताभिनयः कार्यस्तज्ज्ञैर्लोकोपचारेण ॥१६३॥
उत्तमानां कराः कार्या ललाटक्षेत्रचारिणः ।
वक्षःस्थाश्चैव मध्यानामधमानामधोगताः ॥१६४॥
ज्येष्ठे स्वल्पप्रचाराः स्युर्मध्ये [1]मध्यविचारिणः ।
अधमेषु प्रकीर्णास्तु हस्ताः कार्याः प्रयोक्तृभिः ॥१६५॥
लक्षणव्यञ्जिता हस्ताः कार्यास्तूत्तममध्यमैः ।
लोकक्रियास्वभावेन नीचैरप्यर्थसंश्रयाः ॥१६६॥
अथवान्यादृशं प्राप्य प्रयोगं कालमेव च ।
विपरीताश्रया हस्ताः प्रयोक्तव्या [2]बुधैर्नरैः ॥१६७॥
विषण्णे मूर्च्छिते [3]ह्रीते जुगुप्साशोकपीडिते ।
ग्लाने सुप्ते विहस्ते च निश्चेष्टे तन्द्रिते जडे ॥१६८॥
व्याधिग्रस्ते ज्वरार्ते च भयार्ते शीतविप्लुते ।
मत्ते प्रमत्ते चोन्मत्ते चिन्तायां तपसि स्थिते ॥१६९॥
[4]हिमवर्षगते बन्धे [5]हारिणप्लवसंश्रिते ।
स्वप्नायिते च सम्भ्रान्ते [6]नखसंस्फोटने तथा ॥१७०॥
[7]न हस्ताभिनयः कार्यं कार्यः [8]सत्त्वस्य संग्रहः ।
* तथा काकुविशेषश्च [9]नानाभावरसान्वितः ॥१७१॥
यत्र व्यग्रावुभौ हस्तौ [10]तत्र दृष्टिविलोकितैः ।
वाचिकाभिनयं कुर्याद्विरामैरर्थदर्शकैः[11] ॥१७२॥
एवं ज्ञेया करा ह्येते नानाभिनयसंश्रिताः ।
अत ऊर्ध्वं प्रवक्ष्यामि [12]हस्तान् नृत्तसमाश्रयान् ॥१७३॥

163-173 (B. 171-183, G 165-176) 1 B. मध्ये कुर्वीत मध्यमैः. 2 B. बुधैर्नरा 3 C भीते 4 B हिमवर्षहते बद्धे 5 C. हरिण°, B. वारिप्ला. 6 G. नतसंस्फोटने. 7 C. तथा हस्ताभिनय°. 8 G. सत्त्वस्य सम्भव, B. सत्त्वसमाश्रय°. 9 G. °रसान्वित, B. नानार्थरसभावक°. 10 B. तत्रदृष्टिविलोकनैः, C. यत्रदृष्टि°. 11 G.B. add two more śl. 12 B करान्

वक्षसोऽष्टाङ्गुलस्थौ तु प्राङ्मुखौ कटकामुखौ ।
समानकूर्परांसौ तु चतुरस्रौ प्रकीर्तितौ ॥१७४॥
हंसपक्षकृतौ हस्तौ व्यावृत्तौ तालवृन्तवत् ।
उद्वृत्ताविति विज्ञेयावथवा तालवृन्तकौ ॥१७५॥
चतुरस्रस्थितौ हस्तौ हंसपक्षकृतौ तथा ।
तिर्यक्स्थितौ चाभिमुखौ ज्ञेयौ तलमुखाविति ॥१७६॥
तावेव मणिबन्धान्ते स्वस्तिकाकृतिसंस्थितौ ।
स्वस्तिकाविति विख्यातौ विच्युतौ विप्रकीर्णकौ ॥१७७॥
अलपल्लवसंस्थानावूर्ध्वास्यौ पद्मकोशकौ ।
अरालकटकाख्यौ वा अरालकटकामुखौ ॥१७८॥
भुजांसकूर्पराग्रैस्तु कुटिलावर्तितौ करौ ।
[1]पराङ्मुखतलाविद्धौ ज्ञेयावाविद्धवक्त्रकौ ॥१७९॥
हस्तौ तु सर्पशिरसौ मध्यस्थाङ्गुष्ठकौ यदा ।
तिर्यक्प्रसारितास्यौ च तदा सूचीमुखौ स्मृतौ ॥१८०॥
रेचितौ [2]चापि विज्ञेयौ [3]हंसपक्षौ द्रुतभ्रमौ ।
प्रसारितोत्तानतलौ रेचितावेव [4]संज्ञितौ ॥१८१॥
चतुरस्रो भवेद्वामः सव्यहस्तश्च रेचित ।
विज्ञेयौ नृत्ततत्त्वज्ञैरर्धरेचितसंज्ञकौ[5] ॥१८२॥
अञ्चितौ कूर्परांसौ तु त्रिपताकाकृतौ करौ ।
किञ्चित्तिर्यग्गतावेतौ स्मृतावुत्तानवञ्चितौ ॥१८३॥
मणिबन्धनमुक्तौ तु पताकौ पल्लवौ स्मृतौ ।
बाहुशीर्षाद्विनिष्क्रान्तौ नितम्बाविति कीर्तितौ ॥१८४॥
केशदेशाद्विनिष्क्रान्तौ [6]परिपार्श्वस्थितौ यदा ।
विज्ञेयौ केशबन्धाख्यौ करावाचार्यसम्मतौ ॥१८५॥

174-185 (B. 184-197; G 177-190). 1 C. पराङ्मुखतया°. 2 G. वापि. 3 C. हंसपक्षोद्धृतभ्रमौ 4 C. मस्थितौ 5 B. G. °संज्ञितौ. 6 B. परिपार्श्वोत्थितौ तथा.

तिर्यक् प्रसारितौ चैव पार्श्वसंस्थौ तथैव च ।
लताख्यौ च करौ ज्ञेयौ नृत्ताभिनयनं प्रति ॥१८६॥
समुन्नतो लताहस्तः पार्श्वात्पार्श्वविलोलितः ।
त्रिपताकोऽपरः कर्णे [1]करिहस्तौ प्रकीर्तितौ ॥१८७॥
कटिशीर्षनिविष्टाग्रौ त्रिपताकौ यदा करौ ।
पक्षवञ्चितकौ हस्तौ तदा ज्ञेयौ प्रयोक्तृभिः ॥१८८॥
तावेव तु परावृत्तौ पक्षप्रद्योतकौ स्मृतौ ।
अधोमुखतलाविद्धौ ज्ञेयौ गरुडपक्षकौ ॥१८९॥
हंसपक्षकृतौ हस्तौ व्यावृत्तपरिवर्तितौ ।
तथा[2] प्रसारितभुजौ दण्डपक्षाविति स्मृतौ ॥१९०॥
ऊर्ध्वमण्डलिनौ हस्तावूर्ध्वदेशविवर्तनात् ।
तावेव पार्श्वविन्यस्तौ पार्श्वमण्डलिनौ स्मृतौ ॥१९१॥
उद्वेष्टितो भवेदेको [3]द्वितीयश्चापवेष्टितः ।
भ्रमितावुरसः स्थाने उरोमण्डलिनौ स्मृतौ ॥१९२॥
अलपल्लवाकारालावुर्नेऽर्ध्वभ्रमणक्रमात् ।
[4]पार्श्वार्धतश्च विज्ञेयावुरःपार्श्वार्धमण्डलौ ॥१९३॥
हस्तौ तु मणिबन्धान्ते कुञ्चितावञ्चितौ यदा ।
[5]कटकाख्यौ कृतौ स्यातां मुष्टिकस्वस्तिकौ तदा ॥१९४॥
पद्मकोशौ यदा हस्तौ [6]व्यावृत्तपरिवर्तितौ ।
नलिनीपद्मकोशौ तु तदा ज्ञेयौ प्रयोक्तृभिः ॥१९५॥
करावुद्वेष्टिताग्रौ तु प्रविधायालपल्लवौ ।
ऊर्ध्वप्रसारिताविद्धौ विज्ञेयावुल्वणाविति ॥१९६॥
पल्लवौ च शिरोदेशे संप्राप्तौ ललितौ स्मृतौ ।
कूर्परस्वस्तिकगतौ लताख्यौ वलिताविति ॥१९७॥

186-197 (B. 198-209, G. 191-202) 1 B G करिहस्तौ प्रकीर्तित. 2 C. तथा. 3 C. द्वितीयश्च विवेष्टित. 4 BC पार्श्वार्धतश्च, 5 G. खटकाख्यौ कृतौ, G. खटकास्वकृतौ, C. कटकाख्या तु तौ 6 C. व्यावर्त०.

करणे तु प्रयोक्तव्या नृत्तहस्ता विशेषतः ।
तथार्थाभिनये चैव पताकाद्याः प्रयोक्तृभिः ॥१९८॥
सङ्करोऽपि भवेत्तेषां प्रयोगेऽर्थवशात् पुनः ।
प्राधान्येन पुनः संज्ञा नाट्ये नृत्ते करेष्विह ॥१९९॥
वियुताः संयुताश्चैव नृत्तहस्ता प्रकीर्तिताः ।
अतःपरं प्रवक्ष्यामि करणं [1]हस्तसंश्रयम् ॥२००॥
सर्वेषामेव हस्तानां [2]नाट्यहस्तप्रवेदिभिः ।
विज्ञातव्य प्रयत्नेन करणं तु चतुर्विधम् ॥२०१॥
[3]अथावेष्टितमेकं स्यादुद्वेष्टितमथापरम् ।
व्यावर्तितं तृतीयं तु चतुर्थं परिवर्तितम् ॥२०२॥
आवेष्ट्यन्ते यदाङ्गुल्यस्तर्जन्याद्या यथाक्रमम् ।
अभ्यन्तरेण करणं तदावेष्टितमुच्यते ॥२०३॥
उद्वेष्ट्यन्ते यदाङ्गुल्यस्तर्जन्याद्या बहिर्मुखाः ।
क्रमशः करणं विप्रास्तदुद्वेष्टितमुच्यते ॥२०४॥
आवर्त्यन्ते कनिष्ठाद्या ह्यङ्गुल्योऽभ्यन्तरेण तु ।
यत्तु क्रमेण करणं तद्व्यावर्तितमुच्यते ॥२०५॥
उद्वर्त्यन्ते कनिष्ठाद्या बाह्यतः क्रमशो यदा ।
अङ्गुल्यः करणं विप्रास्तदुक्तं परिवर्तितम् ॥२०६॥
नृत्तेऽभिनययोगे वा पाणिभिर्वर्तनाश्रयैः ।
मुखभ्रूनेत्रयुक्तानि करणानि प्रयोजयेत् ॥२०७॥
[4]तिर्यगूर्ध्वगतं चैव तथाधोमुख एव च ।
आविद्धश्चापविद्धश्च मण्डलस्वस्तिकस्तथा ॥२०८॥

198-208 (B 210-220, G. 203-213). 1 G. करणं कर०, B. करान् करणसंश्रयान्. 2 G. नाट्यहस्त प्रवेदिभि. 3 G. अपवेष्टितम्. 4 B G. read 208 as तिर्यक्चोर्ध्वसंस्थो ह्यधोमुखश्चाविद्धोऽपविद्धस्तु । मण्डलगतिर्न्यथा स्वस्तिकश्च पृष्ठानुसारी च

अञ्चितः कुञ्चितश्चैव पृष्ठगश्चेति चोदितः ।
बाहुप्रकारो दशधा नाट्यनृत्तप्रयोक्तृभिः[1] ॥२०९॥
हस्तानां करणविधिर्मया समासेन निगदितो विप्राः ।
अत ऊर्ध्वं व्याख्यास्ये हृदयोदरपार्श्वकर्माणि[2] ॥२१०॥

इति भारतीये नाट्यशास्त्रे हस्ताभिनयो नाम
नवमोऽध्यायः ॥

1 B.G. read 209 as

उद्वेष्टितः प्रसारित इत्येते वै स्मृताः प्रकारास्तु ।
बाह्वोरिति करणगता विज्ञेया नर्तकैर्नित्यम् ॥

2 B. *does not stop and treats the chapter* X *as the part of the present chapter.*

आभुग्नमथ निर्भुग्नं तथा चैव प्रकम्पितम् ।
उद्वाहितं समं चैव उरः पञ्चविधं स्मृतम् ॥१॥
निम्नमुन्नतपृष्ठं च व्याभुग्नांसं श्लथं क्वचित् ।
आभुग्नं तदुरो ज्ञेयं कर्म चास्य निबोधत ॥२॥
संभ्रमविषादमूर्छाशोकभयव्याधिहृदयशल्येषु ।
कार्यं शीतस्पर्शे वर्षे [1]लज्जान्वितेऽर्थवशात् ॥३॥
स्तब्धं च निम्नपृष्ठं च निर्भुग्नांसं समुन्नतम् ।
उरो निर्भुग्नमेतद्धि कर्म चास्य निबोधत ॥४॥
स्तम्भे मानग्रहणे विस्मयदृष्टे च सत्यवचने च ।
अहमिति च दर्पवचने [2]गर्वोत्सेके च कर्तव्यम् ॥५॥
ऊर्ध्वक्षेपैरुरो [3]यत्र निरन्तरकृतैः कृतम् ।
प्रकम्पितं तु विज्ञेयमुरो नाट्यप्रयोक्तृभिः ॥६॥
[4]हसितरुदितेषु कार्यं श्रमे भये श्वासकासयोश्चैव ।
[5]हिक्के दुःखे च तथा नाट्यज्ञैरर्थयोगेन ॥७॥
उद्वाहितमूर्ध्वगतमुरो ज्ञेयं प्रयोगतः ।
दीर्घोच्छ्वासोन्नतालोके जृम्भणादिषु चेष्यते ॥८॥
[7]सर्वैरेवाङ्गविन्यासैश्चतुरश्रकृतैः कृतम् ।
उरः समं तु विज्ञेयं स्वस्थं सौष्ठवसंयुतम् ॥९॥
एतदुक्तं मया सम्यगुरसस्तु विकल्पनम् ।
अत [8]ऊर्ध्वं प्रवक्ष्यामि पार्श्वयोरिह लक्षणम् ॥१०॥

1-10 (B. IX. 223-233; G. 1-11). 1 C. लज्जायिते 2 C. गर्वोत्साहे. 3 G B. add one śl. 4 C यत्तु. 5 C. हसितरुदितादिसंभ्रमभयश्रमव्याधि-पीडितार्थेषु. 6 C. नानाभावोपगत कार्यमुरोनाट्ययोगेषु 7 C. सर्वैः समोद्धतैरङ्गैः. 8 B.G. परं.

नतं समुन्नतं चैव प्रसारितविवर्तिते ।
[1]तथापसृतमेव तु पार्श्वयोः कर्म पञ्चधा ॥११॥
[2]कटी भवेत्तु व्याभुग्ना पार्श्वमाभुग्नमेव च ।
तथैवापसृतांस च किञ्चित् पार्श्वं नतं स्मृतम् ॥१२॥
नतस्यैवापरं पार्श्वं विपरीतं तु युक्तितः ।
[3]कटीपार्श्वभुजांसैश्चाप्युन्नतैरुन्नतं भवेत् ॥१३॥
आयामनादुभयतः पार्श्वयोः स्यात्प्रसारितम् ।
[4]परिवर्तं त्रिकस्यापि विवर्तितमिहेष्यते ॥१४॥
[5]विवर्तितापनयनाद् भवेदपसृतं पुनः ।
पार्श्वलक्षणमित्युक्तं विनियोगं निबोधत ॥१५॥
उपसर्पे नतं कार्यमुन्नतं चापसर्पणे ।
प्रसारितं प्रहर्षादौ [6]परिवृत्ते विवर्तितम् ॥१६॥
विनिवृत्ते त्वपसृतं पार्श्वमर्थवशाद्भवेत् ।
एतानि पार्श्वकर्माणि जठरस्य निबोधत ॥१७॥
क्षामं खल्वं च पूर्णं च संप्रोक्तमुदरं त्रिधा ।
तनु क्षामं नतं खल्वं पूर्णमाध्मातमुच्यते ॥१८॥
क्षामं [7]हासे च रुदिते निःश्वासे जृम्भणे भवेत् ।
व्याधिते तपसि श्रान्ते क्षुधार्ते खल्वमिष्यते ॥१९॥
पूर्णमुच्छ्वसिते स्थूले [8]व्याधितात्यशनादिषु[9] ।
इत्येतदुदरस्योक्तं कर्म कट्या निबोधत ॥२०॥
छिन्ना चैव निवृत्ता च रेचिता कम्पिता तथा ।
उद्वाहिता चेति कटी नाट्ये नृत्ते च पञ्चधा ॥२१॥
कटीमध्यस्य चलनाच्छिन्ना संपरिकीर्तिता ।
पराङ्मुखस्याभिमुखी निवृत्ता स्यान्निवर्तिता ॥२२॥

11-22 (B. IX. 234-246a, G. 12-23). 1 C. तथा प्रसृतमेतत्तु. 2 C. कटिर्भवेत्. 3 B. °भुजांसैश्चाप्युन्नतै°. 4 B. परिवर्ताद्, G. परिवर्तं, C. परिवर्ति°. 5 G. विवर्तनाप°, B. निवर्तनाप°. 6 C. परिवर्तौ. 7 B. G. हास्ये. 8 G. °व्याधिताध्यशना°, C. °व्याधितन्द्राशना°. 9 B.G. add a hem.

सर्वतो भ्रमणाच्चापि विज्ञेया रेचिता कटी ।
[1]तिर्यग्गतागता क्षिप्रं कटी ज्ञेया प्रकम्पिता ॥२३॥
नितम्बपार्श्वोद्वहनाच्छनैरुद्वाहिता कटी ।
[2]कटीकर्म मया प्रोक्तं विनियोगं निबोधत ॥२४॥
छिन्ना व्यायामसंभ्रान्तव्यावृत्तप्रेक्षणादिषु ।
निवृत्ता वर्तने चैव रेचिता भ्रमणेषु च ॥२५॥
कुब्जवामननीचानां गतौ कार्या प्रकम्पिता ।
स्थूलेषूद्वाहिता योज्या स्त्रीणां लीलागतेषु च ॥२६॥
कम्पनं वलनं चैव स्तम्भनोद्वर्तने तथा ।
[3]निवर्तनं च पञ्चैतान्यूरुकर्माणि कारयेत् ॥२७॥
नमनोन्नमनात् पार्ष्ण्योर्मुहुः स्यादूरुकम्पनम् ।
गच्छेदभ्यन्तरं जानु [4]यत्र तद्वलनं स्मृतम् ॥२८॥
स्तम्भनं चात्र विज्ञेयम् [5]अपवृत्तक्रियात्मकम् ।
वलिताविद्धकरणादूर्वोरुद्वर्तनं स्मृतम् ॥२९॥
पार्ष्णिरभ्यन्तरं गच्छेद्यत्र [5]तत्तु निवर्तनम् ।
गतिष्वधमपात्राणां भवेच्चापि हि कम्पनम् ॥३०॥
वलनं चैव कर्तव्य स्त्रीणां स्वैरपरिक्रमे ।
साध्वसे च विषादे च स्तम्भनं तु प्रयोजयेद् ॥३१॥
व्यायामे ताण्डवे चैव कार्यमुद्वर्तनं बुधैः ।
निवर्तनं तु कर्तव्यं संभ्रमादिपरिक्रमे ॥३२॥
[6]यथादर्शनमन्यच्च लोकाद् ग्राह्यं प्रयोक्तृभिः ।
इत्यूर्वोर्लक्षणं प्रोक्तं जङ्घयोश्च निबोधत ॥३३॥
आवर्तितं नतं क्षिप्तमुद्वाहितमथापि वा ।
परिवृत्तं तथा चैव जङ्घाकर्माणि पञ्चधा ॥३४॥

23-34 (B. IX. 246b-258a, G. 24-35). 1 C. गतागत।क्षिप्तं. 2 B. G. read differently. 3 B. विवर्तनं. 4 B. यत्तु. 5 B. अपविद्ध°. 5 C. तत्र. 6 C. तथा.

वामो दक्षिणपार्श्वेन [1]दक्षिणश्चापि वामतः ।
पादो यत्र व्रजेद्विप्रास्तदावर्तितमुच्यते ॥३५॥
[2]जानुनः [3]कुञ्चनाच्चैव नतं ज्ञेयं प्रयोक्तृभि ।
[4]विक्षेपाच्चैव जङ्घायाः क्षिप्तमित्यभिधीयते ॥३६॥
उद्वाहितं च विज्ञेयमूर्ध्वमुद्वाहनादपि ।
प्रतीपनयनं [5]यत्तु परिवृत्तं तदुच्यते ॥३७॥
आवर्तितं प्रयोक्तव्यं [6]विदूषकपरिक्रमे ।
नतं चापि हि कर्तव्यं स्थानासनगतादिषु ॥३८॥
क्षिप्तं व्यायामयोगेषु ताण्डवे च प्रयुज्यते ।
तथा चोद्वाहितं [7]कार्यमाविद्धगमनादिषु ॥३९॥
ताण्डवादौ प्रयोक्तव्यं परिवृत्तं प्रयोक्तृभिः ।
इत्येतज्जङ्घयोः कर्म पादयोस्तु निबोधत ॥४०॥
उद्घट्टितः समश्चैव तथाग्रतलसञ्चरः ।
अञ्चित. [8]कुञ्चितश्चैव पादः पञ्चविधः स्मृतः ॥४१॥
स्थित्वा पादतलाग्रेण पार्ष्णिर्भूमौ निपात्यते ।
यस्य पादस्य करणे भवेदुद्घट्टितस्तु सः ॥४२॥
अयमुद्घट्टितकरणेष्वनुकरणार्थं प्रयोगमासाद्य ।
[9]द्रुतमध्यमप्रचारः सकृदसकृद्वा प्रयोक्तव्यः ॥४३॥
स्वभावरचितो भूमौ समस्थानश्च यो भवेत् ।
समपादः स विज्ञेयः स्वभावाभिनयाश्रयः[10] ॥४४॥
स्थिरस्वभावाभिनये नानाकरणसंश्रये ।
चलितश्च पुनः कार्यो विधिज्ञैः पादरेचिते[11] ॥४५॥

35-45 (B. IX. 258b-270a, G. 36-49). 1 B. दक्षिणश्चापि. 2 G. जानुत . 3 C. कुञ्चनं चापि. 4 C. विक्षेपं. 5 C. यत्तत्. 6 C. सम्भ्रमातिपरिक्रमे 7 C. कुर्यात्. 8 G. कुञ्चित सूची पादः षोढा. 9 C. द्रुतमध्य०. 10 G. adds one śl. 11 B. adds 3 couplets.

उत्क्षिप्ता तु भवेत् [1]पार्ष्णिरञ्चितोऽङ्गुष्ठकस्तथा ।
अङ्गुल्यश्चाञ्चिताः सर्वाः पादेऽग्रतलसञ्चरे ॥४६॥
[2]नोदनकुट्टिते स्थितनिशुम्भिते भूमिताडने भ्रमणे ।
विक्षेपविविधरेचक[3]पार्ष्णिक्षतगमनमेतेन ॥४७॥
[4]पार्ष्णिर्यस्य स्थिता भूमा[5]वूर्ध्वमग्रतलं तथा ।
अङ्गुल्यश्चाञ्चिताः सर्वाः स पादस्त्वञ्चितः स्मृतः ॥४८॥
पादाग्रक्षतसञ्चारे वर्तितोद्वर्तिते तथा ।
एष पादाहते कार्यो नानाभ्रमरकेषु च ॥४९॥
उत्क्षिप्ता यस्य पार्ष्णिः स्यादङ्गुल्यः कुञ्चितास्तथा ।
तथाकुञ्चितमध्यश्च स पादः कुञ्चितः स्मृतः ॥५०॥
उदात्तगमने चैव वर्तितोद्वर्तिने तथा ।
अतिक्रान्तक्रमे चैव प्रयोगस्तस्य कीर्त्यते[6] ॥५१॥
पादजङ्घोरुकरणं समं कार्यं प्रयोक्तृभिः ।
पादस्य करणे सर्वं जङ्घोरुस्थमिष्यते ॥५२॥
यथा पादः प्रवर्तेत तथैवोरुः प्रवर्तते ।
[7]अनयोः समानकरणात् पादचारीं प्रयोजयेत् ॥५३॥
इत्येदङ्गजं प्रोक्तं लक्षणं कर्म चैव हि ।
अतःपरं प्रवक्ष्यामि चारीव्यायामलक्षणम् ॥५४॥

इति भारतीये नाट्यशास्त्रे शारीराभिनयो नाम
दशमोऽध्यायः ।

46-54 (B IX. 273b-283; G. 50-58) 1 B. पार्ष्णिः प्रसृतोऽङ्गुष्ठकस्तथा. 2 B. तोदननिकुट्टने स्थितनिशुम्भने, G. ताडननिकुट्टनस्थितनिशुम्भने. 3 B. ०पार्ष्णि-कृताग्र०. 4 C. पार्ष्णिर्यस्याञ्चिता. 5 C. ऊर्ध्वाग्रतलम्, B. पादनग्रतलं, 6 B.G. add one śl. and a half. 7 B.G. तयोः.

# एकादशोऽध्यायः

* एवं पादस्य जङ्घाया ऊरोः कट्यास्तथैव च ।
* [1]समानकरणाच्चेष्टा चारीति परिकीर्तिता ॥१॥
विधानोपगताश्चार्यो व्यायच्छन्ते परस्परम् ।
यस्मादङ्गसमायुक्तस्तस्माद् व्यायाम उच्यते ॥२॥
एकपादप्रचारो यः सा चारीत्यभिसंज्ञिता ।
द्विपादक्रमणं यत्तु करणं नाम तद् भवेत् ॥३॥
करणानां समायोगः खण्ड इत्यभिधीयते ।
खण्डैस्त्रिभिश्चतुर्भिर्वा [2]संयुक्तं मण्डलं भवेत् ॥४॥
चारीभिः [3]प्रस्तुतं नृत्तं चारीभिश्चेष्टितं तथा ।
चारीभिः शस्त्रमोक्षश्च चार्यो युद्धे च कीर्तिताः ॥५॥
यदेतत् प्रस्तुतं नाट्यं तच्चारीष्वेव [4]संस्थितम् ।
न हि चार्या विना किञ्चिन्नाट्ये ह्यङ्गं प्रवर्तते ॥६॥
तस्माच्चारीविधानस्य संप्रवक्ष्यामि लक्षणम् ।
या यस्मिंस्तु [5]यथा योज्या नृत्ते युद्धे गतौ तथा ॥७॥
समपादा स्थितावर्ता शकटास्या तथैव च ।
अध्यर्धिका चाषगतिर्विच्यवा च तथापरा ॥८॥
एडकाक्रीडिता बद्धा ऊरूद्वृत्ता तथाड्डिता ।
[6]उत्स्पन्दिता च जनिता स्यन्दिता चापस्यन्दिता ॥९॥
समोत्सारितमत्तल्ली मत्तल्ली चेति षोडश ।
एता भौम्यः स्मृताश्चार्यः [7]शृणुताकाशकीः पुनः ॥१०॥

1-10 (B X, 1-10 ; G. 1-10). 1 B. समानकरणे, Bch. समानकरणा. 2 B. संयुक्तैः. 3 B प्रसृतं. 4 C. सञ्ज्ञितम् 5 C. प्रयोक्तव्या. 6 B.G. उत्स्यन्दिता. 7 C. शृणुताकाशकी, B.G. आकाशिकी.

अतिक्रान्ता ह्यपक्रान्ता पार्श्वक्रान्ता तथैव च ।
ऊर्ध्वजानुश्च सूची च तथा नूपुरपादिका ॥११॥
दोलपादा तथाक्षिप्ता [1]आविद्धोद्वृत्तसंज्ञिते ।
विद्युद्भ्रान्ता ह्यलाता च भुजङ्गत्रासिता तथा ॥१२॥
मृगप्लुता च दण्डा च भ्रमरी चेति षोडश ।
आकाशिक्यः स्मृता ह्येता लक्षणं च निबोधत ॥१३॥
पादैर्निरन्तरकृतैस्तथा समनखैरपि ।
समपादा तु सा चारी विज्ञेया स्थानसंश्रया ॥१४॥
भूमिघृष्टेन पादेन कृत्वाभ्यन्तरमण्डलम् ।
[2]पुनरुत्सारयेदन्यं स्थितावर्ता तु सा स्मृता ॥१५॥
निषण्णाङ्गस्तु चरणं प्रसार्य तलसञ्चरम् ।
उद्वाहितमुरः कृत्वा [3]शकटास्यां प्रयोजयेत् ॥१६॥
सव्यस्य पृष्ठतो वामश्चरणस्तु यदा भवेत् ।
[4]तस्योपसर्पणं चैव ज्ञेया साध्यधिका बुधैः ॥१७॥
पादः प्रसारितः सव्य. पुनश्चैवोपसर्पितः ।
वाम सव्यापसर्पी च चापगत्यां विधीयते ॥१८॥
[5]विच्यवात् समपादाया [6]विच्यवं सम्प्रयोजयेत् ।
निकुट्टयंस्तलाग्रेण[7] पादस्य धरणीतलम् ॥१९॥
तलसञ्चारपादाभ्यामुत्प्लुत्य पतनं तु यत् ।
[8]पर्यायशश्च क्रियते एडकाक्रीडिता तु सा ॥२०॥
अन्योन्यजङ्घासंवेधात् कृत्वा तु स्वस्तिकं ततः ।
ऊरुभ्यां वलनं यस्मात् सा बद्धा चार्युदाहृता ॥२१॥
तलसञ्चरपादस्य पार्ष्णिर्यस्योन्मुखी यदा ।
जङ्घाञ्चिता तथोद्वृत्ता ऊरुद्वृत्तेति सा स्मृता ॥२२॥

11-22 (B.X. 11-22 ; G. 11-22). 1 C. व्याविद्धोद्वृत॰. 2 C. पुनरुत्सादयेदन्यं. 4 C. तस्योपसर्पणं. 5 C. वीच्यवात्. 6 C. विश्लेषं. 7 C. ॰लयाग्रेण. 8 C. पर्यायतश्च

अग्रतः पृष्ठतो वापि पादोऽग्रतलसञ्चरः ।
द्वितीयपादनिर्घृष्टो [1]यत्रस्यादड्डिता तु सा ॥२३॥
शनैः पादो निवर्तेत बाह्येनाभ्यन्तरेण च ।
यद्रेचकानुसारेण सा [2]चार्युत्स्यन्दिता स्मृता ॥२४॥
मुष्टिहस्तश्च वक्षःस्थः करोऽन्यश्च प्रवर्तितः ।
तलसञ्चरपादश्च जनिता चार्युदाहृता ॥२५॥
पञ्चतालान्तरं पादं प्रसार्य [3]स्यन्दितां न्यसेत् ।
द्वितीयेन तु पादेन [4]तथापस्यन्दितामपि ॥२६॥
तलसञ्चरपादाभ्यां घूर्णमानोपसर्पणैः[5] ।
समोत्सरितमत्तल्ली व्यायामे समुदाहृता ॥२७॥
उभाभ्यामपि पादाभ्यां घूर्णमानोपसर्पणैः ।
उद्वेष्टितापविद्धैश्च हस्तैर्मत्तल्ल्युदाहृता ॥२८॥
एता भौम्यः स्मृताश्चार्यो [6] नियुद्धकरणाश्रया ।
[7]आकाशकीनां चारीणां संप्रवक्ष्यामि लक्षणम् ॥२९॥
कुञ्चितं पादमुत्क्षिप्य पुरतः संप्रसारयेत् ।
उत्क्षिप्य पातयेच्चैनमतिक्रान्ता तु सा स्मृता ॥३०॥
ऊरुभ्यां वलनं कृत्वा कुञ्चितं पादमुद्धरेत् ।
पार्श्वे [8]विनिक्षिपेच्चैनमपक्रान्ता तु सा स्मृता ॥३१॥
कुञ्चितं पादमुत्क्षिप्य जानु स्तनसमं न्यसेत् ।
उद्घट्टितेन पादेन पार्श्वक्रान्ता विधीयते ॥३२॥
कुञ्चितं पादमुत्क्षिप्य जानु स्तनसमं न्यसेत् ।
द्वितीयं [9]च क्रमः स्तब्ध ऊर्ध्वजानुः प्रकीर्तिता ॥३३॥

23-33 (B.X. 23-33 ; G. 23-33). 1 G यस्या , B. यस्या. 2 B.G. चार्युत्स्पन्दिता. 3 B.G. स्पन्दिता 4 B.G. तथापस्पन्दितामपि. 5 C. ०माना-पसर्पणैः. 6 C. नियुक्त०. 7. BG. आकाशिकीना, see note 7 in p. 156. 8 C. विनिक्षिपेच्चैवम्. 9 B. च क्रमस्तब्धम् , C. च क्रमात् स्तब्धम्.

कुञ्चितं पादमुत्क्षिप्य जानूर्ध्वं संप्रसारयेत् ।
पातयेच्चाग्रयोगेन सा सूची परिकीर्तिता ॥३४॥
पृष्ठतो ह्यञ्चितं कृत्वा पादमग्रतलेन तु ।
द्रुतं निपातयेद्भूमौ चारी नूपुरपादिका ॥३५॥
कुञ्चितं पादमुत्क्षिप्य पार्श्वात् पार्श्वन्तु दोलयेत् ।
पातयेदञ्चितं चैव दोलपादा प्रकीर्तिता ॥३६॥
कुञ्चितं पादमुत्क्षिप्य आक्षिप्य त्वञ्चितं न्यसेत् ।
जङ्घास्वस्तिकसंयुक्ता [1]चाक्षिप्ता नाम सा स्मृता ॥३७॥
स्वस्तिकस्याग्रतः पादः कुञ्चितश्च प्रसारितः ।
निपतेदञ्चिताविद्धमाविद्धा नाम सा स्मृता ॥३८॥
पादमाविद्धमावेष्ट्य समुत्प्लुत्य निपातयेत् ।
परिवृत्य द्वितीयं च सोद्वृत्ता चार्युदाहृता ॥३९॥
पृष्ठतो वलितं पादं शिरोघृष्टं प्रसारयेत् ।
सर्वतो मण्डलाविद्धं विद्युद्भ्रान्ता तु सा स्मृता ॥४०॥
पृष्ठप्रसारितः पादो वलिताभ्यन्तरीकृतः ।
पार्ष्णि प्रपतितश्चैव ह्यलाता [2]सा प्रकीर्तिता ॥४१॥
कुञ्चितं पादमुत्क्षिप्य त्र्यश्रमूरुं विवर्तयेत् ।
कटीजानुविवर्ताच्च भुजङ्गत्रासिता भवेत् ॥४२॥
अतिक्रान्तक्रमं कृत्वा चोत्प्लुत्य विनिपातयेत् ।
[3]जङ्घाञ्चिता परिक्षिप्ता सा ज्ञेया हरिणप्लुता ॥४३॥
नूपुरं चरणं कृत्वा पुरतः संप्रसारयेत् ।
[4]क्षिप्रमाविद्धकरणं दण्डपादा तु सा स्मृता ॥४४॥
अतिक्रान्तक्रमं कृत्वा त्रिकं तु परिवर्तयेत् ।
द्वितीयपादभ्रमणात्तलेन भ्रमरी स्मृता ॥४५॥

34-45 (B X. 34-45; G. 34-45). 1 C. उदक्षिप्ता. 2 G संप्रकीर्तिता. 3 G. जङ्घाञ्चितोपरिक्षिप्ता. 4 G. •माविद्धचरणं.

आकाशक्यः स्मृता ह्येता ललिताङ्गक्रियात्मिकाः ।
[1]धनुर्वज्रादिशस्त्राणां [2]प्रयोक्तव्यास्तु मोक्षणे ॥४६॥
[3]अग्रगौ समगौ वापि अनुगौ वापि योगतः ।
पादयोस्तु द्विजा हस्तौ कर्तव्यौ नाट्ययोक्तृभिः ॥४७॥
यत· पादस्ततो हस्तो यतो हस्तस्ततस्त्रिकम् ।
पादस्य निर्गमं कृत्वा तथोपाङ्गानि योजयेत् ॥४८॥
पादचार्यां यदा पादो धरणीमेव गच्छति ।
एवं [4]हस्तश्चरित्वा तु कटीदेशं समाश्रयेद् ॥४९॥
एताश्चार्यो मया प्रोक्ता ललिताङ्गक्रियात्मिकाः ।
स्थानान्यासां प्रवक्ष्यामि सर्वशस्त्रविमोक्षणे ॥५०॥
वैष्णवं समपादं च वैशाखं मण्डलं तथा ।
प्रत्यालीढं तथालीढं स्थानान्येतानि षण्णृणाम् ॥५१॥
द्वौ तालावर्धतालश्च पादयोरन्तरं भवेत् ।
तयोः [5]समुत्थितस्त्वेकस्त्र्यश्रः पक्षस्थितोऽपरः ॥५२॥
किंचिदञ्चितजङ्घं च सौष्ठवाङ्गपुरस्कृतम् ।
वैष्णवस्थानमेतद्धि विष्णुरत्राधिदैवतम् ॥५३॥
स्थानेनानेन कर्तव्यः संलापस्तु स्वभावजः ।
नानाकार्यान्तरोपेतैर्नृभिरुत्तममध्यमैः ॥५४॥
* चक्रस्य मोक्षणे चैव धारणे धनुषस्तथा ।
* [6]धैर्योदात्ताङ्गलीलासु तथा क्रोधे प्रयोजयेत् ॥५५॥
इदमेव विपर्यस्तं प्रणयकोप इष्यते ।
उपालम्भकृते चैव [7]प्रणयोद्वेगयोस्तथा ॥५६॥

46-56 (B. X. 46-56; G. 46-56). 1 B. धनुर्वज्रासि शस्त्राणा. 2 B. प्रयोक्तव्या विमोचणे, C प्रयोक्तव्या प्रयोक्तृभि॰. 3 B. अग्रगं पृष्ठगौ. 4 C हस्त॰. 5 C. समस्थित॰. 6 C. धैर्यदानाङ्ग॰. 7 C. प्रकर्षाधिबलस्तथा, G. प्रहर्षोद्वेगयोस्तथा.

शङ्कासूयोग्रताचिन्तामतिस्मृतिषु चैव हि ।
दैन्ये चपलतायां च [1]गर्वाभीष्टेषु शक्तिषु ॥५७॥
शृङ्गाराद्भुतबीभत्सवीरप्राधान्ययोजितम् ।
समपादे समौ पादौ तालमात्रान्तरस्थितौ ॥५८॥
स्वभावसौष्ठवोपेतौ ब्रह्मा चात्राधिदैवतम् ।
अनेन कार्यं स्थानेन [2]विप्रमङ्गलधारणम् ॥५९॥
रूपणं पक्षिणां चैव [3]वरं कौतुकमेव च ।
स्वस्थानां स्यन्दनस्थानां विमानस्थायिनामपि ॥६०॥
लिङ्गस्थानां व्रतस्थानां स्थानमेतत्तु कारयेत् ।
तालास्त्रयोऽर्धतालश्च पादयोरन्तरं भवेत् ॥६१॥
तालांस्त्रीनर्धतालं च निषण्णोरुं प्रकल्पयेत् ।
त्र्यश्रौ [4]पक्षस्थितौ चैव तत्र पादौ प्रयोजयेत् ॥६२॥
वैशाखस्थानमेतद्धि स्कन्दश्चात्राधिदैवतम् ।
स्थानेनानेन कर्तव्यमश्वानां वाहनं बुधैः ॥६३॥
व्यायामो निर्गमश्चैव स्थूलपक्षिनिरूपणम् ।
[5]शरासनसमुत्कर्षव्यायामकृतमेव च ॥६४॥
रेचकेषु च कर्तव्यमिदमेव प्रयोक्तृभिः ।
ऐन्द्रे तु मण्डले पादौ चतुस्तालान्तरस्थितौ ॥६५॥
त्र्यश्रौ पक्षस्थितौ चैव कटीजानू समौ तथा ।
धनुर्वज्रादिशस्त्राणि मण्डलेन प्रयोजयेत् ॥६६॥
[6]वाहनं कुञ्जराणां तु स्थूलपक्षिनिरूपणम् ।
अस्यैव दक्षिणं पादं पञ्चतालान् प्रसार्य तु ॥६७॥
आलीढं स्थानकं कुर्याद् रुद्रश्चास्याधिदैवतम् ।
अनेन कार्यं स्थानेन वीररौद्रकृतं तु यत् ॥६८॥

57-68 (B. X. 57-68 ; G. 57-68a) 1 G. गर्वाविक्देषु. 2 G. ०मङ्गलकारणम्. 3 G. वरकौतुकम्, B. वरं कौतुकम्. 4 C. वक्ष.स्थितौ. 5 C. शराणां च समुत्क्षेपं. 6 B. धनुर्वज्रादि.

उत्तरोत्तरसंजल्पो रोषामर्षकृतश्च यः।
मल्लानां चैव [1]संस्फेटः शत्रूणां च निरूपणम् ॥६९॥
तथाभिद्रवणं चैव शस्त्राणां चैव मोक्षणम्।
कुञ्चितं दक्षिणं कृत्वा वामपादं प्रसार्य च ॥७०॥
आलीढपरिवर्तस्तु प्रत्यालीढमिति स्मृतम्।
आलीढसहितं शस्त्रं प्रत्यालीढेन मोक्षयेत् ॥७१॥
नानाशस्त्रविमोक्षो हि कार्योऽनेन प्रयोक्तृभिः।
न्यायाश्चैवात्र विज्ञेयाश्चत्वारः शस्त्रमोक्षणे ॥७२॥
भारतः सात्वतश्चैव वार्षगण्योऽथ कैशिकः।
भारते तु कटिच्छेद्यं पादच्छेद्यं तु सात्वते ॥७३॥
वक्षसो वार्षगण्ये तु शिरश्छेद्यं तु कैशिके।
एभिः प्रयोक्तृभिर्न्यायैर्नानाचारीसमुत्थितैः ॥७४॥
प्रविचाराः प्रयोक्तव्या नानाशस्त्रविमोक्षणे।
[2]न्यायं स्थितैरङ्गहारैर्न्यायाच्चैव समुत्थितैः ॥७५॥
यस्माद्युद्धानि [3]नीयन्ते तस्मान्न्यायाः प्रवर्तिताः।
[4]वामहस्ते विनिक्षिप्य खेटकं दक्षिणेन च ॥७६॥
शस्त्रमादाय हस्तेन प्रविचारमथाचरेत्।
प्रसार्य च करौ सम्यक् पुनराक्षिप्य चैव हि ॥७७॥
खेटकं भ्रामयेत् पश्चात् पार्श्वात् पार्श्वमथापि च।
शिरःपरिगमश्चापि कार्यः शस्त्रेण योक्तृभिः ॥७८॥
[5]कपोलांसान्तरे वापि [6]शस्त्रस्योद्वर्तनं तथा।
पुनश्च खड्गहस्तेन ललितोद्वेष्टितेन च ॥७९॥
खेटकेन च कर्तव्यः शिरःपरिगमो बुधैः।
एवं विचारः कर्तव्यो भारते शस्त्रमोक्षणे ॥८०॥

69-80 (B X. 69-80, G 69b-80a) 1 G. सस्फोट.. 2 GB. न्याया०. 3 CGg. नीयन्ते, B.G वर्तन्ते 4 C. वामहस्तेन निक्षिप्य 5 B. कपोलस्यान्तरे. 6 G शस्त्रस्योद्वेष्टनं.

सात्वते च प्रवक्ष्यामि प्रविचारं यथाविधि ।
स एवं प्रविचारस्तु शस्त्रखेटकयोः स्मृत ॥८१॥
केवलं पृष्ठतः [1]शस्त्रं कर्तव्यं खलु सात्वते ।
गतिश्च वार्षगण्येऽपि सात्वतेन क्रमेण तु ॥८२॥
शस्त्रखेटकयोश्चापि भ्रमणं संविधीयते ।
[2]शिरः परिगमस्तद्वच्छस्त्रस्येह भवेत्तथा ॥८३॥
उरस्युद्वेष्टनं कार्यं [3]शस्त्रस्यांसेऽथवा पुनः ।
भारते प्रविचारो य कर्तव्यः स तु कैशिके ॥८४॥
विभ्रमय्य तथा शस्त्रं केवलं मूर्ध्नि पातयेत् ।
प्रविचाराः प्रयोक्तव्या ह्येवमेतेऽङ्गलीलया ॥८५॥
[4]धनुर्वज्रादिशस्त्राणां प्रयोक्तव्या विमोक्षणे ।
न भेद्यं नापि च छेद्यं न चापि रुधिरस्रुतिः ॥८६॥
रङ्गे प्रहरणे कार्यं न चापि व्यक्तपातनम् ।
संज्ञामात्रेण कर्तव्यं शस्त्राणां मोक्षणं बुधैः ॥८७॥
अथवाभिनयोपेतं कुर्याच्छेद्यं विधानतः ।
अङ्गसौष्ठवसम्पन्नैरङ्गहारैर्विभूषितम् ॥८८॥
व्यायामं कारयेत् सम्यग् लयतालसमन्वितम् ।
[5]सौष्ठवे हि प्रयत्नस्तु कार्यो [6]व्यायामसेविभिः' ॥८९॥
न हि सौष्ठवहीनाङ्गः शोभते नाट्यनृत्तयोः ।
अचञ्चलमकुब्जं [8]च सन्नगात्रं तथैव च ॥९०॥
नात्युच्चं चलपादं च [9]सौष्ठवाङ्ग प्रयोजयेत् ।
कटी कर्णसमा यत्र [10]कूर्परांसशिरस्तथा ॥९१॥

80-91 (B.X 81-92; G. 80b-92a). 1 B.d. खड्गं, C. शक्तं. 2 G.C. शिरः परिगमादलिसस्य (G °स्तत). 3 C. शस्त्रस्याङ्गेन. 4 B. धनुर्वज्रान्नि°. 5 C. सौष्ठवेन तु यत्नस्तु. 6 B. व्यायामवेदिभिः. 7 B G. add a couplet. 8 C.G. चासन्नगात्रं. 9 G. सौष्ठवे चैव योजयेत्. 10 C. कूर्परोंऽप्युस्थितन्तथा.

समुन्नतमुरश्चैव सौष्ठवं नाम तद् भवेत्[1] ।
कटीनाभिचरौ हस्तौ वक्षश्चैव समुन्नतम् ॥९२॥
वैष्णवं स्थानमित्यङ्गं चतुरश्रमुदाहृतम् ।
परिमार्जनमादानं सन्धानं मोक्षणं भवेत् ॥९३॥
धनुषस्तु प्रयोक्तव्यं करणं तु चतुर्विधम् ।
[2]प्रमार्जनं परामर्श आदानं ग्रहणक्रिया ॥९४॥
सन्धानं शरविन्यासो विक्षेपो मोक्षणं तथा ।
तैलाभ्यक्तेन गात्रेण यवागूमृदितेन च ॥९५॥
व्यायामं कारयेद्धीमान् भित्तावाकाशके तथा ।
योग्यायां मातृका भित्तिस्तस्माद्भित्तिं समाश्रयेत् ॥९६॥
भित्तौ [3]प्रसारिताङ्गं तु व्यायामं [4]कारयेन्नरम् ।
बलार्थं च निषेवेत नस्यं [5]वस्तिविधिं तथा ॥९७॥
[6]स्निग्धान्यन्नानि च तथा रसकं पानकं तथा ।
[7]आहारेऽधिष्ठिताः प्राणाः प्राणे योग्या प्रतिष्ठिताः ॥९८॥
तस्माद्योग्याप्रसिद्ध्यर्थमाहारे यत्नवान् भवेत् ।
अशुद्धकायं भक्तान्तमतीवक्षुत्पिपासितम् ॥९९॥
अतिपीतं तथा भुक्तं व्यायामं नैव कारयेत् ।
[8]अचेलैर्मधुरैर्गात्रैश्चतुरश्रेण वक्षसा ।
व्यायामं कारयेद्धीमान् नरमङ्गक्रियार्थिनम्[9] ॥१००॥
एवं व्यायामसंयोगे कार्यश्चारीकृतो विधिः ।
अत ऊर्ध्वं प्रवक्ष्यामि मण्डलानां विकल्पनम् । १०१॥

इति भारतीये नाट्यशास्त्रे चारीविधानं नाम
एकादशोऽध्यायः ।

92-101 (B. X. 93-103; G 91b-103). 1 B G. add a couplet 2 G.C. समार्जनं. 3 C. प्रसारिताङ्गस्तु. 4 C. कारयेद्बुधः. 5 C. च त्रिविधं. 6 C om. this hem. 7 B G. आहाराधिष्ठिता. 8 MSS. अचलैः. 9 C. अङ्गक्रियात्मकम्.

# द्वादशोऽध्यायः

एताश्चार्यो मया प्रोक्ता यथायच्छलमोक्षणे ।
चारीसंयोगजानीह मण्डलानि निबोधत ॥१॥
अतिक्रान्तं विचित्रं च तथा ललितसञ्चरम् ।
सूचीविद्धं दण्डपाद विहृतालातके यथा ॥२॥
[1]वामविद्धं सललितं क्रान्तश्चाकाशगानि च[2] ।
[1]भ्रमरास्कन्दिते स्यातामावर्तं च यथाऽपरम् ॥३॥
समोत्सरितमप्याहुरेडकाक्रीडितं तथा ।
अड्डितं शकटास्यं च तथाऽध्यर्धकमेव च ॥४॥
पिष्टकुट्टं च विज्ञेयं तथा चापगतं पुनः ।
भूमिका मण्डला ह्येते लक्षणं च निबोधत[2] ॥५॥

आद्य[1] पादं तु जनित कृत्वोद्वाहितमाचरेत् ।
अलातं वामकं चैव पार्श्वक्रान्तं च दक्षिणम् ॥६॥
सूचीं वामपदं दद्यादपक्रान्तं च दक्षिणम्[1] ।
सूचीं वामं पुनश्चैव त्रिकं च परिवर्तयेत् ॥७॥
तथा [2]दक्षिणमुद्धृतमलातं चैव वामकम् ।
परिच्छिन्नं तु कर्तव्यं बाह्यभ्रमरकेण हि ॥८॥
अतिक्रान्तं पुनर्वामं दण्डपादश्च दक्षिणम् ।
विज्ञेयमेतद् व्यायामे त्वतिक्रान्तन्तु मण्डलम् ॥९॥

1-3 (B.XI, 1-3, G. 1 3) 1 C. वामबन्धं. 2 B adds here मण्डलानि द्विजश्रेष्ठा भूमिगानि निबोधत.

3-5 (B.XI. 4-7, G. 3-5) 1 Mss. sometimes wrongly आस्पन्दित, cf note 1 on trans. of XI. 7-8. 2 B. reads 5b differently.

6 9 (B.XI. 7, 8b-11a, G. 6-9) 1 C. om. 7a, 9b. 2 C. दक्षिणमुद्धृत्य.

आद्यं तु जनितं कृत्वा तेनैव च निकुट्टनम् ।
आस्कन्दितं तु वामेन पार्श्वक्रान्तं च दक्षिणम्[1] ॥१०॥
भुजङ्गत्रासितं वाममतिक्रान्तं च दक्षिणम् ।
उद्वृत्तं दक्षिणं चैव अलातं चैव वामकम् ॥११॥
पार्श्वक्रान्तं पुनः सव्यं सूचीवामक्रमं यथा ।
विक्षेपो दक्षिणस्य स्यादपक्रान्तं च वामकम् ॥१२॥
बाह्यभ्रमरकं चैव विक्षेपं चैव योजयेत् ।
विज्ञेयमेतद्व्यायामे विचित्रं नाम मण्डलम् ॥१३॥

[1]कृत्वोर्ध्वजानुचरणमाद्यं सूचीं प्रयोजयेत् ।
अपक्रान्तः पुनर्वाम आद्यः पार्श्वगतो भवेत् ॥१४॥
वामं सूचीं पुनर्दद्यात् त्रिकञ्च परिवर्तयेत् ।
पार्श्वक्रान्तं [2]पुनश्चाद्यमतिक्रान्तश्च वामकम् ॥१५॥
[3]सूचीमाद्यं पुनः कृत्वा ह्यपक्रान्तश्च वामकम् ।
पार्श्वक्रान्तं [2]पुनश्चाद्यमतिक्रान्तं च वामकम् ॥१६॥
परिच्छिन्नं च कर्तव्यं बाह्यभ्रमणकेण हि ।
एष चारीप्रयोगस्तु कार्यो ललितसञ्चरे ॥१७॥

सूचीं वामपदं दद्यात् त्रिकं च परिवर्तयेत् ।
पार्श्वक्रान्तः पुनश्चान्यो वामोऽतिक्रान्त एव च ॥१८॥
सूचीमाद्यं पुनर्दद्यादतिक्रान्तश्च वामकम् ।
पार्श्वक्रान्तं पुनश्चाद्य सूचीविद्धे तु मण्डले ॥१९॥

आद्यस्तु जनितो भूत्वा स च दण्डक्रमो भवेत् ।
वामसूचीं पुनर्दद्यात् त्रिकञ्च परिवर्तयेत् ॥२०॥

10-13 (B XI. 11b-12a. 13a-15 ; G. 10-13). 1 B. adds here a hem and C. om. 10 and 11a. 14-17 (B XI. 16-17, 19 ; G 14-16, 18) 1 C. कृत्वोर्ध्ववामचरण॰ 2 C. सूचीवामक्रमं. 3 C. पुनश्चान्यो. 18-19 (B.XI. 20-21 ; G. 19-20). 20 (B.XI. 22 ; G. 21).

उद्वृत्तो दक्षिणश्च स्यादलातश्चैव वामकः ।
पार्श्वक्रान्तः पुनश्चाद्यः भुजङ्गत्रासितस्तथा ॥२१॥
अतिक्रान्तः पुनर्वामो दण्डपादश्च दक्षिणः ।
वामसूची त्रिकावर्तो दण्डपादे तु मण्डले ॥२२॥

आद्यं तु जनितं कृत्वा तेनैव च निकुट्टनम् ।
आस्कन्दितं च वामेन उद्वृत्तं दक्षिणेन च ॥२३॥
अलातं वामकं पादं सूचीं दद्यात्तु दक्षिणम् ।
पार्श्वक्रातः पुनर्वाम आक्षितो दक्षिणस्तथा ॥२४॥
[1]परिवृत्य त्रिकं चैव दण्डपादं प्रसारयेत् ।
सूचीं वामपदं दद्यात् त्रिकं तु परिवर्तयेत् ॥२५॥
भुजङ्गत्रासितश्चाद्यो वामोऽतिक्रान्त एव च ।
एष चारीप्रयोगस्तु विहृते मण्डले भवेत् ॥२६॥

सूचीमाद्यक्रमं कृत्वा चाऽपक्रान्तं च वामकम् ।
पार्श्वक्रान्तस्ततश्चाद्योऽप्यलातश्चैव वामकः ॥२७॥
भ्रान्त्वा चारीभिरेताभिः पर्यायेणाथ मण्डलम् ।
[1]षट्संख्यं पञ्चसंख्यं वा ललितैः पादविक्रमैः[2] ॥२८॥
अपक्रान्तः पुनश्चाद्यो वामेऽतिक्रान्त एव च ।
पादभ्रमरकश्च स्यादलाते खलु मण्डले ॥२९॥

सूचीमाद्यक्रमं कृत्वा ह्यपक्रान्तं च वामकम् ।
आद्यो दण्डक्रमश्चैव सूचीपादस्तु वामकः ॥३०॥
कार्यस्त्रिकविवर्तश्च पार्श्वक्रान्तश्च दक्षिणः ।
आक्षिप्तं वामकं कुर्याद्दण्डपादं च दक्षिणम् ॥३१॥

21-22 (B.XI- 23-24; G. 22-23) 23-26 (B.XI. 25-28 ; G. 24-27). 1 B. समावर्त्य. 27-29 (B XI. 29-30 ; 31b-32a ; G. 28-30). 1 B. षट्संख्यं सप्तसंख्यं वा. 2 B. adds a hem. 30-31 (B XI. 32b-34a , G. 31-32).

ऊरूद्वृत्तं च तेनैव कर्तव्यं दक्षिणेन तु ।
सूचीवामक्रमश्चैव त्रिकं च परिवर्तयेत् ॥३२॥
अलातश्च भवेद्वामः पार्श्वक्रान्तश्च दक्षिणः ।
अतिक्रान्तः पुनर्वामो वामविद्धे तु मण्डले ॥३३॥

सूचीमाद्यक्रमं कृत्वा अपक्रान्तं च वामकम् ।
पार्श्वक्रान्त पुनश्चाद्यो भुजङ्गत्रासितस्तथा ॥३४॥
अतिक्रान्तः पुनर्वाम आक्षिप्तो दक्षिणस्तथा ।
अतिक्रान्तः पुनर्वाम ऊरूद्वृत्तस्तथैव च[1] ॥३५॥
अलातश्च पुनर्वाम पार्श्वक्रान्तश्च दक्षिणः ।
सूचीवामं पुनर्दद्यादपक्रान्तश्च दक्षिणः[2] ॥३६॥
अतिक्रान्त पुनर्वामः [3]आक्षिप्तो दक्षिणे तथा ।
एष पादप्रसारस्तु ललिते मण्डले भवेत् ॥३७॥

सूचीमाद्यक्रमं कृत्वा ह्यपक्रान्तश्च वामकम् ।
पार्श्वक्रान्तं पुनश्चान्यं वामं पार्श्वक्रमं तथा ॥३८॥
भ्रान्त्वा चारीभिरेताभिः पर्यायेणाथ मण्डलम् ।
वामसूचीं ततो दद्यादपक्रान्तं च दक्षिणम् ॥३९॥
स्वभावगमने ह्येतन्मण्डलं संविधीयते ।
क्रान्तमेतत्तु विज्ञेयं नामतो नाट्ययोक्तृभिः ॥४०॥
एतान्याकाशगानीह ज्ञेयान्येवं दशैव तु ।

अतः परं प्रवक्ष्यामि भौमानामिह लक्षणम् ॥४१॥
आद्यन्तु जनित कार्यो वामश्चास्कन्दितो भवेत् ।
शकटास्यः पुनश्चाद्यो वामश्चापि प्रसारितः ॥४२॥

32-33 (B.XI. 34b-36a, G. 33-34). 34-37 (B.XI. 36b-37a; 38-40a; G. 35-37) 1 G. om. this hem. 2 G. om. this hem. 3 C कार्यो ललितसंज्ञक. 38-40 (B.XI. 40b-43a; G. 38-40). 41-42 (B.XI. 43b-45a; G. 41-42)

आद्यो भ्रमरकः कार्यस्त्रिकश्च परिवर्तयेत् ।
आस्कन्दितः पुनर्वामः शकटास्यश्च दक्षिणः ॥४३॥
वामः पृष्ठापसर्पी च दद्याद् भ्रमरकं तथा ।
स एवास्कन्दितः कार्यस्त्वेतद् भ्रमरमण्डलम् ॥४४॥

आद्यो भ्रमरकः कार्यो वामश्चैवाड्डितो भवेत् ।
कार्यस्त्रिकविवर्तश्च शकटास्यश्च दक्षिणः ॥४५॥
ऊरूद्वृत्तः स एव स्याद् वामश्चैवापसर्पितः ।
कार्यस्त्रिकविवर्तश्च दक्षिणः स्कन्दितो भवेत् ॥४६॥
शकटास्यो भवेद्वामस्तदेवास्फोटनं भवेत् ।
एतदास्कन्दितं नाम व्यायामे युद्धमण्डलम्[1] ॥४७॥

आद्यन्तु जनितं कृत्वा वामश्चैव निकुट्टनम् ।
शकटास्यः पुनश्चाद्य ऊरूद्वृत्तः स एव च ॥४८॥
पृष्ठापसर्पी वामश्च स च चापगतिर्भवेत ।
आस्कन्दितः पुनः [1]सव्यः शकटास्यश्च वामक ॥४९॥
आद्यो भ्रमरकश्चैव त्रिकश्च परिवर्तयेत् ।
पृष्ठापसर्पी वामश्चेत्यावर्ते मण्डले भवेत् ॥५०॥

समपादं बुधः कृत्वा स्थानं हस्तौ प्रसारयेत् ।
निरन्तरावूर्ध्वतलावावेष्ट्योद्वेष्ट्य चैव हि ॥५१॥
कटीतटे विनिक्षिप्य आद्यमावर्तयेत् क्रमम् ।
तथा क्रमं पुनर्वाममावर्तेन प्रसारयेत् ॥५२॥
चार्या चानया भ्रान्त्वा तु पर्यायेणाथ मण्डलम् ।
समोत्सारितमेतत्तु कार्यं व्यायाममण्डलम् ॥५३॥

43-44 ( B.XI. 44b-47a ; G. 43-44 ) 45-47 ( B.XI. 47b-50a ; G. 45-47). 1 C. om. 45b-47a. 48-50 (B.XI, 50b-53a ; G. 48-50). 1 C. सौव्यं 51-53 ( B.XI.53a-56a ; G. 51-53).

पादैस्तु भूमिसंयुक्तैः सूचीविद्धैस्तथैव च ।
एडकाक्रीडितश्चैव तूर्णैस्त्रिकविवर्तितैः ॥५४॥
सूचीविद्धापविद्धैश्च क्रमेणावृत्य मण्डलम् ।
एडकाक्रीडितं विद्यात् खण्डमण्डलसंज्ञितम् ॥५५॥

सव्यमुद्घट्टितं कृत्वा तेनैवावर्तमाचरेत् ।
तेनैवास्कन्दितः कार्यः शकटास्यश्च वामकः ॥५६॥
आद्यः पृष्ठापसर्पी च स च चापगतिर्भवेत् ।
अड्डितश्च पुनर्वाम आद्यश्चैवापसर्पितः ॥५७॥
वामो भ्रमरकः कार्य आद्यश्चास्कन्दितो भवेत् ।
तेनैवास्फोटनं कुर्यादेतदड्डितमण्डलम् ॥५८॥

आद्यं तु जनितं कृत्वा तेनैव च निकुट्टनम् ।
स एव शकटास्यश्च वामश्चास्कन्दितो भवेत् ॥५९॥
पादैश्च शकटास्यस्थैः पर्यायेणाथ मण्डलम् ।
विज्ञेयं शकटास्यश्च तु व्यायामे युद्धमण्डलम् ॥६०॥

आद्यस्तु जनितो भूत्वा स एवास्कन्दितो भवेत् ।
अपसर्पी पुनर्वाम शकटास्यश्च दक्षिणः ॥६१॥
भ्रान्त्वा चारीभिरेताभिः पर्यायेणाथ मण्डलम् ।
अध्यर्धमेतद्विज्ञेयं नियुद्धे चारिमण्डलम् ॥६२॥

सूचीमाद्यक्रमं कृत्वा ह्यपक्रान्तश्च वामकम् ।
भुजङ्गत्रासितश्चाद्य एष एव तु वामकः ॥६३॥
भुजङ्गत्रासितैर्भ्रान्त्वा चारैरपि च मण्डलम् ।
पिष्टकुट्टन्तु विज्ञेयं नियुद्धे चारिमण्डलम् ॥६४॥

54-55 (B XI. 56b-58a ; G. 54-55) 56-58 (B XI. 58b-61a ; G. 56-58) 59-60 (B.XI. 61b-63a ; G. 59-60). 61-62 (B.XI. 63b-65a ; G. 61-62). 63-64 (B.XI 65b-67a ,63-64 ).

सर्वैश्चापगतैः पादैः परिभ्राम्य तु मण्डलम् ।
एतच्चापगतं विद्यान्नियुद्धे चारिमण्डलम् ॥६५॥

नानाचारीसमुत्थानि मण्डलानि समासतः ।
उक्तान्यतः परं चैव समचारीं नियोजयेत् ॥६६॥
समचारीप्रयोगो यस्तत्समं नाम मण्डलम् ।
आचार्यबुद्ध्या तानीह कर्तव्यानि प्रयोक्तृभिः ॥६७॥
एतानि खण्डानि समण्डलानि
युद्धे नियुद्धे च परिक्रमे च ।
लीलाङ्गमाधुर्यपुरस्कृतानि
कार्याणि वाद्यानुगतानि तज्ज्ञैः ॥६८॥

इति भारतीये नाट्यशास्त्रे मण्डलविधानं नाम
द्वादशोऽध्यायः ।

65 (B.XI. 67b-68a ; G. 65). 66 (B XI. 68b-69a ; G. 66). 67 (B.XI. 69b-70a ; G. 67). 68 (B.XI. 70b-71a ; G. 68).

# त्रयोदशोऽध्यायः

एवं व्यायामसंयोगे कार्यं मण्डलकल्पनम् ।
अतः परं प्रवक्ष्यामि गतीस्तु प्रकृतिस्थिताः ॥१॥
तत्रोपवहनं कृत्वा भाण्डवाद्यपुरस्कृतम् ।
[1]यथामार्गकलोपेतं प्रकृतीनां [2]प्रवेशनम् ॥२॥
ध्रुवायां संप्रयुक्तायां पटे चैवापकर्षिते ।
कार्यः प्रवेशः पात्राणां नानार्थरससम्भवः ॥३॥
स्थानं तु वैष्णवं कृत्वा ह्युत्तमे मध्यमे यथा[3] ।
समुन्नतं समं चैव चतुरस्रमुरस्तथा ॥४॥
बाहुशीर्षे प्रसन्ने च नात्युत्क्षिप्ते च कारयेत् ।
ग्रीवाप्रदेशः कर्तव्यो मयूराञ्चितमस्तकः ॥५॥
कर्णादष्टाङ्गुलिस्थे च बाहुशीर्षे प्रयोजयेत् ।
उरसश्चापि चिबुकं चतुरङ्गुलसंस्थितम् ॥६॥
हस्तौ तथैव कर्तव्यौ कटीनाभितटस्थितौ ।
दक्षिणो नाभिसंस्थस्तु वामः कटितटस्थितः ॥७॥
पादयोरन्तरं कार्यं द्वौ तालावर्धमेव च ।
पादोत्क्षेपस्तु कर्तव्यः स्वप्रमाणविनिर्मितः ॥८॥
चतुस्तालो द्वितालश्च एकतालस्तथैव च ।
चतुस्तालस्तु देवानां पार्थिवानां तथैव च ॥९॥
द्वितालश्चैव मध्यानां तालः स्त्रीनीचलिङ्गिनाम्[4] ।
चतुष्कलोऽथ द्विकलस्तथा ह्येककलः पुनः ॥१०॥

1-10 (B XII. 1-10). 1 Ag. (v. l.) यत्नोपेतं, B.G. रसोपेतं. 2 B. प्रवेशने. 3 C. यथा. 4 G. °सङ्गिनाम्.

चतुष्कलो ह्युत्तमानां मध्यानां द्विकलो भवेत् ।
तथा चैककलः पातो नीचानां संप्रकीर्तितः ॥११॥
स्थितं मध्यं द्रुतं चैव समवेक्ष्य लयत्रयम् ।
यथाप्रकृति नाट्यज्ञो गतिमेवं प्रयोजयेत् ॥१२॥
धैर्योपपन्ना गतिरुत्तमानां
मध्या गतिर्मध्यमसंमतानाम् ।
द्रुता गतिश्च प्रचुराधमानां
लयत्रयं सत्त्ववशेन योज्यम् ॥१३॥

एष एव भुवि ज्ञेयः कलातालयये विधिः ।
पुनर्गतिप्रचारस्य प्रयोगं शृणुतानघाः ॥१४॥
स्वभावे तूत्तमगतौ कार्यं [1]जानु कटीसमम् ।
युद्धचारीप्रयोगेषु [2]पुनः स्तनसमं भवेत् ॥१५॥
पार्श्वक्रान्तैः सललितैः पादैर्बाह्यान्वितैरथ ।
रङ्गकोणोन्मुखो गच्छेत् सम्यक् पञ्चपदानि तु ॥१६॥
वामवेधं ततः कुर्याद्विक्षेपं दक्षिणेन तु ।
परिवृत्य द्वितीयं तु गच्छेत् कोणं ततः परम् ॥१७॥
तत्रापि वामवेधस्तु विक्षेपो दक्षिणेन च ।
ततो भाण्डोन्मुखो गच्छेत् तान्येव तु पदानि च ॥१८॥
एवं गतागतैः कृत्वा पदानामेकविंशतिम् ।
वामवेधं ततः कुर्यात् विक्षेपं दक्षिणस्य च ॥१९॥
रङ्गे विकृष्टे भरतेन कार्यो
गतागतैः पादगतिप्रचारः ।
[3]त्र्यस्रस्त्रिकोणे चतुरस्ररङ्गे
गतिप्रचारश्चतुरस्र एव ॥२०॥

11-20 (B XII. 11-20; G. 11-20). 1 G. जानुकटीसमम्. 2 C. जानु स्तनसमं. 3 G. त्र्यस्रे त्रिकोणे.

यः समैः सहितो गच्छेत्तत्र कार्यो लयाश्रयः ।
चतुष्कलोऽथ द्विकल [अथ]वैककलः पुनः ॥२१॥
अथ मध्यमनीचैस्तु गच्छेद्यः परिवारितः ।
[1]चतुष्कलमथार्धं च तथा चैककलं पुनः ॥२२॥
[2]देवदानवयक्षाणां नृपपन्नगरक्षसाम् ।
चतुस्तालप्रमाणेन कर्तव्याथ गतिर्बुधैः ॥२३॥
दिवौकसां तु [3]शेषाणां मध्यमा गतिरिष्यते ।
तत्रापि [4]चोद्धता ये तु तेषां देवैः समा गतिः ॥२४॥

ऋषय ऊचुः—

यदा मनुष्या राजानस्तेषां देवगतिः कथम् ।
अत्रोच्यते कथं नैषा गती राज्ञां भविष्यति ॥२५॥
इह प्रकृतयो दिव्या तथा च दिव्यमानुषी ।
मानुषी चेति विज्ञेया नाट्यवृत्तक्रियां प्रति ॥२६॥
देवा हि प्रकृतिर्दिव्या राजानो दिव्यमानुषी ।
या त्वन्या लोकविदिता मानुषी सा प्रकीर्तिता ॥२७॥
[1]देवांशजास्तु राजानो वेदाध्यात्मसु कीर्तिताः ।
एवं देवानुकरणे दोषो ह्यत्र न विद्यते ॥२८॥
अयं विधिस्तु कर्तव्यः स्वच्छन्दगमनं प्रति ।
संभ्रमोत्पातरोषेषु प्रमाणं न विधीयते ॥२९॥
*सर्वासां प्रकृतीनां तु अवस्थान्तरसंश्रया ।
*उत्तमाधममध्यानां गतिः कार्या प्रयोक्तृभिः ॥३०॥
चतुर्द्वैकलं वा स्यात् तथार्धकलमेव च ।
अवस्थान्तरमासाद्य कुर्याद् गतिविचेष्टितम् ॥३१॥

21-24 (B.XII. 21-24; G. 21-24). 1 Bd. °मर्धं. 2 BG. देवदानव. 3 BC. सर्वेषा, Bp शेषाणा. 4 C. चोर्ध्वगा.

25-28 (B.XII. 25-28; G. 25-28) 1 C. देवात्वाजास्तु.

29-31 (B XII. 29-33; G. 29-33))

ज्येष्ठे [1]चतुष्कलं यत्र [2]द्विकलं मध्यमे ततः ।
द्विकलं चोत्तमे यत्र मध्ये त्वेककलं भवेत्[3] ॥३२॥
कलिकं मध्यमे यत्र नीचेष्वर्धकलं भवेत् ।[4]
एवमर्धार्धहानिं तु [5]कलानां संप्रयोजयेत् ॥३३॥
उत्तमानां गतिर्या तु न तां मध्येषु योजयेत् ।
मध्यमानां गतिर्या तु न तां नीचेषु योजयेत् ॥३४॥
ज्वरार्ते च क्षुधार्ते च तपःश्रान्ते भयान्विते ।
[1]विस्मये चावहित्थे च तथौत्सुक्यसमन्विते ॥३५॥
शृङ्गारे चैव शोके च स्वच्छन्दगमने तथा ।
[2]गतिः स्थितलया कार्याधिकलान्तरपातिता[2] ॥३६॥
पुनश्चिन्तान्विते चैव गतिः कार्या चतुष्कला[1] ।
अस्वस्थे कामिते चैव भये वित्रासिते तथा ॥३७॥
आवेगे चैव हर्षे च कार्ये यच्च त्वरान्वितम् ।
अनिष्टश्रवणे चैव [2]क्षेपे चाद्भुतदर्शने ॥३८॥
अपि चात्ययिके कार्ये [3]तथैव दुःखमार्गणे ।
अपराद्धानुसरणे श्वापदानुगतौ तथा ॥३९॥
एतेष्वेवं गतिं प्राज्ञो [1]द्विकलां संप्रयोजयेत् ।
गतिः शृङ्गारिणी कार्या स्वस्थकामितसंभवा ॥४०॥
दूतीदर्शितमार्गस्तु प्रविशेद्रङ्गमण्डलम् ।
सूचया चाप्यभिनयं कुर्यादर्थसमाश्रयम् ॥४१॥

32-33 (B. XII. 29-33 ; G. 29-33). 1 G. चतुष्कला. 2 G. द्विकला. 3 G. read this hem. as यच्चोत्तमस्य द्विकला मध्यमस्यैककला तथा. 4 G. this hem. as मध्यमस्यैककला यत्र नीचस्यार्धकला ततः. 5 B. जडानां. 34 ( B XII. 39b-40a ; G. 34 ). 35-36 (B.XII. 34-35a ; G. 35-36). 1 G. विद्रुते. 2 G. om. his hem. 37-40 (B.XII. 36b-39a ; G. 37-29). 1 G. om. 37a. 2 C. क्षेपेष्वद्भुत॰. 3 B.C. दुःखिते. 40-41 (B XII. 40b-44 ; G 40b-44a). 1 B. त्रिकलां.

हृद्यैर्गन्धैस्तथा वस्त्रैरलङ्कारैश्च भूषितः ।
नानापुष्पसुगन्धाभिर्मालाभिः समलंकृतः ॥४२॥
गच्छेत् सललितैः पादैरतिक्रान्तैः स्थितैस्तथा ।
तथा सौष्ठवसंयुक्तैर्लयतालसमन्वितैः ॥४३॥
पादयोरनुगौ हस्तौ नित्यं कार्यौ प्रयोक्तृभिः ।
उत्क्षिप्य [1]सह पादेन [2]पादयोश्च विपर्यय [3] ॥४४॥
प्रच्छन्नकामिते चैव गतिं भूयो निबोधत ।
विसर्जितजनस्तत्र तथा दूतीसहायवान् ॥४५॥
निर्वाणदीपो नात्यर्थं भूषणैश्च विभूषितः ।
वेलासदृशवस्त्रश्च सह दूत्या शनैस्तथा ॥४६॥
व्रजेत् प्रच्छन्नकामैस्तु पादैर्निःशब्दमन्दगैः ।
[1]शब्दशंक्युत्सुकश्च स्यादवलोकनतत्परः ॥४७॥
वेपमानशरीरश्च शङ्कितः प्रस्खलन् मुहुः ।
रसे रौद्रे तु वक्ष्यामि दैत्यरक्षोगणान् प्रति ॥४८॥
एक एव रसस्तेषां स्थायी रौद्रो द्विजोत्तमाः ।
नैपथ्यरौद्रो विज्ञेयस्त्वङ्गरौद्रस्तथैव च ॥४९॥
तथा स्वभावजश्चैव त्रिधा रौद्रः प्रकीर्तितः ।
रुधिरक्लिन्नदेहो यो रुधिरार्द्रमुखस्तथा ॥५०॥
[1]तथा पिशितहस्तश्च रौद्रो नैपथ्यजस्तु सः ।
बहुबाहुर्बहुमुखो नानाप्रहरणाकुलः ॥५१॥
स्थूलकायस्तथा प्रांशुरङ्गरौद्रः प्रकीर्तितः ।
रक्ताक्षः पिङ्गकेशश्च असितो विकृतस्वरः ॥५२॥

42-44 (B.XII. 40b-44; G. 40b-49a) 1 B. हस्तं पातेन; 2 C. पतनेन; 3 B. विपर्यात्. G.om. 44b. 45-48. (B.XII. 45-48a; G. 44b-47). 1 C. शब्दशवत्यत्सुकश्च. 48-52 (B.XII. 48b-52; G. 48-52). 1 C. तथापि शिरहस्तश्च.

[1]रूक्षो निर्भत्सनपरो रौद्रः सोऽथ सभावजः ।
चतुस्तालान्तरोत्क्षिप्तैः पादैश्चान्तरपातितैः[2] ॥५३॥
गतिरेवं प्रकर्तव्या तेषां ये चापि तद्विधाः ।
अहृद्या प्र मही यत्र श्मशानरणकश्मला ॥५४॥
गतिं तत्र प्रयुञ्जीत बीभत्साभिनयं प्रति ।
क्वचिदासन्नपतितैः विकृष्टपतितैः क्वचित ॥५५॥
पङ्काक्रीडितैः पादैरुपर्युपरिपातितैः ।
तेषामेवानुगैर्हस्तैर्वीभत्से गतिरिष्यते ॥५६॥
अथ वीरे प्रकर्तव्या पादविक्षेपसंयुता ।
[1]द्रुता प्रहरणाविद्धा नानाचारीसमाकुला ॥५७॥
[1]पार्श्वक्रान्तैस्तथाविद्धैः सूचीविद्धैस्तथैव च ।
[2]कलाकालगतैः पादैरावेगे योजयेद् गतिम् ॥५८॥
उत्तमानामयं प्रायः प्रोक्तो गतिपरिक्रमः ।
मध्यानामधमानां च गतिं वक्ष्याम्यहं पुनः ॥५९॥
विस्मये चैव हर्षे च [1]विक्षिप्तपदविक्रमा ।
आसाद्य तु रसं हास्यमेनाश्चान्याश्च योजयेत् ॥६०॥
पुनश्च करुणे कार्या गतिः स्थिरपदैरथ ।
वाष्पाम्बुरुद्धनयनः सन्नगात्रस्तथैव च ॥६१॥
उत्क्षिप्तपातितकरस्तथा सस्वनरोदनः ।
[1]गच्छेत्तथास्थविक्रया [2]प्रत्यप्राहितसंश्रये ॥६२॥

53-54 (B.XII. 53-55a ; G. 52-53). 1 C. रूक्षे. 2 B. °रत्नन्तरेपातितै° 54-56 (B.XII. 55-57a ; G. 54-55). 57 (B.XII. 57b-58a, p. 145 ; G. 56) 1 G. द्रुतप्रचरणाविद्धा. B °प्रचाराधिष्ठाना. 58 (B XII. 57b 58a ; G. 57). 1 G.B. पार्श्वक्रान्तैः द्रुताविद्धैः 2 G. कालाकालागतैः. 59-60 (B.XII 58b-60a ; G 58-59). 1 C. विक्षिप्त. 61-63 (B.XII. 60b-62a ; G. 60-61a). 1 C. गच्छेत्तथाविद्धकायः. 2 C. G. प्रलम्बगतिसंश्रये. Gp. प्रत्यग्रहतसंश्रये.

एषा स्त्रीणां प्रयोक्तव्या नीचसत्त्वे तथैव च ।
उत्तमानां तु कर्तव्या सधैर्यं चाप्यसंगता ॥६३॥
निश्वासैरायतोत्कृष्टैस्तथैवोर्ध्वनिरीक्षितैः ।
न तत्र सौष्ठवं कार्यं न प्रमाणं तथाविधम् ॥६४॥
मध्यानामपि सत्त्वाङ्गैर्गतिर्योज्या विधानतः[1] ।
उत्पातगतोत्साहः शोकव्यामूढचेतनः ।
नात्युत्क्षिप्तैः पदैर्गच्छेद् इष्टबन्धुनिपातने ॥६५॥
गाढप्रहारे कार्या च [2]शिथिलांसभुजाश्रया ।
विघूर्णितशरीरा च गतिर्घूर्णपदैरथ ॥६६॥
शीतेन चाभिभूतस्य वर्षेणाभिहतस्य च ।
गतिः प्रयोक्तृभिः कार्या स्त्रीनीचप्रकृतावथ ॥६७॥
पिण्डीकृत्य तु गात्राणि तेषां चैव प्रकम्पनम् ।
करौ वक्षसि निक्षिप्य कुब्जीभूतस्तथैव च ॥६८॥
दन्तोष्ठस्फुरणं चैव चिबुकस्य तु कम्पनम् ।
कार्यं शनैश्च गन्तव्यं शीताभिनयने गतौ ।६९॥
तथा भयानके चैव गतिः कार्या विचक्षणैः ।
स्त्रीणां कापुरुषाणां च ये चान्ये सत्त्ववर्जिताः ॥७०॥
विस्फारिते चले नेत्रे विधुतं च शिरस्तथा ।
भयसंयुक्तया दृष्ट्या पार्श्वयोश्च विलोकनैः ।७१॥
द्रुतैश्चूर्णपदैश्चैव बद्ध्वा हस्तं कपोतकम् ।
प्रवेपितशरीरश्च शुष्कोष्ठस्खलितं व्रजेत् ॥७२॥
[1]एषानुकरणे कार्या तर्जने त्रासने तथा ।
सत्त्वं च विकृतं दृष्ट्वा श्रुत्वा च विकृतं स्वरम् ॥७३॥

63-66 ( B.XII. 62b-66a ; G. 61b-65 ). 1 C. om. this hem. but G.p. मध्यमानामपि तत्त्वा गति योज्या विधानतः. 2 G. C. शिथिलाङ्गभुजाश्रया. 67-69 ( B.XII 67-69 ; G. 66-68 ). 70-73 ( B.XII. 70-75 ; G. 69-74 ). 1 B. एषानुकरणे.

एषा स्त्रीणां प्रकर्तव्या नृणाञ्चाश्रितविक्रमा ।
क्वचिदासन्नपतितैर्विकृष्टपतितैः क्वचित् ॥७४॥
षडकाक्रीडितैः पादैरुपर्युपरिपातितैः ।
एषामेवानुगैर्हस्तैर्गतिं भीनेषु योजयेत् ॥७५॥

वणिजां सचिवानां च गतिः कार्या स्वभावजा ।
अतिक्रान्तैः पदैर्विप्रा द्वितालान्तरगामिभिः ॥७६॥
कृत्वा नाभितटे हस्तमुत्तानं[1]कटकामुखम्[1] ।
आद्यं चारालमुत्तानं कुर्यात्पार्श्वं [2]तदन्तरे ॥७७॥
न निषण्णं न च स्तब्धं न चापि परिवाहितम् ।
कृत्वा गात्रं तथा गच्छेत्तेन चैव क्रमेण तु ॥७८॥
यतीनां श्रमणानां च ये चान्ये तपसि स्थिताः ।
तेषां कार्या गतिर्विप्रा नैष्ठिकं व्रतमाश्रिता ॥७९॥
अलोलचक्षुश्च भवेद्युगमात्रनिरीक्षणः ।
उपस्थितस्मृतिश्चैव गात्रं सर्वं विधाय च ॥८०॥
अचञ्चलमनाश्चैव [1]तथा लिङ्गं समाश्रितः ।
विनीतवेषश्च भवेत् कषायवसनस्तथा ॥८१॥
प्रथमं समपादेन कृत्वा स्थानेन वै बुधः ।
हस्तं च चतुरं कृत्वा तथा चैकं [2]प्रसारयेत् ॥८२॥
प्रसन्नं वदनं कृत्वा प्रयोगस्य वशानुगः ।
अनिषण्णेन गात्रेण गतिं [3]गच्छेदतिक्रमात् ॥८३॥
उत्तमानां भवेदेषा लिङ्गिनां ये महाव्रताः ।
एभिरेव विपर्यस्तैर्गुणैरन्येषु योजयेत् ॥८४॥

74-75 (B.XII.70-75 ; G. 69-74). 76-78 (B.XII. 76-78 ; G. 75-77). 1 C. मुकुलककटका. 2 G. तयान्तरे, B. स्तनान्तरे. 79-84 (B.XII. 79-86; G. 78-85). 1 G. यथावल्लिङ्गमाश्रिता. 2 C. प्रयोजनम्. 3 G. गच्छेद्यतिक्रमात्, B. गच्छेद्यतिक्रमात्.

तथा व्रतानुगा च स्यादन्येषां लिङ्गिनां गतिः ।
विभ्रान्ता वाप्युदात्ता वा विभ्रान्ता निभृतापि वा ॥८५॥
शकटास्यस्थितैः पादैरतिक्रान्ततैस्तथैव च ।
कार्या पाशुपतानां च गतिरुद्भ्रान्तगामिनी ॥८६॥
[1]अन्धकारेऽथ याने च गति कार्या प्रयोक्तृभिः ।
भूमौ विसर्पितैः पादैर्हस्तैर्मार्गप्रदर्शिनैः ॥८७॥
रथस्थस्यापि कर्तव्या गतिश्चूर्णपदैरथ ।
समपादं तथा स्थानं कृत्वा रथगतिं व्रजेत् ॥८८॥
धनुर्गृहीत्वा चैकेन तथा चैकेन कूबरम् ।
सूतश्चास्य भवेदेवं प्रतोदप्रग्रहाकुलः ॥८९॥
वाहनानि विचित्राणि कर्तव्यानि विभागशः ।
द्रुतैश्चूर्णपदैश्चैव गन्तव्यं रङ्गमण्डले ॥९०॥
विमानस्थस्य कर्तव्या एषैव स्यन्दनी गतिः ।
[1]आरोढुमुद्वहेद् गात्रं किञ्चित् स्यादुन्मुखस्थितम् ॥९१॥
अस्यैव वैपरीत्येन कुर्याच्चाप्यवरोहणम् ।
अधोऽवलोकनैश्चैव मण्डलावर्तनेन च ॥९२॥

आकाशगमने चैव कर्तव्या नाट्ययोक्तृभिः ।
स्थानेन समपादेन तथा चूर्णपदैरपि[1] ॥९३॥
व्योम्नश्चावतरेद्यस्तु तस्यैतां कारयेद्गतिम् ।
ऊर्ध्वायतोन्नताननैः कुटिलावर्तितैरथ ॥९४॥
भ्रश्यतश्च तथाकाशादपविद्धभुजा गतिः ।
विकीर्णवसना चैव तथा भूगतलोचना ॥९५॥

85-86 (B.XII. 79-86 ; 78-85). 87 (B. XII. 87 ; G. 86).
2 C. अन्धकारेऽन्धयाने. 88-92 ( B.XII. 88-92 ; G. 87-91 ).
1 C. आस्टमु०. 92-95 ( B XII. 93-95 ; G. 92-94 )
1 C. om. this hem.

प्रासादद्रुमशैलेषु नदीनिम्नोन्नतेषु च ।
आरोहणावतरणं कार्यमर्थवशाद् बुधैः ॥९६॥
प्रासादारोहणं कार्यमतिक्रान्तैः पदैरथ ।
उद्वाह्य गात्रं पादञ्च [1]सोपाने निक्षिपेन्नरः ॥९७॥
तथावतरणं चैव गात्रमानम्य रेचयेत् ।
अतिक्रान्तेन पादेन द्वितीयेनाञ्चितेन च ॥९८॥
प्रासादरोहणं यत्तु तदेवाद्रिषु कारयेत् ।
केवलमूर्ध्वनिक्षेपमद्रिष्वङ्के भवेदथ ॥९९॥
द्रुमे चारोहणं [1]कार्यमतिक्रान्ते स्थितैः पदैः ।
सूचीविद्धैरपक्रान्तैः पार्श्वक्रान्तैस्तथैव च ॥१००॥
एतदेवावतरणं सरित्स्वपि नियोजयेत् ।
प्रासादे यन्मया [1]प्रोक्ता प्रतारे केवलं भवेत् ॥१०१॥
जलप्रमाणापेक्षा तु जलमध्ये गतिर्भवेत् ।
तोयेऽल्पे [2]वसनोत्कर्षैः प्राज्ये पाणिविकर्षणैः ॥१०२॥
किञ्चिन्नताग्रकाया तु प्रतारे गतिरिष्यते ।
प्रसार्य बाहुमेकैकं मुहुर्वारिविकर्षणैः ॥१०३॥
तिर्यक् प्रसारिता चैव ह्रियमाणस्य वारिणा ।
[3]अशेषाङ्गाकुलापूरदना द्रुतैरिष्यते ॥१०४॥
नौस्थस्यापि प्रयोक्तव्या [1]गतिश्चूर्णपदैर्गतैः ।
अनेनैव विधानेन कर्तव्यं गतिचेष्टितम् ॥१०५॥
संज्ञामात्रेण कर्तव्यान्येतानि विधिपूर्वकम् ।
कस्मान् मृत इति प्रोक्ते किं मर्तव्यं प्रयोक्तृभिः ॥१०६॥

96-98 ( B XII. 96-98a ; G. 95-97 ) 1 B.G. न्यसेत्सोपानपंक्तिषु. 99-100 ( B XII. 103-104 ; G.103-104 ). 1 C. °मतिकान्तोत्थितैः. 101-104 (B. XII. 105a, 98b-101 , G. 98-101) 1 B G. प्रोक्तः प्रतारः. केवलः. 2 B.G. वसनोत्कर्षं . 3 G. ०कुलाधुतवदना.

105-106 (B. XII. 102a, 105b ; G. 102b, 105a-106).

अङ्कुशग्रहणाद्नागं खलीनग्रहणाद्धयम् ।
प्रग्रहग्रहणाद्यानमेवमेवापरेष्वपि ॥१०७॥
अश्वयाने गतिः कार्या वैशाखस्थानकेन तु ।
यथा चूर्णपदैश्चित्रैरुपर्युपरिपातितैः ॥१०८॥
पन्नगानां गतिः कार्या पादैः [1]स्वस्तिकसंश्रितैः ।
पार्श्वक्रान्तं पदं कुर्यात् स्वस्तिकं रेचयेदिह ॥१०९॥
विटस्यापि तु कर्तव्या गतिर्ललितविक्रमा[1] ।
पादैराकुञ्चितैः किञ्चित् तालाभ्यन्तरपातितैः ॥११०॥
ससौष्ठवसमायुक्तौ तथा हस्तौ पदानुगौ ।
कटकावर्धमानौ तु कृत्वा विटगतिं व्रजेत् ॥१११॥
[1]काञ्चुकीयस्य कर्तव्या वयोऽवस्थाविशेषतः ।
अवृद्धस्य प्रयोगज्ञो गतिमेवं प्रयोजयेत् ॥११२॥
अर्धतालोत्थितैः पादैर्विष्कम्भैः ऋजुभिस्तथा ।
समुद्वहंस्तथाङ्गानि पङ्कलग्न इव व्रजेत् ॥११३॥
अथ वृद्धस्य कर्तव्या गतिः कम्पितदेहिका ।
[1]विष्कम्भनकृतप्राणा मन्दोत्क्षिप्तपदक्रमा ॥११४॥
कृशस्याप्यभिनेया वै गतिर्मन्दपदक्रमा ।
[1]व्याधिग्रस्तस्य तथा च तपःश्रान्तस्य चैव हि ॥११५॥
विष्कम्भनकृतप्राणः कृशः क्षामोदरस्तथा ।
[2]क्षामस्वरश्चैव भवेद् दीननेत्रस्तथैव च ॥११६॥

107 (B.XII. 107; G. 106) 108 (B.XII. 108; G. 107). 109 (B XII 109; G. 108). 1 B.G. स्वस्तिकसयुतैः. 110 (B. XII. 110; G. 109). 1 B.G. ललितविभ्रमा. 111 (B. XII. 111; G. 110). 112-113 (B. XII. 112-113; G. 111-112). 1 B G. कञ्चुकीयस्य 114 (B. XII. 114, G. 113). 1 C. विष्कम्भेन. 115-116 (B. XII. 115-116; G. 114-115). 1 B,G C. व्याधिग्रस्ते जरार्ते च…क्षुधान्विते. We with Bd. 2 B G C. क्षामस्वरकपोलश्च.

शनैरुत्क्षेपणं चैव कर्तव्यं हस्तपादयोः ।
कम्पनं चैव गात्राणां क्लेशनं च तथैव च ॥११७॥
दूराध्वानं गतस्यापि गतिर्मन्दपदक्रमा ।
विकूणनं च गात्रस्य जानुनोश्च विमर्दनम् ॥११८॥
स्थूलस्यापि तु कर्तव्या गतिर्देहानुकर्षिणी ।
समुद्वहनभूयिष्ठा मन्दोत्क्षिप्तपदक्रमा ॥११९॥
विष्कम्भगामी च भवेन्निश्वासबहुलास्तथा ।
श्रमस्वेदाभिभूतश्च व्रजेच्चूर्णपदैस्तथा ।
मत्तानां तु गतिः कार्या मदे तरुणमध्यमे ॥१२०॥
वामदक्षिणपादाभ्यां घूर्णमानाऽपसर्पणैः ।
अपकृष्टे मदे चैव ह्यनवस्थितपादिका । १२१।
विघूर्णितशरीरा च पदैः प्रस्खलितैरथ ।
उन्मत्तस्यापि कर्तव्या गतिश्चानियतक्रमा[1] ॥१२२॥
बहुचारीसमायुक्ता लोकानुकरणाश्रया ।
रूक्षस्फुटितकेशश्च रजोध्वस्ततनुस्तथा ॥१२३॥
अनिमित्तप्रकथनो बहुभाषी विकारवान् ।
गायत्यकस्माद्धसति सङ्गे चापि न सज्जते ॥१२४॥
नृत्यत्यपि च संहृष्टो वादयत्यपि वा पुनः ।
कदाचिद्धावति जवात् कदाचिदवतिष्ठते ॥१२५॥
कदाचिदुपविष्टस्तु [1]शयानः स्यात् कदाचन ।
नानाचीरधरश्चैव रथ्यास्वनियतालयः ॥१२६॥

117-118 (B.XII. 117-118 ; G. 116-117). 119 (B. XII. 119 ; G. 118). 120 (B.XII. 120 ; G. 119). 121 (B.XII. 121 ; G. 120). 122 (B.XII. 122 ; G. 121). 1 C. नियतक्रमा. 123-126 (B. XII. 123-126; G. 122-125). 1 C. शयितः

उन्मत्तो भवति शेष तस्यैतां कारयेद् गतिम् ।
स्थित्वा नूपुरपादेन दण्डपादं प्रसारयेत् ॥१२७॥
बध्वा चारीं तथा चैव कृत्वा स्वस्तिकमेव च ।
अनेन चारीयोगेन परिक्रम्य चतुर्दिशम् ॥१२८॥
बाह्यभ्रमरकं चैव रङ्गकोणे प्रसारयेत् ॥१२९॥
त्रिकं सुवलितं कृत्वा लताख्यं हस्तमेव च ।
विपर्ययगतैर्हस्तैः पङ्गवां सह गतिर्भवेत् ॥१३०॥
त्रिविधा तु गतिः कार्या खञ्जपङ्गुकवामनैः ।
विकलाङ्गप्रयोगेण कुहकाभिनयं प्रति ॥१३१॥
एकः खञ्जगतौ नित्यं स्तब्धो वै चरणो भवेत् ।
तथा द्वितीयः कार्यस्तु पादोऽग्रतलसञ्चरः ॥१३२॥
स्तब्धेनोत्थापनं कार्यमङ्गस्य चरणेन तु ।
गमनेन निषण्णः स्यादन्येन चरणेन तु[1] ॥१३३॥
इतरेण निपीड्य क्रमेणानेन वै व्रजेत् ।
एषा खञ्जगतिः कार्या [2]तलशल्यक्षतेषु च ॥१३४॥
पादेनाग्रतलस्थेन अञ्चितेन व्रजेत्तथा ।
[3]निषण्णदेहा पङ्गोस्तु नतजङ्घा तथैव च ॥१३५॥
सर्वसंकुचिताङ्गा च वामने गतिरिष्यते ।
न तस्य विक्रमः कार्यो विक्षेपश्चरणस्य वा ॥१३६॥
सोद्वाहिता चूर्णपदा सा कार्या कुहकाश्रिका ।
विदूषकस्यापि गतिर्हास्यत्रयसमन्विता ॥१३७॥
[1]अङ्गवाक्यकृतं हास्यं हास्यं नेपथ्यजं तथा ।
दन्तुरः खलतिः कुब्जः खञ्जश्च विकृताननः ॥१३८॥

127-136 (B.XII. 127-136 ; G. 130-135a). 1 G. om. this hemi. 2 C. तालशल्य. 3 G निषण्णदेहो. 137-138 (B.XII. 137-138 ; G 135b-136). 1 B.G. अङ्गवाक्यकृतं.

य ईदृशः प्रवेशः स्यादङ्गहास्यं तु तद्भवेत् ।
यदा तु भगवद् गच्छेदुल्लोकितविलोकितैः ॥१३९॥
अत्यायतपदत्वाच्च अङ्गहास्यो भवेत्स तु ।
[1]वाक्यहास्यं तु विज्ञेयमसंबद्धप्रभाषणात् ॥१४०॥
अनर्थकैर्बहुविधैस्तथा चाश्लीलभाषितैः ।
चीरचर्ममषीभस्मगैरिकाद्यैस्तु मण्डित ॥१४१॥
यस्मादृशो भवेद्विप्रा हास्यो नैपथ्यजस्तु सः ।
तस्मात्तु प्रकृतिं ज्ञात्वा [2]भावः कार्यस्तु तत्त्वतः ॥१४२॥
गतिप्रचारं विभजेत् नानावस्थान्तरात्मकम् ।
स्वभावजायां विन्यस्य कुटिलं वामके करे ॥१४३॥
तथा दक्षिणहस्ते च कुर्याच्चतुरकं ततः ।
पार्श्वमेकं शिरश्चैव हस्तोऽथ चरणस्तथा ॥१४४॥
पर्यायतः सन्नमेत लयतालवशानुगः ।
स्वभावजा तु तस्यैषा गतिरन्या विकारजा ॥१४५॥
अलभ्यलाभाद् भुक्तस्य स्तब्धा तस्य गतिर्भवेत् ।
[1]कार्या चेव हि नीचानां चेटादीनामनुक्रमात् ॥१४६॥
अधमा इति ये ख्याता नानाशीलाश्च ते पुनः ।
पार्श्वमेकं शिरश्चैव करः सचरणस्तथा[1] ॥१४७॥
गतौ नमेत चेटानां दृष्टिश्चार्थविचारिणी ।
वस्त्राभरणसंस्पर्शैर्मुहुर्मुहुरवेक्षितैः ॥१४८॥
अङ्गावेर्विकारविक्षिप्तैर्लैन्यवस्त्रस्रजैस्तथा[1] ।
गर्विता चूर्णपदा च शकारस्य गतिर्भवेत् ॥१४९॥

139-142 (B. XII. 139b-142a; G. 137-141a) 1 B. G. काव्यशास्त्रं. 2 B G भावं कार्यं तु- 143-146 (B.XII. 143-146a; G. 141b-144). 1 Gg. भक्तस्य C. भव्यस्य. 146-148 (B. XII. 146b-147; G. 145-146). 1 B.G. add here a hem. 148-149 (B. XII. 149-150a; G. 147). 1 G om. but Gg. has it.

*ज्ञात्वा नीचेषु योक्तव्या विलोकनपरा गतिः।
*असंस्पर्शाच्च[1] लोकस्य स्वाङ्गानि विनिगूह्य च ॥१५०॥
म्लेच्छानां जातयो यास्तु पुलिन्दशबरादयः।
तेषां देशानुरूपेण कार्यं गतिविचेष्टितम् ॥१५१॥
पक्षिणां श्वापदानां च पशूनां च द्विजोत्तमाः।
स्वस्वजातिसमुत्थेन [1]स्वभावेन गतिर्भवेत् ॥१५२॥
सिंहर्क्षवानराणां च गतिः कार्या प्रयोक्तृभि[ः]।
या [2]पुरा च कृता सम्यग् विष्णुना प्रभविष्णुना ॥१५३॥
आलीढं स्थानकं कृत्वा गात्रं तस्यैव चानुगम्।
जानूपरि करं चैकमपरं वक्षसि स्थितम् ॥१५४॥
अवलोक्य दिश[ः] [1]कृत्वा चिबुकं बाहुमस्तके।
गन्तव्यं विक्रमैर्विमा पञ्चतालान्तरोत्थितैः ॥१५५॥
*नियुद्धसमये चैव रङ्गावतरणे तथा।
*सिंहादीनां प्रयोक्तव्या गतिरेषा प्रयोक्तृभिः ॥१५६॥
शेषाणामर्थयोगेन गतिं स्थानं च योजयेत्।
वाहनार्थप्रयोगेषु रङ्गावतरणेषु च ॥१५७॥
एवमेताः प्रयोक्तव्या नराणां गतयो बुधैः।
नोक्ताश्च या मया ह्यत्र ग्राह्यास्ता अपि[1] लोकतः ॥१५८॥

150 (B.XII. 150b-151a ; G 148). 1 G. असंस्पर्शाच्च.

151 (B.XII. 151b-152a ; G 149). 1 C. गतिविचारेण.

152-3 (B XII. 152b 154a ; G. 151) 1 G. भावेन प्रतिपादयेत्. 2 B.G. या कृता नरसिंहेन, We with Bbh. 154-155 (B.XII. 154b-156a ; G. 152-153). 1 B. सर्वाः. 156 (B. XII. 156b-157a ; G 154). 157-158 (B.XII. 157b-159a ; G. 156). 1 B. स्वाश्च.

अतः परं प्रवक्ष्यामि स्त्रीणां गतिविचेष्टितम् ।
स्त्रीणां स्थानानि कार्याणि गतिष्वाभाषणेषु च ॥१५९॥
आयतं चावहित्थं च अश्वक्रान्तमथापि च[1] ।
दक्षिणस्तु समः पश्चात् त्र्यस्रः पक्षस्थितोऽपरः ॥१६०॥
वामः समुन्नतकटिश्चायते स्थानके भवेत् ।
आवाहने विसर्गे च तथा निर्वर्णनेषु च ॥१६१॥
चिन्तायां चावहित्थे च स्थानमेतत्प्रयोजयेत् ।
रङ्गावतरणारम्भः पुष्पाञ्जलिविसर्जनम् ॥१६२॥
मन्मथेर्ष्योद्भवं कोपं तर्जन्याङ्गुलिमोटनम् ।
निषेधगर्वगाम्भीर्यमौनं मानावलम्बनम् ॥१६३॥
स्थानेऽस्मिन् संविधातव्य दिगन्तरनिरूपणम् ।
समौ यत्र स्थितौ वामस्त्र्यस्र' पक्षस्थितोऽपरः ॥१६४॥
समुन्नतकटिर्वामस्त्ववहित्थन्तु तद्भवेत्[1] ।
स्त्रीणामेतत् स्मृत' स्थानं संलापे तु स्वभावजे ॥१६५॥
निश्चये परितोषे च वितर्के चिन्तने तथा ।
[2]विलासलीलालावण्ये शृङ्गारादिनिरूपणे ॥१६६॥

159-160 (B.XII. 159b-161a ; G. 156c-157). 1 B adds स्थानान्येतानि नारीणामथ लक्षणमुच्यते वामः स्वभावतो यत्र पादो विरचित. सम. ॥ तालमात्रान्तरे न्यस्तस्त्र्यस्रः पक्षस्थितोऽपरः । अवनतमाननमुरः सम यत्र समुन्नतम् ॥ लतानितम्बगौहस्तौ स्थानं ज्ञेयं तदायतम्. 160-164 (B.XII 163b-167a ; G. 158-161) 164-166 (B.XII. 167b-172a ; G. 162-166).
1 B.G. add after this: पुरो विचलितस्त्र्यस्रस्तदन्योऽप्यहत' समः । पादस्तलान्तरन्यस्तस्त्रिकमीषत् समुन्नतम् । पाणिर्लतारव्यो यदैकस्तदन्यस्तु नितम्बगः । अवहित्थं समाख्यातं स्थानमागमभूषणै' and also C. almost the same.
2 C. विवाहलीला.

स्थानमेतत्प्रयोक्तव्यं [1]तथा मार्गावलोकने ।
पादः समुत्थितश्चैक एकश्चाग्रतलाञ्चितः ॥१६७॥
सूचीविद्धमविद्धं वा तदश्वक्रान्तमुच्यते[2] ।
शाखावलम्बने कार्यं स्तबकग्रहणे तथा ॥१६८॥
विश्रामेष्वथ[1] नीचानां नराणाञ्चार्थयोगतः ।
स्थानकं तावदेव स्याद् यावच्चेष्टा प्रवर्तते ॥१६९॥
भग्नं च स्थानकं नृत्ते चारी चेत् समुपस्थिता ।
एवं स्थानविधिः कार्यः स्त्रीणां नृणामथापि च ॥१७०॥
पुनश्च संप्रवक्ष्यामि गतिं प्रकृतिसंस्थिताम् ।
कृत्वाऽवहित्थं स्थानन्तु वामञ्चाधोमुखं करम् ॥१७१॥
नाभिप्रदेशे विन्यस्य सव्यञ्च कटकामुखम् ।
ततः सललितं पादं तालमात्रसमुत्थितम् ॥१७२॥
दक्षिणं वामपादस्य बाह्यपार्श्वे विनिक्षिपेत् ।
तेनैव समकालञ्च लताख्यं वामकं भुजम् ॥१७३॥
दक्षिणं विनमेत्पार्श्वं न्यसेन्नाभितटे ततः ।
नितम्बे दक्षिणं कृत्वा हस्तञ्चोद्वेष्ट्य वामकम् ॥१७४॥
ततो वामपदं दद्याल्लताहस्तं च दक्षिणम् ।
लीलयोद्वाहितेनाथ शिरसोऽनुगतेन च ॥१७५॥
किञ्चिन्नतेन गात्रेण गच्छेत् पञ्चपदीं ततः ।
यो विधिः पुरुषाणां तु रङ्गपीठपरिक्रमे ॥१७६॥

167-168 (B.XII. 172b-173a ; G. 167). 1 B. मर्त्-. 2 B adds. स्खलितं घूर्णितं चैव गलिताम्बरधारणम् ॥ कुसुमस्तबकादानं परिरब्धमेव च । विलासनं सललितं तरुशाखावलम्बनम् ॥ स्थानेऽस्मिन् संविधानीयं स्त्रीणामेतद् प्रयोक्तृभिः. 168-169 (B.XII. 175b-176a, G. 168). 1 C. देवाणा दाराणा. 169-171 (B. XII 176b-178a ; G. 169-170). 171-176 (B.XII. 178b-183a ; G. 171-175). 176-177 (B XII. 183b-184a ; G. 176).

स एव प्रमदानां वै कर्तव्यो नात्ययोक्तृभिः ।
पदकलं तु न कर्तव्यं तथाष्टकलमेव च ॥१७७॥
पादस्य पतनं तज्ज्ञैः खेदनं तद्वदेव स्त्रियाः ।
सयौवनानां नारीणामेवं कार्या गतिर्बुधैः ॥१७८॥
[1]स्थवीयसीनामेतासां संप्रवक्ष्याम्यहं गतिम् ।
[1]कृत्वावहित्थं स्थानन्तु वामं न्यस्य कटीतटे ॥१७९॥
[2]आद्यं चारालमुत्तानं कुर्यान्नाभिस्तनान्तरे ।
न निषण्णं न च स्तब्धं न चापि परिवाहितम् ॥१८०॥
कृत्वा गात्रं ततो गच्छेत्तेनैवेह क्रमेण तु ।
प्रेष्याणामपि कर्तव्या गतिरुद्भ्रान्तगामिनी ॥१८१॥
[1]किञ्चिदुन्नमितैर्गात्रैराविद्धगतिविक्रमा[2] ।
स्थानं कृत्वाऽवहित्थञ्च वामञ्चाधोमुखं भुजम् ॥१८२॥
नाभिदेशे विन्यस्य सव्यञ्च कटकामुखम् ।
वर्षनारीगतिः कार्या स्त्रीपुंसाभ्यां निमिश्रिता ॥१८३॥
उदात्तललितैर्गात्रैः पादैर्लीलासमन्वितैः ।
या पूर्वमेवाभिहिता ह्युत्तमानां गतिर्मया ॥१८४॥
स्त्रीणां कापुरुषाणाञ्च तनोऽर्धार्धञ्च योजयेत् ।
मध्यमोत्तमनीचानां नृणां यद् गतिचेष्टितम् ॥१८५॥
स्त्रीणां तदेव कर्तव्यं ललितैः पदविक्रमैः ।
बालानामपि कर्तव्यं स्वच्छन्दगतिविक्रमं ॥१८६॥

177-179 (B. XII. 184b-186a; G. 177-178). 1 G. स्थानीया या- भिरन्ताभान्. 179-181 (B.XII. 186b-188a; G. 179-180). 1 C. कृत्वापविद्धं. 2 C. आद्यचारालमुत्ताना. 181-183 (B.XII. 188b-190a; G. 181-182). 1 C. कचिदुन्नमि॰. 2 B. ॰भुजविक्रमा. 183-184 (B.XII. 190b-191a; G 183). 184 186 (B.XII. 191b-193a; G. 184-185).

न तस्याः सौष्ठवं कार्यं प्रमाणं न प्रयोक्तृभिः ।
*तृतीया प्रकृतिः कार्या नाम्ना चैव नपुंसकम् ॥१८७॥
*नरस्वभावावमुत्सृज्य स्त्रीगतिं तत्र योजयेत् ।
विपर्ययः प्रयोक्तव्यः पुरुषस्त्रीनपुंसके ॥१८८॥
स्वभावमात्मनस्त्यक्त्वा तद्भावगमनादिह ।
व्याजेन [1]सेवया वाऽपि तथा भूयश्च वञ्चनात् ॥१८९॥
स्त्री पुंसः प्रकृतिं कुर्यात् स्त्रीभावं पुरुषोऽपि वा ।
धैर्योदारेण सत्त्वेन बुद्ध्या तद्वच्च कर्मणा ॥१९०॥
स्त्री पुमांसं त्वभिनयेद् वेषवाक्यविचेष्टितैः ।
स्त्रीवेषभाषितैर्युक्तं [2]प्रेक्षिताप्रेक्षितैस्तथा ॥१९१॥
[3]मृदुमन्दगतिश्चैव पुमान् स्त्रीभावमाचरेत् ।
विजातीयास्तु या नार्यः पुलिन्दशबराङ्गनाः ॥१९२॥
याश्चापि तासां कर्तव्या तज्जातिसदृशी गतिः ।
व्रतस्थानां तपःस्थानां लिङ्गस्थानां तथैव च ॥१९३॥
स्वस्थानाच्चैव नारीणां समपादं प्रयोजयेत् ।
उद्धता येऽङ्गहाराः स्युर्याश्चार्यो मण्डलानि च ॥१९४॥
तानि नाट्यप्रयोगज्ञैर्न कर्तव्यानि योषिताम् ।
अथासनविधिः कार्यो नृणां स्त्रीणां विशेषतः ॥१९५॥
नानाभावसमायुक्तस्तथा च शयनाश्रय ।
विष्कम्भेनाञ्चितौ पादौ त्रिकं किञ्चित्समुन्नतम् ॥१९६॥

186-187 (B.XII. 193b-194a ; G. 186). 187-188 (B. XII. 194b-195a ; G. 187). 188-189 (B.XII. 195b-196a ; G. 188). 189-192 (B.XII. 196b-199a ; G. 189-191 ). 1 G. क्रीडया. 2 C. प्रेषिताप्रेषितै.. 3 BG. मृदुसन्नगति. 192-193 (B XII. 199b-200a ; G. 192). 193-194 (B XII. 200b-201a ; G. 193). 194-195 (B.XII. 201b-202a ; G. 194).

हस्तौ कट्यूरुविन्यस्तौ स्वस्थे स्यादुपवेशने ।
पादः प्रसारितः किञ्चिदेकश्चैवासनाश्रयः ॥१९७॥
शिरः पार्श्वगतं चैव सचिन्त उपवेशने ।
चिबुकोपाश्रितौ हस्तौ बाहुशीर्षाश्रितं शिरः ॥१९८॥
संप्रणष्टेन्द्रियमनाः शोकौत्सुक्योपवेशने ।
प्रसार्य बाहू शिथिलौ तथा [1]चोपाश्रयाश्रितः ॥१९९॥
मोहमूर्च्छामदग्लानिविषादेषूपवेशयेत् ।
सर्वपिण्डीकृताङ्गस्तु संयुक्तः पादजानुभिः ॥२००॥
व्याधिव्रीडितनिद्रासु ध्याने चोपविशेन्नरः ।
तथा [1]चोत्कटिकं स्थानं स्फिक्पार्ष्णीनां समागमः ॥२०१॥
पित्र्ये निवापे जप्ये च सन्ध्यास्वाचमनेऽपि च ।
विष्कम्भितं पुनश्चैव जानु भूमौ निपातयेत् ॥२०२॥
प्रियाप्रसादने कार्यं होमादिकरणेषु च ।
महीगताभ्यां जानुभ्यामधोमुखमवस्थितम् ॥२०३॥
देवाभिगमने चैव रुषितानां [1]च सान्त्वने ।
शोके चाक्रन्दने तीव्रे मृतानां चैव दर्शने ॥२०४॥
त्रासने च कुसत्त्वानां नीचानाञ्चैव याचने ।
होमयज्ञक्रियायाञ्च प्रेष्याणाञ्चैव कारयेत् ॥२०५॥
मुनीनां नियमेष्वेष भवेदासनजो विधि ।
अथासनविधिः कार्यो विविधो नाटकाश्रयः ॥२०६॥

195-196 (B.XII. 202b-203a ; G. 195). 196-197 (B XII. 203b-204a ; G. 196). 197-198. (B XII. 204b-205a ; G. 197). 198-199 (B.XII. 205b-206a ; G. 198). 1 B. चापाश्र॰. 199-200 (B.XII. 206b-207a ; G. 199). 200-201 (B.XII. 207b-208a ; G. 200). 201-202 (B.XII. 208b 209a ; G. 201). 1 G. चोत्कुटकं स्थानम्. 202-203 (B.XII. 209b-210a ; G. 202) 203-206 (B. XII. 210a-213a ; G. 203-205) 1 BC. प्रसादने.

स्त्रीणाञ्च पुरुषाणाञ्च वाह्यश्चाभ्यन्तरस्तथा ।
*आभ्यन्तरस्तु नृपतेर्वाह्यो वाह्यगतस्य च ॥२०७॥
देवानां नृपतीनाञ्च दद्यात् सिंहासनं द्विजाः ।
पुरोधसाममात्यानां भवेद्वेत्रासनं तथा ॥२०८॥
मुण्डासनञ्च दातव्य सेनानीयुवराजयोः ।
[1]मुण्डासनं द्विजातीनां [2]कुमाराणां कुथासनम् ॥२०९॥
एवं राजसभा प्राप्य कार्यस्त्वासनजो विधि ।
स्त्रीणाञ्चाप्यासनविधिं संप्रवक्ष्याम्यहं पुनः ॥२१०॥
सिंहासनन्तु राज्ञीनां देवीनां मुण्डमासनम् ।
पुरोधोऽमात्यपत्नीनां दद्याद् वेत्रासनं तथा ॥२११॥
भोगिनीनां तथा चैव वस्त्रं चर्म कुथापि वा ।
*ब्राह्मणीनां यतीनाञ्च पट्टासनमथापि च ॥२१२॥
वैश्यानाञ्च प्रदातव्यमासनञ्च [1]मसूरकम् ।
शेषाणां प्रमदानान्तु भवेद्भूम्यासनं द्विजा. ॥२१३॥
एवमाभ्यन्तरो ज्ञेयो वाह्यश्चासनजो विधिः ।
तथा स्वगृहवार्तासु छन्देनासनमिष्यते ॥२१४॥
नियमस्थो मुनीनां च भवेदासनजो विधिः ।
लिङ्गिनामासनविधिः कार्यो व्रतसमाश्रयः ॥२१५॥
[1]दण्डमुण्डवृषीप्रायं वेत्रासनमथापि वा ।
होमे यज्ञक्रियायाञ्च पित्र्यर्थे च प्रयोजयेत् ॥२१६॥
स्थानीया ये च पुरुषाः कुलविद्यासमन्विताः ।
तेषामासनसत्कारः कर्तव्य इह पार्थिवै ॥२१७॥

206-207 (B.XII. 213b-214a ; G. 206). 201-210 (B.XII. 214b-217a ; G. 207-210a). 1 C कुशा (मुजा ?) सनं, B. काष्ठासनं ब्राह्मणाना 2 C. कुमारीणा. 210-214 (B.XII. 217b-221 ; G. 210b-214). 215 (B.XII. 222 ; G. 215). 216 (B.XII. 223 , G. 216) 1 B. व सीमुण्डासनप्राय. 217 (B.XII. 224 ; G. 217).

समे समासनं दद्यान्मध्ये मध्यममासनम् ।
अतिरिक्तेऽतिरिक्तञ्च हीने भूम्यासनं भवेत् ॥२१८॥
उपाध्यायस्य नृपतेर्गुरूणामग्रतो बुधैः ।
भूम्यासनन्तथा कार्यमथवा काष्ठमासनम् ॥२१९॥
नौनागरथयानेषु तथा[1] काष्ठासनेषु च ।
सहासनं न दुष्येत गुरूपाध्यायपार्थिवैः ॥२२०॥
आकुञ्चितं समं चैव प्रसारितविवर्तने ।
उद्वाहितं समञ्चैव शयने कर्म कीर्त्यते ॥२२१॥
[1]स्वैरमाकुञ्चितैरङ्गैः शय्याविद्धे तु जानुनी ।
स्थानमाकुञ्चितं नाम शीतार्तानां प्रयोजयेत् ॥२२२॥
उत्तानितमुखं चैव [1]स्रस्तमुक्तकरं तथा ।
समं नाम तु सुप्तस्य स्थानकं संविधीयते ॥२२३
एकं भुजमुपाधाय संप्रसारितजानुकम् ।
स्थानं प्रसारितं नाम [1]खलु सुप्तस्य कारयेत् ॥२२४॥
अधोमुखस्थितञ्चैव विवर्तितमिति स्मृतम् ।
शस्त्रक्षतमृतोत्क्षिप्तमत्तोन्मत्तेषु कारयेत् ॥२२५॥
अंसोपरि शिरः कृत्वा कूर्परक्षोभमेव च ।
उद्वाहितन्तु विज्ञेयं लीलायां वचने प्रभोः ॥२२६॥
ईषत्प्रसारिते जंघे यत्र [1]स्रस्तौ करावुभौ ।
आलस्यश्रमखेदेषु तत्स्थानं विधीयते ॥२२७॥

218 (B.XII. 225 ; G. 218). 219 (B.XII. 226 ; G. 219). 220 (B.XII 227 ; G. 220) 1 B. भूमि॰. 221 (B. XII. 228 ; G. 221). 222 (B.XII. 229 ; G. 221) 1 B. सर्वैं॰. 223 (B XII. 230 ; G. 223). 1 B. प्रसङ्मुक्त॰. 224 (B.XII. 231 ; G. 224). 1 B. सुख॰. 225 (B XII. 232 ; G. 225). 226 (B.XII. 233 ; G. 226). 227 (B.XII. 234 ; G. 227). 1 G. स्तौ.

गतिप्रचारस्तु मयोदितोऽयं
नोक्तश्च यः सोऽर्थवशेन साध्यः ।
अतः परं रङ्गपरिक्रमस्य[1]
वक्ष्यामि [2]कक्षां प्रविभागयुक्ताम् ॥२२८॥

इति भारतीये नाट्यशास्त्रे गतिप्रचारो नाम
त्रयोदशोऽध्यायः ।

228 (B.XII. 235, G. 228). 1 C. रङ्गविधिक्रमस्य. 2 B. कक्ष्यान्तर-संविधानम्

ये तु पूर्वं मया प्रोक्तास्त्रयो वै नाट्यमण्डपाः ।
तेषां विभागं विज्ञाय ततः [1]कक्षां प्रयोजयेत् ॥१॥
ये नेपथ्यगृहद्वारे मया पूर्वं प्रकीर्तिते ।
तयोर्भाण्डस्य विन्यासो मध्ये कार्यः प्रयोक्तृभिः ॥२॥
कक्षाविभागो निर्देश्यो रङ्गपीठपरिक्रमात् ।
परिक्रमेण रङ्गस्य कक्षा ह्यन्या विधीयते ॥३॥
कक्षाविभागे ज्ञेयानि गृहाणि नगराणि च ।
[2]उद्यानारामसरित आश्रमा अटवी तथा ॥४॥
पृथिवी सागराश्चैव त्रैलोक्यं सचराचरम् ।
वर्षाणि सप्त द्वीपाश्च पर्वता विविधास्तथा ॥५॥
[3]अलोकश्चैव लोकश्च रसातलमथापि च ।
दैत्यनागालयश्चैव गृहाणि [4]च वनानि च ॥६॥
[5]नगरे वा वने वापि वर्षे वा पर्वतेऽपि वा
यत्र वार्ता प्रवर्तेत तत्र कक्षां प्रवर्तयेत् ॥७॥
बाह्यं वा मध्यमं वापि तथैवाभ्यन्तरं पुनः ।
दूरं वा सन्निकृष्टं वा देशं तु परिकल्पयेत् ॥८॥
पूर्वं प्रविष्टा ये रङ्गे ज्ञेयास्तेऽभ्यन्तरा[6] बुधैः ।
पश्चात्प्रविष्टा विज्ञेयाः कक्षाभागे तु बाह्यतः ॥९॥
तेषां तु दर्शनेच्छुर्यः प्रविशेद्रङ्गमण्डलम् ।
दक्षिणाभिमुखं सोऽथ कुर्यादात्मनिवेदनम् ॥१०॥

1-10 (B.XIII. 1-12, G. 1-12). 1 BC. always कच्या. 2 C. उद्यानारामसहितो देशो ग्रामो 3 BC. आलोकश्च०. 4 G. भुवनानि च. 5 C. तथा सप्त समुद्राश्च वर्षा वै पर्वतास्तथा. 6 BC. अभ्यन्तरे.

यतो मुखं भवेद् भाण्डं द्वारं नेपथ्यकस्य च।
सा मन्तव्या तु दिक् पूर्वा नाट्ययोगेन नित्यशः[1] ॥११॥
निष्क्रामेच्चापि यस्तत्र नरः कार्येण केनचित्।
स निष्क्रमेत्तु तेनैव कृतं येन [2]निवेशनम्[3] ॥१२॥
निष्क्रान्तोऽर्थवशाच्चापि प्रविशेद्यदि तद् गृहम्।
यतः प्राप्तः स पुरुषस्तेन मार्गेण निष्क्रामेत्[4] ॥१३॥
अथवार्थवशाच्चापि तेनैव सह गच्छति।
तथैव प्रविशेद् गेहमेकाकी सहितोऽपि वा ॥१४॥
तयोश्चापि प्रविशतोः [1]कक्षामन्यां विनिर्दिशेत्।
परिक्रमेण रङ्गस्य त्वन्या कक्षा विधीयते ॥१५॥
समैश्च सहितो गच्छेन्नीचैश्च परिवारितः।
अथ प्रेक्षणिकाश्चापि विज्ञेया ह्यग्रतो गतौ ॥१६॥
सैव भूमिस्तु बहुभिर्विकृष्टा स्यात्परिक्रमैः।
मध्या वा सन्निकृष्टा वा तेषामेवं [2]विकल्पयेत् ॥१७॥
नगरे वा वने वापि सागरे पर्वतेऽपि वा।
दिव्यानां गमनं कार्यं [3]द्वीपे वर्षेऽपि वा पुन ॥१८॥
आकाशेन विमानेन माययाप्यथ वा पुन.।
विविधाभि क्रियाभिर्वा नानार्थाभिः प्रयोगतः ॥१९॥
नाटकेच्छन्नवेषाणां दिव्यानां भूमिसञ्चरः।
मानुषे कारणादेषां यथा भवति दर्शनम्[4] ॥२०॥

11-12 (B XIII 11-13, G, 11-13). 1 C. has it after 61. 2 BG. निवेदनम्. 3 B. read the couplet differently. 4 Mss. निष्क्रमेत्.
14-20 (B.XIII. 14-20; G 14-20). 1 BC. कक्ष्याम्. 2 G. विकल्पनात. 3 G. द्वीपवर्षेषु. 4 GB. add भारते त्वथ हैमे (हिमे) वा हरिवर्षे इलावृते। रम्ये किम्पुरुषे वापि कुरुषूत्तरकेषु वा.

दिव्यानां छन्दगमनं [1]सर्ववर्षेषु कारयेत् ।
भारते मानुषाणाञ्च गमनं संविधीयते ॥२१॥
[2]गच्छेद्यदि विकृष्टं तु [3]देशं कार्यवशान्नरः ।
अङ्कच्छेदेन चान्यस्मिन् निर्दिशेद्धि प्रवेशके[4] ॥२२॥
[5]अब्दप्रमाणं गत्वा तु कार्यलाभं विनिर्दिशेत् ।
[6]तथाऽलाभे तु कार्येऽस्य अङ्कच्छेदो विधीयते ॥२३॥
क्षणो मुहूर्तो यामो वा दिवसो वापि नाटके ।
एकाङ्के संविधातव्यो बीजस्यार्थवशानुगः ॥२४॥
अङ्कच्छेदे [7]पुनर्वृत्तं मासं वा वर्षमेव वा ।
नोर्ध्वं [8]वर्षात्तु कर्तव्यं कार्यमङ्कसमाश्रयम् ॥२५॥
एवं तु भारते वर्षे कक्षा कार्या प्रयोगतः ।
मानुषाणां [1]गतिर्या तु दिव्यानां तां निबोधत ॥२६॥
हिमवत्पृष्ठसंस्थे तु कैलासे पर्वतोत्तमे ।
यक्षाश्च गुह्यकाश्चैव धनदानुचराश्च ये ॥२७॥
रक्षःपिशाचभूताश्च सर्वे हैमवताः स्मृताः ।
हेमकूटे च गन्धर्वा विज्ञेयाः साप्सरोगणाः ॥२८॥
सर्वे नागाश्च निषधे शेषवासुकितक्षकाः ।
महामेरौ त्रयस्त्रिंशद् ज्ञेया देवगणास्तथा ॥२९॥
नीले तु वैडूर्यमये [1]सिद्धा ब्रह्मर्षयस्तथा ।
दैत्यानां दानवानाञ्च श्वेतपर्वत इष्यते ॥३०॥
पितरश्चापि विज्ञेयाः शृङ्गवन्तं समाश्रिताः ।
इत्येते पर्वताः श्रेष्ठा दिव्यावासाः प्रकीर्तिताः ॥३१॥

21-26 ( B. XIII. 22-27 ; G. 22-27). 1 G. वर्षपर्वतेषु. 2 BG. विकृष्टं यस्तु गच्छेद्धि 3 G. देशकालवशान्तरः. 4 G. विप्रवेशिके, C. प्रविवेशके. 5 G. अङ्क (B. अब्द) प्रमाणं. 6 BG. तथा लाभे 7 BG. तु निर्वृत्तं 8 C. गतौ देशा.
27-31 (B.XIII. 28-32 ; G. 28-32). 1 C. सिद्धब्रह्मर्षयस्तथा

तेषां कक्षाविभागश्च जम्बूद्वीपे भवेदयम् ।
तेषां तु चेष्टितं कार्यं स्वैः स्वैः कर्मपराक्रमैः ॥३२॥
परिच्छेदविशेषस्तु तेषां मानुषलोकवत् ।
तेषान्त्वनिमिषत्वं यत्तन्न कार्यं प्रयोक्तृभिः ।
इह भावा रसाश्चैव दृष्टावेव प्रतिष्ठिताः ॥३४॥
दृष्ट्या हि सूचितो भावः पुनरङ्गैर्विभाव्यते ।
एवं कक्षाविभागस्तु मया प्रोक्ता द्विजोत्तमाः ॥३५॥
पुनश्चैव प्रवक्ष्यामि प्रवृत्तीनां तु लक्षणम् ।
चतुर्विधा प्रवृत्तिश्च प्रोक्ता नाट्यप्रयोगतः ॥
आवन्ती दाक्षिणात्या च पाञ्चाली चौड्रमागधी ॥३६॥

अत्राह—प्रवृत्तिरिति कस्मादिति । उच्यते—पृथिव्यां नानादेशवेषभाषाचारा वार्ताः [1]प्रख्यापयन्तीति प्रवृत्तिः । वृत्तिश्च निवेदने । अत्राह—यथा पृथिव्यां बहवो देशाः सन्ति, कथमासाञ्चतुर्विधत्वमुपपन्नं, समानलक्षणश्चासां प्रयोग । उच्यते-सत्यमेतत् समानलक्षण प्रयोगः किन्तु नाना देशवेषभाषाचारो लोक इति कृत्वा [2]लोकानुमतेन वृत्तिसंश्रितस्य नाट्यस्य मया चतुर्विधत्वमभिहितम् [।] भारती-सात्त्वती-कैशिक्यारभटी-[3]वृत्ति-संश्रितेषु प्रयोगेषु अभिरता देशाः, यतः [4]प्रवृत्तिचतुष्टयमभिनिर्वृत्तं, प्रयोगश्चोत्पादितः ।

तत्र दाक्षिणात्यास्तावत् बहुनृत्तगीतवाद्या कैशिकीप्रायाः चतुरमधुरललिताङ्गाभिनयाश्च । तद्यथा—

महेन्द्रो मलयः सह्यो [1]मेकलः [2]कालपञ्जरः ।
एतेषु ये श्रिता देशाः स ज्ञेयो दक्षिणापथः ॥३७॥

32-36 (B.XIII 33-38, G. 33-38). 1 Bd. प्रख्यापयति, BC. ख्यापयति. 2. C. लोकानुमतेऽनुवृत्ति. 3 BG. वृत्तिसंश्रितैश्च प्रयोगैरभिहिताः, Bd. Gg. वृत्तिसंश्रितेषु प्रयोगेषु, Bd. C. add अमीषु प्रयोगेषु

37 (B.XIII. 39; G. 39). 1 C. मेखल॰. 2 C. कालपञ्जरः; G. पालपिञ्जरः, B. पालमञ्जरः.

कोसलास्तोसलाश्चैव कलिङ्गा [1]एव मोसलाः ।
[2]द्रमिडान्ध्रमहावैण्णा ये चैव वानवासिकाः ॥३८॥
दक्षिणस्य समुद्रस्य तथा विन्ध्यस्य चान्तरे ।
ये देशाः संश्रितास्तेषु दाक्षिणात्या तु नित्यशः ॥३९॥
[1]आवन्तिका वैदिशिकाः सौराष्ट्रा मालवास्तथा ।
सैन्धवास्त्वथ सौवीरा [2]आनर्ताः सार्वुदेयकाः ॥४०॥
दाशार्णास्त्रैपुराश्चैव तथा वै [3]मार्तिकावताः ।
कुर्वन्त्यावन्तिकीमेते प्रवृत्तिं नित्यमेव तु ॥४१॥
सात्त्वतीं कैशिकीं चैव वृत्तिमेते समाश्रिताः ।
भवेत् प्रयोगो [1]नान्यत्र स च कार्यं प्रयोक्तृभिः ॥४२॥
अङ्गा वङ्गा [1][उत् ]-कलिङ्गा वत्साश्चैवोड्रमागधाः ।
पौण्ड्रा [2]नैपालकाश्चैव अन्तर्गिरिवहिर्गिराः ॥४३॥
तथा [3]प्रवङ्गमाहेन्द्रमलदामलवर्तकाः ।
ब्रह्मोत्तरप्रभृतयो भार्गवा मार्गवास्तथा ॥४४॥
प्राग्ज्योतिषाः पुलिन्दाश्च वैदेहास्ताम्रलिप्तकाः ।
[4]प्राङ्गप्रभृतयश्चैव युञ्जन्ति चौड्रमागधीम् ॥४५॥
अन्येऽपि देशाः प्राच्या ये पुराणे संप्रकीर्तिताः ।
तेषु प्रयुज्यते ह्येषा प्रवृत्तिश्चौड्रमागधी ।
[ भारतीं कैशिकीं चैव वृत्तिमेषा समाश्रिता । ][1] ॥४६॥

38-39 (B XIII. 40-41 ; G. 40-41). 1 Bc. एव मोसलाः, Gp. एव मोशलाः, G. यवनोशनाः. 2 Gp. महावेण्णा, C. महाराष्ट्रावेण्णा, B. महाराष्ट्र वैण्णा. 40-41 (B XI 42-43 ; G. 42-43). 1 G. आवर्तका. 2 C. आवर्ता. 3 G. वर्तिकावता. 42 (B XIII 44 ; G. 44). 1 Bd. नाव्ये च. 43-45 (B XIII. 45-47 ; G 45-47). 1 Mss. कलिङ्गाश्च. 2 G. नैपालिका . 3 G. प्रवङ्गमाग्नेया, Gp. वङ्गसमा ज्ञेया 4 G. प्राच्य प्रभृतयः, C. प्राशुप्रवृत्तयः. 46 (B.XIII 48 ; G. 48). 1 For the justification of this restoration see Introduction to the text.

पाञ्चाला सौरसेनाश्च काश्मीरा हास्तिनापुराः ।
वाह्लीका [1]शा[ल्व-]का-श्चैव मद्रकौशीनरास्तथा ॥४७॥
हिमवत्संश्रिता ये तु गङ्गायाश्चोत्तरां दिशम् ।
ये श्रिता वै जनपदास्तेषु पाञ्चालमध्यमा[2] ॥४८॥
पाञ्चालमध्यमायां तु सात्त्वत्यारभटी [1]स्मृता ।
प्रयोगस्त्वल्पगीतार्थ आविद्धगतिविक्रमः ॥४९॥
द्विधा क्रिया भवत्यासां रङ्गपीठपरिक्रमे ।
प्रदक्षिणप्रवेशा च तथा चाप्यप्रदक्षिणा ॥५०॥
आवन्ती दाक्षिणात्या च प्रदक्षिणपरिक्रमे ।
अपसव्यप्रवेशा तु पाञ्चाली चौड्रमागधी ॥५१॥
आवन्त्यां दाक्षिणात्यायां [1]योज्यं द्वारमथोत्तरम् ।
पाञ्चाल्यामौड्रमागध्यां योज्यं द्वारन्तु दक्षिणम् ॥५२॥
एकीभूता पुनश्चैताः प्रयोक्तव्याः प्रयोक्तृभि ।
[1]पर्षदं देशं कालञ्चाप्यर्थयुक्तिमवेक्ष्य च ॥५३॥
[1]येषु देशेषु या पूर्वं प्रवृत्तिः परिकीर्तिता ।
तद्वृत्तिकानि रूपाणि तेषु तज्ज्ञः प्रयोजयेत्[2] ॥५४॥

47-48 (B.XIII 49-50, G. 50-51) 1 C. शल्यकाश्चैव, Gd. शाक्लाश्चैव. G. शाकुनस्तथा, Bd. शाल्वका,C. मध्यमाः. 49 (B.XIII. 51; G. 49). 1 C. श्रिताः. 50 (B XIII. 52; G. 52). 51 (B.XIII. 53; G. 53) 52 (B.XIII. 54; G. 54). 1 B. पार्श्वद्वार॰. 53 (B.XIII, 55; G. 55). 1 C. पर्षदं देशञ्चाप्यर्थयुक्तिं कालमवेक्ष्य, G. पार्षदं देशकालौ चाप्यर्थं. 54 (B.XIII. 56; G. 56). 1 GB येषु देशेषु च या कार्या प्रवृत्तिः, 2 BC.G. add एकीभूताः पुनस्त्वेता नाट्यकादौ (C. गानकादौ) भवन्ति हि । अवेक्ष्य वृत्तिबाहुल्यं तत्तत्कर्मसमाचरेत् ॥ सार्थे बाहुल्यमेवस्य शेषाणामपि बुद्धिमान् । देशानन्दस्य बाहुल्यं प्रवृत्तिं पूरयेत्तदा.

प्रयोगो द्विविधश्चैव विज्ञेयो नाटकाश्रयः ।
सुकुमारस्तथाऽऽविद्धो नाट्ययुक्तिसमाश्रयः ॥५५॥
[1]सत्त्वाविद्धाङ्गहारस्तु छेद्यभेद्याहवात्मकम् ।
मायेन्द्रजालबहुलं [2]पुस्तनेपथ्यसंयुतम् ॥५६॥
पुरुषैर्बहुभिर्युक्तमल्पस्त्रीकं तथैव च ।
सात्त्वत्यारभटीप्रायं[3] नाट्यमाविद्धसंज्ञितम् ॥५७॥
डिमः समवकारश्च व्यायोगेहामृगौ तथा ।
एतान्याविद्धसंज्ञानि विज्ञेयानि प्रयोक्तृभिः ॥५८॥
एषां प्रयोगः कर्तव्यो [1]दैत्यदानवराक्षसैः ।
उद्धता ये च पुरुषाः शौर्यवीर्यबलान्विताः ॥५९॥
नाटकं सप्रकरणं भाणो वीथ्यङ्कनाटिके ।
सुकुमारप्रयोगाणि मानुषेष्वाश्रितानि तु ॥६०॥
धर्मी या द्विविधा प्रोक्ता मया पूर्वं द्विजोत्तमाः ।
लौकिकी नाट्यधर्मी च तयोर्वक्ष्यामि लक्षणम् ॥६१॥

55 (B.XIII. 59 ; G. 59). 56-57 (B.XIII. 60-61, G.60-61). 1 G.B. सत्त्वाविद्धा॰, तद्वाविद्धा॰. 2 C. पुंसोनेपथ्य॰. 3 C. ॰भटीयुक्त. 58 (B. XIII. 62 ; G. 62). 1 B. देव॰. 59 (B.XIII. 63 ; G. 63). 60 (B. XIII. 64 ; G. 64). 1 B. repeats here 11, and B.G. add अथ बाह्यप्रयोगे तु प्रेक्षागृहविवर्जिते । विदिक्ष्वपि भवेद्रङ्गं कदाचिद् भर्तुराज्ञया । पृष्ठे कृत्वास्य कुतप नाट्यं युङ्क्ते यतो मुखं भरतः । सा पूर्वा मन्तव्या प्रयोगकाले तु नाट्यज्ञैः ॥ द्वाराणि षट् चैव भवन्ति चास्य रङ्गस्य दिग्भागविनिश्चितानि । नाट्य-प्रयोगेन खलु प्रवेशो प्राच्यां प्रतीच्यां च दिशि प्रवेशः । विधानमुत्क्रम्य यथात्र रङ्गे विना प्रमाणाद्विदिशा-प्रयोगे । द्वारन्तु यस्मात् मन्दङ्गभाण्डं प्राची दिशा ता मनसाऽध्यवस्येत् ॥ यतोऽनुबन्धः प्रथमं तु वेशो वेशानुरूपश्च गतिप्रचारः । गतिप्रचारानुगतं च पाठ्यं पाठ्यानुरूपोऽभिनयश्च कार्यः. 61 (B.XIII. 70 ; G. 65).

स्वभावभावोपगतं शुद्धं त्वविकृतं तथा ।
लोकवार्ताक्रियोपेतमङ्गलीलाविवर्जितम् ॥६२॥
स्वभावाभिनयोपेतं नानास्त्रीपुरुषाश्रयम् ।
यदीदृशं भवेन्नाट्यं लोकधर्मी तु सा स्मृता ॥६३॥
[1]अतिवाक्यक्रियोपेतमतिसत्त्वातिभावितम् ।
लीलाङ्गहाराभिनयं नाट्यलक्षणलक्षितम् ॥६४॥
स्वरालङ्कारसंयुक्तं [स्वः]-स्वभूपुरुषाश्रयम्[2] ।
यदीदृशं भवेन्नाट्यं नाट्यधर्मी तु सा स्मृता ॥६५॥
[3]लोके प्रसिद्धं द्रव्यन्तु यदा नाट्ये प्रयुज्यते ।
[4]मूर्तिमत् [5]साभिलापं च नाट्यधर्मी तु सा स्मृता ॥६६॥
[1]आसन्नोक्तंतु यद्वाक्यं न शृण्वन्ति परस्परम् ।
अनुक्तं श्रूयते वाक्यं नाट्यधर्मी तु सा स्मृता ॥६७॥
शैलयानविमानानि चर्मवर्मायुधध्वजाः ।
मूर्तिमन्तः प्रयुज्यन्ते नाट्यधर्मी तु सा स्मृता ॥६८॥
य एकां भूमिकां कृत्वा कुर्वीतैकान्तरेऽपराम् ।
कौशल्यादेककर्तृत्वाद्वा नाट्यधर्मीति सा स्मृता ॥६९॥
याऽगम्या प्रमदा भूत्वा गम्याभूमिषु युज्यते ।
गम्याभूमिष्वगम्या वा नाट्यधर्मी तु सा स्मृता ॥७०॥

62-63 ( B.XIII. 71-72 ; G. 66-67 ). 64-66 (B.XIII 73-75: G 68-70). 1 C. अतिसत्त्व॰ ; Ckh. अतिवाक्यं 2 C. ॰मन्त्रभूपुरुषाश्रयम्. G. अश्वरथपुरुषाश्रयम्. 3 C. लोकप्रसिद्धं, B. लोके यदभियोज्यं च पदमेवोपयुज्यते, G. लोके यदभियोज्यं तु भद्रमत्रोपयुज्यते. 4 C. वृत्तिमद्. 5 Gp. साभिलापं, GC. साभिलापश्च. 67 (B.XIII 76 ; G. 71). 1 G. असोक्तं चैव. 68 (B.XIII. 77 ; G. 72). 69 (B.XIII. 78 ; G. om.). 70 (B.XIII. 79 ; G. om.)

ललितैरङ्गविन्यासैस्तथोत्क्षिप्तपदक्रमैः।
नृत्यते गम्यते यच्च नाट्यधर्मी तु सा स्मृता ॥७१॥
योऽयं स्वभावो लोकस्य सुखदुःखक्रियात्मकः।
सोऽङ्गाभिनयसंयुक्तो नाट्यधर्मी तु सा स्मृता[1] ॥७२॥
यश्च कक्षाविभागोऽयं नानाविधिसमाश्रितः।
रङ्गपीठगतः प्रोक्तो नाट्यधर्मी तु सा भवेत् ॥७३॥
नाट्यधर्मीप्रवृत्तं हि सदा नाट्यं प्रयोजयेत्।
न ह्यङ्गाभिनयात् किञ्चिद्दते [1]रागः प्रवर्तते ॥७४॥
सर्वस्य सहजो भावः सर्वो [1]ह्यभिनयार्थजः।
[2]अङ्गालङ्कारचेष्टा तु नाट्यधर्मी प्रकीर्तिता ॥७५॥
एवं कक्षाविभागस्तु [3]धर्मी युक्तय एव च।
विज्ञेया नाट्यतत्त्वज्ञैः प्रयोक्तव्याश्च तत्त्वतः ॥७६॥
उक्तो [1]मयाऽङ्गाभिनया यथाव-
[2]च्छाखाकृतो [3]यश्च [4]कृतोऽङ्गहारः।
पुनश्च वाक्याभिनय यथावद्
वक्ष्ये स्वरव्यञ्जनवर्णयुक्तम् ॥७७॥

इति भारतीये नाट्यशास्त्रे प्रवृत्तिधर्मीव्यञ्जको नाम
चतुर्दशोऽध्याय.।

71 (B.XIII. 80 ; G. 73). 72 (B XIII. 81 ; G. 74).
1 B. add यथेतिहासवेदार्थो ब्रह्मणा समुदाहृतः। दिव्यमानुषरत्यर्थं नाट्यधर्मी तु सा स्मृता. 73 (B.XIII. 83 ; G. 75). 74 (B.XIII. 84 , G. 76). 1 C. नाट्य°. 75 (B.XIII. 85 , G. 77). 1 G. अभिनयोत्थितः. 2 C. अङ्गालङ्कार चेष्टाभिर्नाट्य°. 3 C. धर्मयुक्ताः प्रकीर्तिता°. 76 (B.XII. 86 ; G. 78). 77 (B.XIII. 87 ; G. 79. 1 B मयेहाभिनयो. 2 G. शाखाकृतो. 3 B. यस्तु. 4 B. कृतोऽङ्गहारैः, C. कृताङ्गहारैः.

# पञ्चदशोऽध्यायः

यो वागभिनयः प्रोक्तो मया पूर्वं द्विजोत्तमाः ।
लक्षणं तस्य वक्ष्यामि स्वरव्यञ्जनसंभवम् ॥१॥
वाचि यत्नस्तु कर्तव्यो [1]नाट्यस्यैषा तनुः स्मृता ।
[2]अङ्गनेपथ्यसत्त्वानि वाक्यार्थं व्यञ्जयन्ति हि ॥२॥
वाङ्मयानीह शास्त्राणि वाङ्निष्ठानि तथैव च ।
तस्माद्वाचः परं नास्ति वाग्घि सर्वस्य कारणम् ॥३॥
[3]नामाख्यातनिपातैरुपसर्गसमासतद्धितैर्युक्तः ।
[4]सन्धिविभक्तिषु युक्तो विज्ञेयो वाचिकाभिनयः ॥४॥
द्विविधं हि स्मृतं पाठ्यं संस्कृतं प्राकृतं तथा ।
तयोर्विभागं वक्ष्यामि यथावदनुपूर्वशः ॥[5]५॥
व्यञ्जनानि स्वराश्चैव सन्धयोऽथ विभक्तयः ।
नामाख्यातोपसर्गाश्च निपातास्तद्धितास्तथा ॥६॥
एतैरङ्गविधानैस्तु नानाधातुसमाश्रयम् ।
विज्ञेयं संस्कृतं पाठ्यं तद्वक्ष्यामि समासतः ॥७॥
अकाराद्याः स्वरा ज्ञेया औकारान्ताश्चतुर्दश ।
हकारान्तानि कादीनि व्यञ्जनानि विदुर्बुधाः[8] ॥८॥

1-8 (B.XIV. 1-8 ; C. 1-8). 1 C. नाट्यस्येयं 2B. अङ्गनैपथ्य 3B. °निपातोपसर्ग°... °तद्धितैर्युक्तः 4B. सन्धिविभक्तिनियुक्तो 5. This couplet comes after इति व्यञ्जनवर्गः 6. B. adds कादीनि व्यञ्जनानि. 7. B om व्यञ्जनानि यथा 8. B. adds: अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा । जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च ॥ अकुहविसर्जनीयानां कण्ठ्याः, इचुयशास्तालव्याः; ऋटुरषा मूर्धन्याः, लृतुलसा दन्त्याः, उपूपध्मानीया ओष्ठ्याः * इत्युपध्मानीयः, * इतिजिह्वामूलीयः एऐ कण्ठतालव्यौ ओऔ कण्ठ्योष्ठौ. वकारो दन्त्योष्ठ्यः. ङञणनमा अनुनासिकाः विसर्जनीयस्योरस्य इत्येके । सर्वमुखस्थानमवर्णमित्यपरे । द्वौ द्वौ वर्णौ तु वर्गाद्यौ शषसाश्च तथाऽपरे । अघोषा घोषवन्तस्तु ततोऽन्ये परिकीर्तिताः

तत्र स्वराश्चतुर्दश[1]--अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ इति स्वरा ज्ञेयाः ॥

[1]व्यञ्जनानि यथा—क ख ग घ ङ च छ ज झ ञ ट ठ ड ढ ण त थ द ध न प फ ब भ म य र ल व श ष स ह इति व्यञ्जनवर्गो.[1] ॥

वर्गे वर्गे समाख्यातौ द्वौ वर्णौ प्रागवस्थितौ ।
अघोषा इति ये त्वन्ये सघोषा संप्रकीर्तिता ॥९॥
एते घोषाऽघोषाः [1]कन्ठ्योष्ठ्यदन्त्यजिव्ह्यानुनासिकाः ।
ऊष्माणस्तालव्या विसर्जनीयाश्च बोद्धव्याः ॥१०॥
गघङ-जझञ-डढण-दधन-बभमस्तथैव यरलवहा घोषाः ।
कख-चछ-टठ-तथ-पफ-[1]शषसा इति वर्गेष्वघोषाः स्युः ॥११॥
[1]कखगघङा कण्ठस्थास्तालुस्थानास्तु चछजझञाः ।
टठडढणा मूर्धन्यास्तथदधनाश्चैव दन्तस्थाः ॥१२।
पफबभमास्त्वोष्ठ्याः स्युर्दन्त्या लृलसा अहौ च कण्ठस्थौ ।
तालव्या[हि] इचुयशा स्युः ऋटुरषा मूर्ध्नि स्थिता ज्ञेया ॥१३॥
[1]ओऔ कण्ठोष्ठ्यौ[चै] एऐकारौ च कण्ठतालव्यौ ।
कण्ठ्यो विसर्जनीयो जिह्वामूलोद्भवः[क]पयोः ॥१४॥
पफयोरोष्ठ स्थानं [1]भवेदुकारस्तथा स्वरोऽविवृत. ।
स्पृष्टाः काद्या मान्ताः शषसहकारास्तथा विवृताः ॥१५॥
अन्त स्थाः [1]संवृता [हि] ङञणनमा नासिकोद्भवा ज्ञेया ।
ऊष्माणश्च शषसहा यरलववर्णास्तथैव चान्तःस्थाः ॥१६॥

9 (B.XIV. 12, C 9). 1 C. places this just after 8. 10 (B.XIV. 13; 10) 1 BC. कण्ठ्यो ष्ठदन्तजिव्ह्यानुनासिक्य (B. ०जिह्वनासिक्या.). 11 (B XIV. 14; C. 11). 1 C om. शषसा.. 12 (B XIV, 15 p. 228 C. 12). 1 C. xxxx कण्ठस्तालुस्थाना मतास्तु 13 (B XIV 15, C. 13). 14 (B.XIV. 16; C. 14). 1 B. लुलृदलौ before this. 15 (B .XIV. 17; C. 15). 1 C. भवेन्द्रकारस्वराविद्ध. 16 (B.XIV 18; C. 16). 1 B. संवृतजा.

जिह्वामूलीयःकःप उपध्मानीयसंज्ञया ज्ञेयः ।
कचटतपाः स्वरिता[1] स्युः खछठथफा स्युः सदा कण्ठ्याः ॥१७॥
[2]कण्ठ्योरस्यान् विद्याद् [3]गजडदवान् [4]पाठ्ययोगे तु ।
वेद्यो विसर्जनीयो [5]जिह्वास्थाने स्थितो वर्ण ॥१८॥
एते व्यञ्जनवर्गाः समासतः संज्ञया मया कथिताः ।
[1]शब्दप्रयोगविषये स्वरांस्तु भूयः प्रवक्ष्यामि[2] ॥१९॥
य इमे स्वराश्चतुर्दश निर्दिष्टास्तत्र वै दश समानाः ।
पूर्वो ह्रस्वस्तेषां परश्च दीर्घो विधातव्यः ॥२०॥
एभिर्व्यञ्जनयुक्तैर्नामाख्यातोपसर्गनिपातैः ।
तद्धितसन्धिविभक्तिभिरधिष्ठितः शब्द इत्युक्तः ॥२१॥
पूर्वाचार्यैरुक्तं शब्दानां लक्षणन्तु विस्तरशः ।
पुनरेव संहृतार्थं लक्षणतः संप्रवक्ष्यामि[1] ॥२२॥
[1]स्याद्याद्यधिकारगुणैरर्थविशेषैर्विभूषितन्यासम् ।
प्रातिपदिकार्थलिङ्गयुक्तं[2] पञ्चविधं नाम ज्ञेयम् ॥२३॥
तत्राहुः सप्तविधं [1]षट्कारकसंयुतं प्रथितसाध्यम् ।
निर्देशसम्प्रदानापादानप्रभृतिसंज्ञाभिः ॥२४॥

17-18 (B XIV 20-21; C 17-18). 1 C. om. स्वरिता. 2 C. कण्ठ्येन रसान् 3 C. घभरूढधभान्. 4 B. पाठ्यमंप्रयोगे तु. 5 C विद्यास्थान for जिह्वास्थाने. 19 (B XIV. 22; C. 19). 1 C. शब्दविषयेप्रयोगे, 2 B adds after this यस्मिन् स्थानेषु समो विशेषो य सवर्णसंज्ञोऽसौ. 20 (B. XIV. 22b-231, C. 20). 21 (B, XIV. f.n. 4 p. 231; C. 21). 1B. इत्थ व्यञ्जनयोगैः स्वरैश्च साख्यातनामपदविहितैः। काव्य-निबन्धाश्च स्युर्धातु-निपातोपसर्गैस्तु (23b-24a). 22 (B XIV, f.n. 5 p.231; C 22). 1 B. (24b-25a) उद्दिष्टं शब्दाना लक्षणमेतत् समासयोगेन । प्रकरणवशाद्धि तदहं विस्तरतः संप्रवक्ष्यामि. 23 (B XIV. 28; C. 25). 1 C. स्वाद्यसंधि……… भूषितन्यासा 2 B.…… लिङ्गैर्युक्तम्. 24 (B.XIV. 25b-26a; C. 23) 1 C. पट्कारक संयुतं.

¹संप्रत्यतीतकालक्रियादिसंयोजितं प्रथितसाध्यम् ।
²वचनानां यतियुक्तं ³पुरुषविभक्तं तदाख्यातम् ॥२५॥
* पञ्चशतधातुयुक्तं पञ्चगुणं पञ्चविधमिदं ज्ञेयम्¹ ।
आख्यातं पाठ्यकृतं ज्ञेयं ²नानार्थाश्रयविशेषम् ॥२६॥
¹प्रातिपदिकार्थयुक्ता ²धात्वर्थान्युपसृजन्ति ये स्वार्थैः ।
³उपसर्गा ह्युपदिष्टास्तस्मात् ⁴संस्कारदास्तेऽस्मिन् ॥२७॥
प्रातिपदिकार्थयोगाद्धातुच्छन्दोनिरुक्तयुक्त्या च ।
यस्मान्निपतन्ति पदे तस्मात्प्रोक्ता निपातास्तु ॥२८॥
प्रत्ययविभागजनितान्¹ प्रकर्षसंयोगसत्त्ववचनैश्च ।
यस्मात्पूरयतेऽर्थान् प्रत्यय उक्तस्ततस्तस्मात् ॥२९॥
¹लोपप्रकृतिप्रत्ययविभागसंयोगतत्त्ववचनैश्च² ।
³तांस्तान् ⁴पूरयतेऽर्थान् हितान्² यतस्तद्धितस्तस्मात् ॥३०॥
एकस्य बहूनां वा धातोर्लिङ्गस्य वा पदानां वा ।
विभजन्त्यर्थान् यस्मात् विभक्तयस्तेन ताः प्रोक्ताः¹ ॥३१॥
विश्लिष्टाश्च¹ स्वरा यत्र व्यञ्जनं वापि योगतः ।
सन्धीयते पदे यस्मात् तस्मात् सन्धिः प्रकीर्तितः ॥

25 (B.XIV. 26b-27a ; C. 24). 1 C. ०कालयोजितः क्रियादिसंयोग. B. ०क्रियादिसंयोजितं प्रथित-माध्यम्. 2 B. वचनं नागतयुक्तं, 3 B.C. पुरुषा (C. सदा) संयोजनाविभक्तम्. 26 (*B.XIV. 27b, 29a ; C. 26a*). 1 C. om. this hem. 2 C नानार्थाश्रयविशेषम्, B. नानाश्रयविशेषम्. 27 (B.XIV. 30 ; C. 26bc). 1 B. प्रातिपदिकार्थयुक्ता. 2 C. धात्वर्थानुत्सृजन्ति. 3 उपसर्गायुपदिष्टा. 4 B. संस्कारतस्त्वस्मिन्. 28 (B.XIV. 31 ; C. 27). 29 (B XIV. 32 ; C. 28). 1 Mss.-जनिता०. 30 (B.XIV. 33 ; C. 29). 1 B. लोके प्रकृति०. 2 B. ०वचनेषु. 3 C. तस्मात्, B. तां स्तान् पूर्यन्ते. 4 Bn. ०र्थान् हितो यतो, C. ०र्था स्ततो अतस्त, B. ०र्था स्तेषु हि. 31 (B.XIV. 34 ; C. 30). 1 B. यस्माद्विभजन्त्यर्थान् विभक्तय कीर्तितास्तस्मात्. 32 (B XIV. 35). 1 Mss. विशिष्टाश्च. 2 C. om this couplet.

वर्णक्रमसम्बन्धः[1] पदैकयोगाच्च वर्णयोगाच्च[2]।
सन्धीयते च यस्मात्तस्मात् [3]सन्धिः समुद्दिष्टः ॥३३॥

लुप्तविभक्तिर्नाम्नामेकार्थं [1]संहरन् समासोऽपि।
तत्पुरुषादिकसंज्ञैर्निर्दिष्टः षड्विधः सोऽपि ॥३४॥

एभिः शब्दविधानैर्विस्तारव्यञ्जनार्थसंयुक्तैः[1]।
पदबन्धाः कर्तव्याः [2]वृत्तनिबन्धास्तु चूर्णा वा ॥३५॥

विभक्त्यन्तं[1] पदं ज्ञेयं [2]निबद्धं चूर्णमेव च।
तत्र चूर्णपदस्येह [3]सन्निबोधत लक्षणम् ॥३६॥

[1]अनिबद्धं पदच्छन्दं तथा चानियताक्षरम्।
अर्थापेक्षाक्षरयुतं[2] ज्ञेयं चूर्णपदं बुधैः ॥३७॥

निबद्धाक्षरसंयुक्तं [1]यतिच्छेदसमन्वितम्।
निबद्धं तु पदं ज्ञेयं [2]प्रमाणनियताक्षरम् ॥३८॥

एवं नानार्थसंयुक्तैः [1]पादैर्वर्णविभूषितैः।
चतुर्भिस्तु [2]भवेद्युक्तं छन्दो वृत्ताभिधानवत् ॥३९॥

षड्विंशतिः [1]स्मृतानीह [2]पादैः छन्दांसि संख्यया।
समञ्चार्धसमञ्चैव तथा विषममेव च ॥४०॥

---

33 (B XIV. 36 ; C. 31). 1 B वर्णान्दनमसम्बन्धः. 2 C, पदैक्ययोगोऽन्यवर्ण॰. 3 B. उपदिश्यते सन्धि. 34 (B.XIV. 37 ; C. 32). 1 C. संहरन्ति सङ्क्षेपात्. 35 (B. XIV. 38 ; C 33). 1 C. ॰व्यञ्जनात्व॰, B ॰व्यञ्जनार्थ॰, 2 B. निबद्धबन्धास्तु. 36 (B.XIV. 39 : C. 34). 1 C. विभज्यैक्यं. 2 C निबन्ध. 3. B. संविबोधत. 37 (B. XIV. 40 ; C. 35) 1 B. अनिबद्धपदं छन्द॰ 2. B अर्थापेक्षाक्षरस्युतं. 38 (B XIV. 41 ; C. 36) 1 C. पदच्छेद॰. 2 B. प्रमाणनियताक्षरम्. 39 (B. XIV. 42 ; C. 37) 1 C. पदैः, 2 C. भवेद्वृत्तं 40 (B.XIV. 43 ; C. 38). 1 B. स्मृता येभिः, 2 C. पादैः.

[1]छन्दोयुक्तं समासेन [2]त्रिविधं वृत्तमिष्यते ।
[3]नानावृत्तविनिष्पन्नं शब्दमूलं तु तत्स्मृतम् ॥४१॥
छन्दोहीनो न शब्दोऽस्ति नच्छन्दः शब्दवर्जितः ।
[1]तस्मात्तूभये संयुक्ते [2]नाट्यस्योद्योतके स्मृते ॥४२॥
एकाक्षरं भवेदुक्तम् अत्युक्तं द्व्यक्षरं भवेत् ।
मध्यं त्र्यक्षरमित्याहुः प्रतिष्ठा चतुरक्षरा ॥४३॥
सुप्रतिष्ठा भवेत् पञ्च गायत्री षड् भवेदिह ।
सप्ताक्षरा भवेदुष्णिग् अष्टौ चानुष्टुबुच्यते ॥४४॥
नवाक्षरा तु बृहती पङ्क्तिश्चैव दशाक्षरा ।
एकादशाक्षरा त्रिष्टुप् जगती द्वादशाक्षरा ॥४५॥
त्रयोदशाऽतिजगती शक्वरी तु चतुर्दश ।
[3]अतिशक्वरी पञ्चदश षोडशाष्टिः प्रकीर्तिता ॥४६॥
[4]अत्यष्टिः स्यात्सप्तदश धृतिरष्टादशाक्षरा ।
एकोनविंशातिधृतिः कृतिर्विंशतिरेव च ॥४७॥
प्रकृतिश्चैकविंशत्या द्वाविंशत्याकृतिस्तथा ।
विकृतिश्च त्रयोविंशा चतुर्विंशा च संकृतिः ॥४८॥
पञ्चविंशत्यतिकृतिः[5] षड्विंशत्युत्कृतिर्भवेत्[6] ।
अतोऽधिकाक्षरं [7]यत्तु मालावृत्तं तदिष्यते ॥४९॥
छन्दसां तु [1]भेदैरेषां भेदोऽनेकविधः पृथक् ।
असंख्यपरिमाणानि वृत्तान्याहुरतो बुधाः ॥५०॥

41 (B.XIV. 44 ; C. 39). 1 B. छन्दो ज्ञेयं. 2 B. त्रिविधं. 3 B.C. नानावृत्तिविनिष्पन्ना शब्दस्यैषा तनुः स्मृताः, We with Bm. 42-49 (B. XIV. 45-52 ; C. 40-47 ). 1 B. एवं तूभयसंयोगो, C. उभयसंयुक्ते. 2 B नाट्यस्योद्योतकः स्मृतः. G नाट्यद्योतके, 3 B. दशपञ्चातिशक्वर्यां 4 B. तथा सप्तदशात्यष्टिः, 5 B. •विंशत्यभिकृतिः, 6 B. षड्विंशत्युत्कृति, 7 B. छन्दो मालाश्चान्तमिति स्मृतम्.. 50 ( B.XIV. 53 ; C. 586-591 ). 1 B. तथा ह्येते भेदाः प्रस्तारयोगतः,

गायत्रीप्रभृतित्वेषां प्रमाणं [1]संविधीयते ।
प्रयोगजानि सर्वाणि [2]प्रायस्तानि भवन्ति[न] ॥५१॥

x* [3]वृत्तानां हि चतुष्षष्टिर्गायत्री परिकीर्तिता ।
x* शतं विंशतिरष्टौ च वृत्तान्युष्णिगथोच्यते ॥५२॥
x* षट्पंचाशच्छतं चैव वृत्तानामप्यनुष्टुभः ।
x* शतानि पञ्चवृत्तानां बृहत्यां द्वादशैव च ॥५३॥
x* [4]पंक्तेः सहस्रं वृत्तानां चतुर्विंशतिरेव च ।
x* [5]त्रिष्टुभो [6]द्वे सहस्रे च चत्वारिंशत्तथाष्ट च ॥५४॥
x* सहस्राण्यपि चत्वारि नवती च षडुत्तरा ।
x* जगत्याः [7]समवर्णानां वृत्तानामिह सर्वशः ॥५५॥
x* शतमष्टौ सहस्राणि ह्यधिका नवतिः पुनः ।
x* जगत्यामतिपूर्वायां वृत्तानां परिमाणतः ॥५६॥
x* शतानि त्रीण्यशीतिश्च सहस्राण्यपि षोडश ।
x* वृत्तानि चैव चत्वारि शक्वर्याः परिसंख्यया ॥५७॥
x* द्वात्रिंशच्च सहस्राणि सप्त चैव शतानि च ।
x* अष्टौ षष्टिश्च वृत्तानि ह्याश्रयन्त्यतिशक्वरीम् ॥५८॥
x* पञ्चषष्टिसहस्राणि सहस्रार्धं तु संख्यया ।
x* षट्त्रिंशच्चैव [8]वृत्तानां अष्टौ निगदितानि च ॥५९॥
x* एकत्रिंशत्सहस्राणि वृत्तानां च द्विसप्ततिः ।
x* तथा शतसहस्रञ्च छन्दस्यत्यष्टिसंज्ञिते ॥६०॥
x* धृत्यामपि च पिण्डेन [9]वृत्तमाकलितं मया ।
x* तथा शतसहस्रे द्वे शतमेकं तथैव च ॥६१॥

51-61 (B.XIV. 54-64; C. 59b-70a). 1 B. संप्रवदन्ते 2 B. प्रायशो न भवन्ति हि. 3 B. वृत्तानि च, 4 B. पङ्क्त्यां, 5 B. त्रिष्टुभे, 6 द्वे सहस्रे C. त्रिसहस्रे. 7 C. समपादाना 8 B. वृत्तानि तथाप्या. 9 B. वृत्तान्याकलितानि तु,

x* द्विषष्टिश्च सहस्राणि चत्वारिंशच्च योगतः ।
x* चत्वारि चैव वृत्तानि [1]समसंख्यानि यानि तु ॥६२॥
x* अतिधृत्यां सहस्राणि चतुर्विंशतिरेव च ।
x* तथा शतसहस्राणि पञ्च वृत्तशतद्वयम् ॥६३॥
x* अष्टाशीतिश्च वृत्तानि वृत्तज्ञैः कथितानि च ।
x* कृतौ शतसहस्राणि दश प्रोक्तानि संख्यया ॥६४॥
x* चत्वारिंशत्तथा चाष्टौ सहस्राणि शतानि च ।
x* पञ्चषट्सप्ततिश्चैव वृत्तानां परिमाणतः ॥६५॥
x* तथा शतसहस्राणां प्रकृतौ विंशतिर्भवेत् ।
x* सप्त वै गदितं ह्यत्र नवतिश्चैव संख्यया ॥६६॥
x* सहस्राणि [2]शतञ्चैकं [3]द्वौ पञ्चाशत्सदन्तरम् ।
x* वृत्तानि परिमाणेन वृत्तज्ञैर्गदितानि तु ॥६७॥
x* चत्वारिंशत्तथैकं च सहस्राणां शतानि तु ।
x* तथा चेह सहस्राणि नवतिश्चतुरुत्तरा ॥६८॥
x* शतत्रयं समाख्यातं ह्याकृत्यां चतुरुत्तरम् ।
x* ज्ञेया शतसहस्राणामशीतिस्त्र्यधिका बुधैः ॥६९॥
x* सप्ताशीति सहस्राणि वृत्तानां षट्छतानि च ।
x* अष्टौ चैव तु वृत्तानि विकृत्यां गदितानि तु ॥७०॥
x* तथा शतसहस्राणि सप्तषष्टिश्च सप्तति॰ ।
x* सप्त चैव सहस्राणि षोडश द्वे शते तथा ॥७१॥
x* कोटिश्चैवेह वृत्तानि संकृतौ कथितानि वै ।
x* तथा शतसहस्राणि पंचत्रिंशच्च संख्यया ॥७२॥
x* तिस्रः कोट्यः सहस्राणि चतु॰पञ्चाशदेव च ।
x* शतानि चत्वारि तथा द्वात्रिंशत् प्रविभागत॰ ॥७३॥

62-73 (B XIV. 65-76, C 70b-77a). 1 C. शतमख्यानि यानि, B. समयसख्याश्रयाणि. 2 C. शतथैव. 3 B द्विपञ्चाशत्तथैव च.

x* वृत्तान्यतिकृतौ चैव छन्दोज्ञैः कथितानि वै ।
x* षट्कोट्यस्तु सहस्राणां शतानि ह्येकसप्ततिः ॥७३॥
x* अष्टौ चैव सहस्राणि शतान्यष्टौ तथैव च ।
x* चतुःषष्टिस्तु वृत्तानि ह्युत्कृत्यामपि संख्यया ॥७४॥
x* उक्तान्युत्कृतिजातानि वृत्तसंख्या विचक्षणैः ।
x* एतेन च विकल्पेन वृत्तान्येतानि निर्दिशेत्[1] ॥७६॥
x* [2]सर्वेषां छन्दसां पिण्डं कोट्योऽत्र त्रयोदश ।
x* शतानि सप्त सप्तैव सहस्राणि दशैव च ॥७७॥
x* तथा शतसहस्राणां द्विचत्वारिंशदत्र हि ।
x* षड्विंशतिश्च वृत्तानामित्थं चान्यत् समुच्यते ॥७८॥
x* समानि गणनायुक्तिमाश्रित्य कथितानि वै ।[3]
x* सर्वेषां छन्दसामेवं वृत्तांशं कथितं मया ॥७९॥
x* एतेषान्तु पुनर्ज्ञेयं त्रिकैर्वृत्तप्रवर्तनम् ।
x* एक वा विंशतिर्वापि सहस्रं कोटिमेव च[4] ॥८०॥
x* सर्वेषां छन्दसामेषां [5]त्रिकैर्वृत्त प्रयोजयेत् ।
x* [6]ज्ञेयाश्चाष्टौ त्रिकास्तत्र संज्ञाभिः स्थानमक्षरम् ॥८१॥

74-81 ( B XIV. 77-83 ; C. 79b-82b 83a ) 1 C lost many couplets and gives the rem. ones as : चत्वारिंशत्तथैकञ्च लक्षाणामथ संख्यया ॥ विशेयाष्टसहस्राणा नवतिश्च षड्तत्तरा । शतत्रयं समाख्यातं संकृत्या परिमाणतः ॥ कोटित्रयञ्चाभिकृत्या पञ्चविंशद्भिरन्वित । पञ्चाशद्भिः महश्रैश्च चतुर्भिरधिकैस्तथा ॥ चतुष्टयं शतानाश्च द्वात्रिंशद्भि समन्वितः । षट्कोटयस्तयोत्त कृत्यां लक्षाणामेकसप्तभि ॥ चतुःषष्टिशतान्यष्टौ सहस्राण्यष्ट एव च. 2 B सर्व्वेषा छन्दासामेवं वृत्तानि कथितानि वै । त्रिस्रः कोट्यो दश तथा सहस्राणा शतानि तु ॥ चत्वारिंशत्तथा द्वे च महस्राणि दशैव तु । सप्तभि सहितान्येव सप्त चैव शतानि च ॥ षड्विंशारिहान्यानि व्याख्यातानि समासतः. 3 C om this hem 4 B om. 80. 5 C. वृत्ताना वा द्विजोत्तमा 6 B. ज्ञेयाश्चाष्टौ त्रिकाएडत्र संज्ञाभिः स्थानमक्षयम्.

x* त्रीण्यक्षराणि विज्ञेयस्त्रिकोंऽशः परिकल्पितः ।
x* गुरुलघ्वक्षरकृतः सर्ववृत्तेषु नित्यशः ॥८२॥
x* गुरुपूर्वो भकारः स्यान्मकारस्य गुरुत्रिकम् ।
x* जकारो गुरुमध्यस्थः सकारोऽन्तगुरुस्तथा ॥८३॥
x* लघुमध्यस्थितो रेफस्तकारोऽन्तलघुः परः ।
x* लघुपूर्वो यकारस्तु नकारस्तु लघुत्रयम् ।
x* एते ह्यष्टौ त्रिका [1]ब्राह्मैर्विज्ञेया ब्रह्मसम्भवाः ॥८४॥
x* लाघवार्थं पुनरमी छन्दोमानमवेक्ष्य च ।
x* अक्षराः सस्वराश्चैव प्रोच्यन्ते वृत्तलक्षणे ॥८५॥
x* गुर्वेकं गिति विज्ञेयं तथा लघु लिति स्मृतम् ।
x* नियतः पदविच्छेदो यतिरित्यभिधीयते ॥८६॥
x* गुरु दीर्घं प्लुतश्चैव संयोगपरमेव च ।
x* सानुस्वारविसर्गञ्च तथान्यच्च लघु क्वचित्[2] ॥८७॥
x* संपद्विरामपादश्च दैवतस्थानमक्षरम् ।
x* [1]वर्णः स्वरोऽधिक वृत्तमिति छन्दोगतो विधिः ॥८८॥
x* नैवातिरिक्तं हीनं वा यत्र संपद्यते क्रमः ।
x* विधानाच्छन्दसामेनां संपदित्यभिसंज्ञिता ॥८९॥
x* यत्रार्थस्य समाप्तिः स्यात् स विराम इति स्मृतः ।
x* पादश्च पद्यते धातोश्चतुर्भाग इति स्मृतः ॥९०॥
x* अग्न्यादि दैवतं प्रोक्तं स्थानं द्विविधमुच्यते ।
x* शरीराश्रयसंभूतं [2]दिगाश्रयमथापि च ॥९१॥
x* शारीरं मन्त्रसंभूतं छन्दोगायत्रसंज्ञितम् ।
x* क्रुष्टे माध्यंदिनं प्रोक्तं त्रैष्टुभं परिकीर्त्यते ॥९२॥

*82–88* (B.XIV. 84-90; G. 806–812; 1022). 1 B. नाम्ना 2 B. adds after this eleven couplets which are spurious. See Introduction. 89-92 (B.XIV. 102b-106; C. 48-52). 1 B. वर्णाः स्वरा विधिर्वृत्तम्. 2 C. जिह्वाश्रयम्.

x* तृतीयसवनञ्चापि शीर्पण्यं जागतं हि यत् ।
x* [1]ह्रस्वदीर्घप्लुतैश्चैव त्रिविधञ्चाक्षरं स्मृतम् ॥९३॥
x* श्वेतादयस्तथा वर्णा विज्ञेयाश्छन्दसामिह ।
x* तारश्चैव हि मन्द्रश्च मध्यमस्त्रिविधः स्वरः ॥९५॥
x* ध्रुवाविधाने चैवास्य संप्रवक्ष्यामि लक्षणम् ।
x* [2]विधिः कालकृतश्चैव तथैवार्थकृतो भवेत् ॥९६॥
x* [3]वृत्तमर्धसमं चैव विषमं सममेव च ।
x* [4]छन्दसो यस्य [5]पादः स्याद्धीनो वाऽधिक एव वा ॥९७॥
x* [6]वृत्तं निवृदिति प्रोक्तं [7]भूरुक् चेति द्विजोत्तमाः ।
x* अक्षराभ्यां यदा द्वाभ्यामधिकं हीनमेव वा ॥९८॥
x* तच्छन्दो नामतो ज्ञेयं स्वराडिति विराडपि ।
x* सर्वेषामेव वृत्तानां तज्ज्ञैर्ज्ञेया गणास्त्रय[1] ॥९९॥
x* दिव्यो दिव्येतरश्चैव दिव्यमानुष एव च ।
x* गायत्र्युष्णिगनुष्टप् च बृहती पंक्तिरेव च ॥१००॥
x* त्रिष्टुप् च जगती चैव दिव्योऽयं प्रथमो गणः ।
x* तथातिजगती चैव शाकरी चातिशाकरी ॥१०१॥
x* अष्टिरत्यष्टिरपि च धृतिश्चातिधृतिर्गणः ।
x* कृतिश्च प्रकृतिश्चैव ह्याकृतिर्विकृतिस्तथा ॥१०२॥
x* संकृत्यभिकृती चैव उत्कृतिर्दिव्यमानुषः ।[2]
x* गुरुलघ्वक्षराणीह सर्वछन्दस्सु दर्शयेत् ॥१०३॥

93-99 (B XIV. 107-112; C. 53-58a ; 91b) 1 C ह्रस्वदीर्घस्तुतै॰. 2 C. विधिकाल॰, B विधिगणकृत॰. 3 C. वृत्तमर्धवृत 4 C छन्दसी यस्य. 5 B पादे स्याद्धीनं वाधिकमेव वा 6 C. अक्षरं तन्निवृत् प्रोक्तं 7 B. भुरुक् चेति द्विजातिभि, C गुरू कैश्चित् द्विजोत्तमाः 100-103 (B XIV. 113-116a; C. 92-95a) 1 B त्रिकाः 2 C adds 22 and a half ślokas (95b-117); Corresponding passages in B. are 92-97a and 116b-132. These are spurious. See Introdution

x* इति छन्दांसि [1]यानीह मयोक्तानि द्विजोत्तमाः ।
x* [2]वृत्तान्ये[तानि] नाट्येऽस्मिन् प्रयोज्यानि निबोधत ॥१०४॥

इति भारतीये नाट्यशास्त्रे वाचिकाभिनये च्छन्दोविभागो नाम
पञ्चदशोऽध्यायः ।

104 (B. XIV. 133, C 118-119) 1 C. जातानि 2 C. घ्_वान्येतेषु B वृतान्येतेषु

## षोडशोऽध्यायः

[1]आद्ये पुनरन्त्ये द्वे द्वे गुरुणी चेत् ।
वृत्तं तनुमध्या गायत्रसमुत्था ॥१॥

यथा—[2]सन्त्यक्तविभूषा भ्रष्टाञ्जननेत्रा ।
[3]हस्तार्पितगण्डा किं त्वं तनुमध्या ॥२॥

लघुगण [4]आद्यो भवति चतुष्के ।
गुरुयुगमन्ते मकरकशीर्षा ॥३॥

यथा—स्वयमुपयान्तं भजसि न कान्तम् ।
भयकरि किं त्वं मकरकशीर्षा ॥४॥

षडक्षरकृते पादे लघु यत्र द्वितीयकम् ।
शेषाणि तु गुरूणि स्युः मालिनी सा मता यथा[1] ॥५॥

यथा—[1]स्नानगन्धस्रग्भिरेखभूषायोगैः ।
व्यक्तमेवैषा त्वं मालिनी प्रख्याता ॥६॥

* द्वितीयं पञ्चमं चैव लघु यत्र प्रतिष्ठितम् ।
* शेषाणि च गुरूणि स्युर्मालती नाम सा यथा[1] ॥७॥

यथा—* शोभते बद्धया षट्पदाविद्धया ।
* मालतीमालया मानिनी लीलया ॥८॥

द्वितीयं च चतुर्थं च पञ्चमं च यदा लघु ।
यस्याः सप्ताक्षरे पादे सा ज्ञेया तूद्धता यथा[1] ॥९॥

1-4 (B.XV. 2-5; C. 2-5). 1 B C practically repeat before this the last couplet of XV. 2 C. सन्त्यक्त भूषणा 3 C. हस्तार्पितवक्त्रा किंचित्तनुमध्या 4 B आदौ. 5-6 (B.XV. 7-8, C. 6-7). 1 B स्नानगन्धाधिक्यैः. 7-8 (B.XV. 9-10) 1 C om. 7-8 9-10 (B XV. 11, 13; C 8-9). 1 B. कुन्तकृताङ्ग.

यथा—'दन्तघातकृताङ्कं व्याकुलालकशोभम्।
शंसतीव तवास्य ²निर्भरं रतयुद्धम् ॥१०॥

आदौ द्वे निधने चैव गुरुणी यत्र वै सदा।
पादे सप्ताक्षरे ज्ञेया सा तु भ्रमरमालिका ॥११॥

यथा—नानाकुसुमचित्रे प्राप्ते सुरभिमासे।
पश्य भ्रमति ¹पुष्पे मत्ता भ्रमरमाला ॥१२॥

आद्यं तृतीयमन्त्यं च पञ्चमं तथा।
गुरूण्यष्टाक्षरे पादे ¹सिंहलीलेति सा स्मृता ॥१३॥

यथा—यत्त्वया ह्यनेकभावाच्चेष्टितं रतं सुगात्रि।
तन्मनो मम प्रविष्टं वृत्तमत्र ²सिंहलीलम् ॥१४॥

चतुर्थं च द्वितीयं च षष्ठमष्टममेव च।
गुरूण्यष्टाक्षरे पादे ¹वदन्ति मत्तचेष्टितम् ॥१५॥

यथा—²मदावघूर्णितेक्षणं विलम्बितालकाकुलम्।
असंस्थितैः पदैः प्रिया करोति मत्तचेष्टितम् ॥१६॥

अष्टाक्षरकृते पादे सर्वाण्येव भवन्ति हि।
गुरूणि यस्मिन् सा नाम्ना ¹विद्युल्लेखेति संज्ञिता ॥१७॥

यथा—²सान्द्राम्भोभिर्नानाम्भोदैः श्यामाकारैर्व्याप्ते व्योम्नि।
आदित्यांशुस्पर्धिन्येषा दिक्षु भ्रान्ता ³विद्युल्लेखा ॥१८॥

10 (B XV. 11, 13 ; C. 8-9). 2 Ch. युद्धमुद्धत-वेशम्। 11-12 (B. XV. 14, 16 ; C. 10-11). 1 B. मत्ता कान्ते. 13-14 (B XV. 17-19 ; C. 12-13). 1 B. सिंहलेखेति 2 B सिंहलेखम्. 15-16 (B XV. 20, 22 ; G. 14-15). 1 C. यतत्. 2 B चरावघूर्णितेक्षणं. 17-18 (B. XV. 93,. 25 ; C. 16-17). 1 B. विद्युन्मालेति कीर्तिता. 2 B. साम्भोभारैरानर्दद्भिः . श्यामाम्भोदैः . 3 B. विद्युन्माला.

* [1]पञ्चमं सप्तमं चान्त्यं गुरु पादेऽष्टके तथा ।
* छन्दोज्ञैर्ज्ञेयमेतत्तु वृत्तं चित्तविलासितम् ॥१९॥
यथा—* स्मितवशविप्रकाशैर्दशनपदैरमीभिः ।
* वरतनु पूर्णचन्द्रं तव मुखमावृणोति ॥२०॥

नवाक्षरकृते पादे त्रीणि स्युर्नैधनानि तु ।
गुरूणि यस्यां सा नाम्ना [1]भवेन्मधुकरी यथा ॥२१॥
यथा—कुसुमितमभिपश्यन्ती विविधतरूणैश्छन्नम् ।
[2]वनमनिलसुगन्धाढ्यं भ्रमति मधुकरी हृष्टा ॥२२॥

दशाक्षरकृते पादे त्रीण्यादौ त्रीणि नैधने ।
यस्या गुरूणि सा ज्ञेया पङ्क्तिरुत्पलमालिनी ॥२३॥
यथा—[2]अस्मिंस्ते भ्रमरनिभे कान्ते नानारत्नरचितभूषाढ्ये ।
शोभामावहति शुभा मूर्ध्नि प्रोत्फुल्ला कुवलयमालेयम् ॥२४॥

द्वितीयं च चतुर्थं च षष्ठमष्टममेव च ।
ह्रस्वं दशाक्षरे पादे यत्र सा शिखिसारिणी ॥२५॥
यथा—नैव तेऽस्ति सङ्गमो मनुष्यै[1]र्नास्ति कामभोगचिह्नमन्यत् ।
गर्भिणीव दृश्यसे ह्यनार्ये किं मयूरसारिणी [2]त्वमेव ॥२६॥

[1]प्रथमं च चतुर्थं च सप्तमं दशमं गुरु ।
[2]अन्त्यं च त्रैष्टुभे पादे यत्र स्याद् दोधकं तु तत् ॥२७॥

19-20 (B XV 26-28) 1 C om. the two 21-22 (B.XV. 29, 31, C. 18-19). 1 B ज्ञेया. 2 C. नवनलिनसुगन्धाढ्यं, B. वनमतिशयगन्धाढ्यं we with Bd. 23-24 (B.XV. 31, 33; 20 22) 1 B उत्पलमालिका. 2 B अस्मिंस्ते शिरसि वदा कान्ते वैडूर्यस्फटिकसुवर्णाढ्ये । शोभा सा न वहति वा बद्धा सुश्लिष्टा कुवलयमालेयम्. 25-26 (B XV. 34, 36, G 22-23) 1 B नापि 2 B. त्वमेवं 27 28 (B.XV. 37, 39; G 24-25) 1 B. आद्य चतुर्थमन्त्यं. 2 B. गुरुणि.

यथा—प्रस्खलितप्रपदप्रविचारं मत्तविघूर्णितगात्रविनामम् ।
पश्य विलासिनि कुञ्जरमेनं [3]दोधकवृत्तमयं प्रकरोति ॥२८॥

आदौ द्वे पंचमं चैवाप्यष्टमं नैधनं तथा ।
गुरूण्येकादशे पादे यत्र तन्मोटकं यथा ॥२९॥

यथा—एषोऽम्बुदनिःस्वनतुल्यरवः [1]क्षीबः स्खलमानविडम्बगतिः ।
श्रुत्वा घनगर्जितमद्रितटे वृक्षान् प्रति मोटयति द्विरदः ॥३०॥

नवमं सप्तमं षष्ठं तृतीयं च [1]भवेल्लघु ।
[2]यत्रैकादशके पादे इन्द्रवज्रेति सा यथा ॥३१॥

यथा—[3]त्वं दुर्निरीक्ष्या [4]दुरितस्वभावा दुःखैकसाध्या कठिनैकभावा ।
सर्वास्ववस्थासु च कामतन्त्रे योग्यासि किं वा बहुनेन्द्रवज्रे ॥३२॥

एभिरेव तु संयुक्ता लघुभिस्त्रैष्टुभी यदा ।
उपेन्द्रवज्रा विज्ञेया लघ्वादाविह केवलम् ॥३३॥

यथा—[1]श्रिया च वर्णेन विशेषणेन स्मितेन कान्त्या सुकुमारभावात् ।
अमी गुणा रूपगणानुरूपा भवन्ति ते किं त्वमुपेन्द्रवज्रा ॥३४॥

आद्यं तृतीयमन्त्यञ्च सप्तमं नवमं तथा ।
गुरूण्येकादशे पादे यत्र सा तु रथोद्धता ॥३५॥

यथा—किन्त्वया सुभट [1][धुर्य]-वर्जितं नात्मनो न सुहृदां प्रियं कृतम् ।
यत्पलायनपरायणस्य ते याति धूलिरधुना रथोद्धता[2] ॥३६॥

28 (B.XV. 87, 39 ; G. 24-25). 3 C. व्रतगतिं. Mss कुचरमेनं. 29-30 (B.XV. 40, 41 ; G. 26-27). 1 C. क्षणः. 31-32 (B XV. 42, 43 ; G. 28-29). 1 C. लघून्यथ. 2 B. एकादशाक्षरे. 3 C चन्द्र' निरीक्ष्या. 4 B. दुरतिक्रमादा. 33-34 (B. XV. 44, 45 ; C. 30 31) 1 B. प्रिये श्रिया वर्णे०. 35-36 (B.XV. 46-47 ; G. 32-33). 1 B. C वर्जितं नात्मनो, Bb वर्जितात्मना,. 2 B. adds another example किं त्वया कुमतिसङ्गया सदा नाङ्गनेव सुहृदां प्रियं कृतम् ।मद्गृहाद्घनरोषकम्पिता याति तूर्णमबला रथोद्धता.

आद्यं तृतीयमन्त्यञ्च सप्तमं [1]तथा ।
[2]गुरूणि त्रैष्टुभे पादे यत्र सा स्वागता यथा ॥३७॥

यथा—अद्य मे स फलमायतनेत्रे जीवितं मदनसंश्रितभावम् ।
आगतासि[3]सदनं मम यस्मात् स्वागतं तव वरोरु निषीद ॥३८॥

षष्ठञ्च नवमं चैव [1]लघु स्यात् त्रैष्टुभे यदि ।
[2]चतुर्भिराद्यैर्विच्छेदः सा ज्ञेया शालिनी यथा ॥३९॥

यथा—[3]शीलभ्रष्टे निर्गुणे याऽप्रकोपा
लोके धैर्यादप्रियं न ब्रवीषि ।
[4]आर्यं शीलं साध्वि हे तेऽनुवृत्तं
[5]माधुर्यात्त्वा सर्वदा शालिनी त्वम् ॥४०॥

षष्ठं तृतीयं नवमं गुरुण्यन्त्यमथापि वा ।
यत्र तु द्वादशे पादे तज् ज्ञेयं तोटकं बुधैः ॥४१॥

यथा—किमिदं कपटाश्रयदुर्विषहं [1]बहुशाठ्यमथोल्बणरूक्षकथम् ।
स्वजनप्रियसज्जनभेदकरं ननु तोटकवृत्तमिदं कुरुषे ॥४२॥

आद्यं तृतीयमन्त्यं च पञ्चमं षष्ठमेव च ।
तथोपान्त्यं जगत्यां च गुरु चेत् कुमुदप्रभा[1] ॥४३॥

यथा—कुमुदनिभा त्वं कामबाणविद्धा किमसि नतभ्रूः शीतवातदग्धा ।
[2]मृदुनलिनीवापाण्डुवक्त्रशोभा [3]कथमसि जाता अग्रतः सखीनाम् ॥४४॥

37-38 (B XV. 49-50 , G 34-35) 1 B गुरु. 2 B यस्यास्तु. 3 B. भवनं. 39-40 (B XV. 51-52 , G. 36-37). 1 B लघूनी. 2 B गुरुण्यन्यानि पादे. 3 B दुःशीलं वा निर्गुणं चापरं वा 4 B वलाच्छीलं साधुहेतो संवृत्तं 5 B C. माधुर्यात् स्यात् सर्वथा ; we with Bd. 41-42 (B.XV. 53, 55; C 38-39). 1 C. बहुगर्जमिवोद्गण. 43-44 (B.XV. 56, 60 ; C. 40-41). 1 C. 40-41) 1 C. gives the def. with triads only. B. gives an add. ex. मन्मथेन विद्धा सललितभावा नृत्तगीतयोगा प्रविकशिताक्षी । निन्द्यमय किं त्वं विगलितशोभा चन्द्रपादयुक्ता कुमुदवती च

द्वादशाक्षरके पादे सप्तम दशमं लघु ।
आदौ [1]पञ्चाक्षरे छेदश्चन्द्रलेखेति सा यथा ॥४५॥

वक्त्रं सौम्यं ते पद्मपत्रायताक्षं
[2]कामस्यायासं [3]सुभ्रुवोश्चावभासम् ।
कामस्यापीदं काममाहर्तुकाम
[4]कान्त्या त्वं कान्ते चन्द्रलेखेव भासि ॥४६॥

तृतीयमन्त्य नवमं पञ्चमञ्च यदा गुरु ।
द्वादशाक्षरके पादे [1]तदा स्यात् प्रमिताक्षरा ॥४७॥

यथा—[2]स्मितभाषिणी ह्यचलाऽपरुषा
निभृतापवादविमुखी सततम् ।
[3]यदि कस्यचिद्युवतिरस्ति सुधा
प्रमिताक्षरा स हि पुमाञ्जयति ॥४८॥

द्वितीयमन्त्यं दशमं चतुर्थं पञ्चमाष्टमे ।
गुरूणि द्वादशे पादे वंशस्थं जगती तु सा ॥४९॥

यथा—न मे प्रिया [1]यद् बहुमानवर्जिता
[2]कृताप्रिया तैः परुषाभिभाषणैः ।
तथा च पश्याम्यहमद्य [3]सा ध्रुवं
[4]क्षणेन वंशस्थगतिं करिष्यति ॥५०॥

चतुर्थमन्त्यं दशमं सप्तमञ्च यदा गुरु ।
भवेद्धि जागते पादे तदा स्याद्धरिणप्लुता ॥५१॥

45-46 (B XV. 61-62 ; C. 42-43). 1 B. पञ्चाक्षरच्छेद. 2 C. कामसामासं. 3 B. सुभ्रुनोचस्रद्दानम्. 4 B. कान्ते कान्त्या त्वं. 47-48 (B XV. 63-64 ; C. 44-45). 1 B. यत्र सा. 2 C. स्मितहासिनी. 3 B अपि. 49-51 (B XV. 65, 67-68 ; C. 46-48). 1 B त्वं बहुमानवर्जितं 2 C, कृता प्रिये ते. B प्रियं प्रिया ते. 3 Bbh. मा ध्रुवं, B विग्रहं, C. विक्रमं 4 Bbh. क्षणेन, B.C. ध्रुवं हि.

यथा— परुषवाक्यकशाभिहता त्वया
भयविलोकनपार्श्वनिरीक्षणा ।
वरतनुः प्रततप्लुतसर्पणै-
रनुकरोति गतैर्हरिणप्लुतम् ॥५२॥

सप्तमं नवमञ्चान्त्यमुपान्त्यं च यदा गुरु ।
द्वादशाक्षरके पादे [1]कामदत्तेति सा स्मृता ॥५३॥

यथा—करजपदविभूषिता यथा त्वं
सुदति दशनविक्षताधरा च ।
गतिरपि चरणावलग्नमन्दा
त्वमसि [2]मृगगमाक्षि [3]कामदत्ता ॥५४॥

आद्यं चतुर्थं दशमं सप्तमं च यदा लघु ।
द्वादशाक्षरके पादे अप्रमेया तथाहि सा ॥५५॥

यथा—न ते काचिदन्या समा दृश्यते स्त्री
[1]गुणैर्या द्वितीया तृतीयापि चास्मिन् ।
[2]ममेयं मतिर्लोकमालोक्य सर्वं
जगत्यप्रमेयासि [4]सृष्टा विधात्रा ॥५६॥

द्वितीयं पञ्चमं चैव अष्टमैकादशं तथा ।
पादे यत्र लघूनि स्युः पद्मिनी नाम सा यथा ॥५७॥
देहतोयाशया वक्त्रपद्मोज्ज्वला
नेत्रभृङ्गाकुला दन्तहंसैः [1]स्मिता ।

52 (B.XV. 69 ; C, 49) 53-54 (B.XV. 70-71 ; C. 50-51). 1 C काममत्ता. 2 B. मृगनिभाक्षि 3 C. काममत्ता. 55-56 (B.XV. 72-73 ; G 52-53). 1 B पादे तु जागते. 2 B नृलोके विशिष्य गुणैरद्वितीयैः 3 B विलोक्या गुणाग्र्यान् समाहृत्य सर्वान् 4 B. दृष्टा 57-58 (B.XV. 74, 76 ; C 54-55). 1 B. दन्तहंसस्मिता, C दन्तहंसैः स्थिता.

[2]केशपतच्छदा चक्रवाकस्तनी
पद्मिनीव प्रिये भासि मे सर्वदा[3] ॥५८॥

आदौ षट् दशमं चैव पादे यत्र लघून्यथ ।
शेषाणि तु गुरूणि स्युर्जगते [1]पटुसंज्ञिता ॥५९॥

यथा—उपवनसलिलानां बालपद्मैः-
भ्रमरपरभृतानां कण्ठनादैः ।
[2]समदगतिविलासैः कामिनीनां
कथयति [3]पटुवृत्तं पुष्पमासः ॥६०॥

[1]द्वितीयान्त्ये चतुर्थश्च नवमैकादशे गुरु ।
विच्छेदोऽतिजगत्याश्च चतुर्भिः सा प्रभावती ॥६१॥

यथा—कथन्त्विमं कमलविशाललोचने
गृहं घनैः पिहितकरे [2]निशाकरे ।
अचिन्तयन्त्यभिनववर्षविद्युत-
स्त्वमागता सुतनु यथा प्रभावती ॥६२॥

त्रीण्यादावष्टमोपान्त्ये दशमं [1]नैधने तथा ।
गुरूण्यतिजगत्यां तु त्रिभिच्छेदैः [2]प्रहर्षणी ॥६३॥

यथा—भावस्थैर्मधुरकथैः सुभाषितैस्त्व
साटोपस्खलितविलम्बितैर्गतैश्च ।
[3]नानांगैर्हरसि मनांसि कामुकानां
सुव्यक्तं [4]ह्यसि जगति [5]प्रहर्षणीव ॥६४॥

2 C. केशपाशच्छदा. see B. 77. 3 B. adds a variant of this (B. 77). 58 (B.XV. 74-76 ; C. 54-55). 59-60 (B.XV. 78, 80 ; C. 56-57). 1 BC. पुट. 2 B. मदनमदविलासैः. 3 BC. पुट. 61-62 (B.XV. 81-82 ; C. 58-59). 1 C द्वितीयश्च. 2 B. दिवाकरे. 63-64 (B.XV. 83-34; C. 6061). 1 C. नैधन, B. नैधनद्वयम्. 2 B. प्रहर्षिणी. 3 B. शोभाढ्यैः. B. ह्यतिजगति. 4 B. प्रहर्षिणी.

षष्ठञ्च सप्तमञ्चैव दशमैकादशं लघु ।
त्रयोदशाक्षरे पादे ज्ञेयं मत्तमयूरकम् ॥६५॥

यथा—विद्युन्नद्धा सेन्द्रधनुर्द्योतितदेहा[1]
वातोद्धूता श्वेतबलाकाकृतशोभाः ।
एते मेघा गर्जितनादोज्ज्वलचिह्नाः
प्रावृट्कालं [2]मत्तमयूरं कथयन्ति ॥६६॥

आदौ द्वे च चतुर्थञ्चाप्यष्टमैकादशे गुरु ।
अन्त्योपान्त्ये च [1]शक्वर्या वसन्ततिलका यथा ॥६७॥
चित्रैर्वसन्तकुसुमैः कृतकेशहस्ता
स्रग्दाममाल्यरचना सुविभूषिताङ्गी ।
[2]नागावतंसकविभूषितकर्णपाली
साक्षाद्वसन्ततिलकेव विभाति नारी ॥६८॥

पंचादौ शक्करीपादे गुरूणि त्रीणि चान्ततः ।
पंचाक्षरादौ च यतिरसंबाधा तु सा स्मृता ॥६९॥

यथा—[1]मानी लोकज्ञः श्रुतबलकुलशीलाढ्यो
यस्मिन् सम्मानं न सदृशमनुपश्येद्धि ।
गच्छेत्तं त्यक्त्वा द्रुतगतिरपरं देशं
कीर्णो नानार्थैरवनिरियमसंबाधा ॥७०॥

[1]आदौ चतुर्गुरूणि स्युर्दशमैकादशे तथा ।
अन्त्योपान्त्ये तु शक्वर्याः पादे तु शरभा यथा ॥७१॥

65-66 (B.XV. 85-86, C. 62-63). 1 B. ०धनूरञ्जितदेहा. 2 C. मत्तमयूरा.. 67-68 (B. XV. 87-88; C 64-65). 1 B. शक्कर्यो. 2 B. नानावर्तमविभूपितकर्णपाशा, C. ०भूषितगण्डपाली. 69-70 (B.XV. 89-90; C. 66 67) 1 C. मानालोक्ज्ञः सुतबल०. 71 (B.XV. 91; C. 68) 1 B. चत्वार्यादौ.

एषा कान्ता व्रजति [1]ललितं वेपमाना
[2]गुल्मैश्छन्नं [3]वनमुपगतैः संप्रविद्धम् ।
हा हा कष्टं किमिदमिति नो वेद्मि मूढो
व्यक्तं [4]क्रोधाच्छरभललितं कर्तुकामा ॥७२॥

आदौ षट् दशमं चैव लघूनि स्युस्त्रयोदश ।
[1]यत्रातिशाक्करे पादे ज्ञेया नान्दीमुखी तु सा ॥७३॥

यथा—न खलु तव कदाचित्क्रोधताम्रायताक्षं
भ्रुकुटिचलितभङ्गं दृष्टपूर्वं मयास्यम् ।
किमिह बहुभिरुक्तैर्या ममेच्छा हृदिस्था
त्वमसि मधुरवाक्या देवि नान्दीमुखीव ॥७४॥

आद्यं षष्ठं चतुर्थं च नैधनं च गुरूण्यथ ।
षोडशाक्षरके पादे गजविलसितं तु तत् ॥७५॥

यथा—[1]तोयधरः [2]सुधीरघनपट्टुपटहरवः
[3]सर्जकदम्बनीपकुटजकुसुमसुरभिम् ।
कन्दलसेन्द्रगोपकरचितमवनितलं
वीक्ष्य करोत्यसौ वृषभगजविलसितकम् ॥७६॥

आद्यात् पराणि पञ्चैव द्वादशं सत्रयोदशम् ।
अन्त्ये द्वे यत्र दीर्घाणि प्रवरं ललितं हि तत् ॥७७॥

यथा—नखालीढं गात्रं [1]दशनविहतं चोष्ठगण्डं
शिरः पुष्पोन्मिश्रं प्रविलुलितकेशालकान्तम् ।

72 (B XV. 92; C. 69) 1 C. ललिता 2 C. गुल्मच्छन्नं. 3 B. वनमभिनवै. 4 B. कान्ते शरभललितात्व करोषि. 73-74 (B. XV. 93-94, C 70-71). 1 C. यत्र पञ्चदशे 75-76 (B XV. 95, 97, C 42-73). 1 B तोयधरै. 2 B. पट्टुपटहरवैः. 3 Mss. सुरभिः 77-78 (B XV 98, 100, C. 74-75). 1 C. दशननिहितं, B दशनखचितं, Bdh दशनविहतं.

[2]गतिः खिन्ना चैवं वदनमपि संभ्रान्तनेत्र-
मद्धो श्लाघ्यं वृत्तं प्रवरललितं [3]कामचेष्टम् ॥७८॥

आद्यात्पराणि पञ्चैव द्वादशं सत्रयोदशम्।
अन्त्यं ससदशे पादे शिखरिण्यां गुरूणि च ॥७९॥

यथा—महानद्याभोगे[1] पुलिनमिव ते भाति जघनं
तथास्यं नेत्राभ्यां भ्रमरसहितं पङ्कजमिव।
[2]तनुस्पर्शश्चायं सुतनु सुकुमारो न परुषः
स्तनाभ्यां तुङ्गाभ्यां शिखरिणिनिभा भासि [3]दयिते ॥८०॥

यत्र पञ्च लघून्यादौ त्रयोदशचतुर्दशे।
षोडशैकादशे चैव तत्स्यात् वृषभचेष्टितम् ॥८१॥

यथा—[1]जलजनिनदं [2]श्रुत्वा गर्जन्मदोच्चयदर्पितो
विलिखति महीं [3]श्रृङ्गाक्षेपैर्मृगः प्रतिनर्द्य च।
स्वयुवतिवृतो गोष्ठाद् गोष्ठं प्रयाति च निर्भयो
वृषभललितं चित्रं वृत्तं करोति च शाड्वले ॥८२॥

चत्वार्यादौ च दशमं गुरु यत्र त्रयोदशम्।
चतुर्दशं तथान्त्ये द्वे चैकादशमथापि च ॥
यदा ससदशे पादे शेषाणि च लघून्यथ।
भवन्ति यस्मिन् सा ज्ञेया श्रीधरा नामतो यथा[1] ॥८३॥
स्नानैश्चूर्णैः सुखसुरभिभिर्गण्डलेपैश्च धूपैः[2]
पुष्पैश्चान्यैः शिरसि रचितैर्वस्त्रयोगैश्च तैस्तैः।

2 C. गतिर्मन्दा. 3 C. कामवेषम्. 78 (B.XV. 98, 100 ; C. 74-75)
79-80 (B XV. 101, 103 , C 76-77) 1 B. भोग. 2 B. ०स्पर्शश्चाय.
3 B. वनिते 81-82 (B. XV. 104, 106 , C. 78-79). 1 B. जलधररव.
2 B. श्रुत्वा मदोच्छ्रय 3 B. शृङ्गैर्वप., C, शृङ्गैर्मुहु. 83-84 (B.XV.
107-108, 110 ; C. 80-81). 1 C. om. this def. 2 B. गन्धवासैश्च धूपै.

नानारत्नैः [3]कनकखचितैरङ्गसम्भोगसंस्थै-
र्व्यक्तं कान्ते कमलनिलया [4]श्रीधरेवातिभासि ॥८४॥

आद्यं चतुर्थं षष्ठं च दशमं नैधनं गुरु।
वद्वंशपत्रपतितं दशभिः सप्तभिर्यतिः ॥८५॥

यथा—एष गजोऽद्रिमल्लकतटे कलभपरिवृतः
क्रीडति वृक्षगुल्मगहने कुसुमभरनते।
मेघरवं निशम्य [1]मुदितः पवनजवसमः
सुन्दरि वंशपत्रपतितं पुनरपि कुरुते ॥८६॥

द्वितीयमन्त्यं षष्ठं चाप्यष्टमं द्वादशं तथा
चतुर्दशं पञ्चदशं पाद सप्तदशाक्षरे।
भवन्ति यत्र दीर्घाणि शेषाणि च लघून्यथ
विलम्बितगतिः सा तु विज्ञेया नामतो यथा ॥८७॥
विघूर्णितविलोचना [1]पृथुविघूर्णहारा पुनः
प्रलम्बरसना चलत्स्खलितपादमन्दक्रमा[2]।
न मे प्रियमिदं जनस्य बहुमानरागेण यन्-
मदेन विवशा विलम्बितगतिः कृता त्वं प्रिये ॥८८॥

पञ्चादौ पञ्चदशकं द्वादशैकादशे गुरु।
चतुर्दशं यथाऽन्त्ये द्वे चित्रलेखा [1]बुधैः स्मृता ॥८९॥
यथा—नानारत्नाढ्यैर्बहुभिरधिकं भूषणैरङ्गसंस्थै-
र्नानागन्धाढ्यैर्मदजननैरङ्गरागैर्विचित्रैः[1]।
केशैः [2]स्नानार्द्रैः कुसुमरचितैर्वस्त्ररागैश्च तैस्तैः
कान्ते संक्षेपात् किमिह बहुना चित्रलेखेव भासि ॥९०॥

3 C. कनकरचितै॰. 4 Bb. श्रीधरा त्वं विभासि, Bp. श्रीधरेवावभासि. *85-86 (B.XV. 111-112 ; C. 82-93).* 1 C. पवनजवरयात्. *87-88 (B. XV. 113-114. 116 ; C. 84-85).* 1 C. पृथुविघूर्णहारा. 2 B. मन्दक्रमा. *89-90 (B.XV. 117-119 ; C. 87-87).* 1 B. युतौ. 2 B. स्नानार्द्रैः.

अन्त्यं सप्तदशं चैव षोडशं च चतुर्दशम् ।
[1]द्वादशं सानुगं चैव षष्ठमष्टममेव च ॥९१॥
त्रीण्यादौ च गुरूणि स्युर्यस्मिंस्त्वेकोनविंशके ।
पादे लघूनि शेषाणि [2]शार्दूलक्रीडितं तु तत्[5] ॥९२॥
यथा—नानाशस्त्रशतघ्नितोमरहताः प्रभ्रष्टसर्वायुधाः
[3]निर्भिन्नोदरबाहुवक्त्रनयना [4]निर्भर्त्सिताः शत्रवः ।
धैर्योत्साहपराक्रमप्रभृतिभिस्तैस्तैर्विचित्रैर्गुणै-
र्वृत्तं ते रिपुघाति भाति समरे शार्दूलविक्रीडितम् ॥९३॥

चत्वार्यादौ च षष्ठं च सप्तमं सचतुर्दशम् ।
तथा पञ्चदश चैव षोडशं नैधनं तथा ॥९४॥
एतानि तु गुरूणि स्युः शेषाणि तु लघून्यथ ।
पादे यत्र कृतौ ज्ञेया नाम्ना सुवदना तु सा ॥९५॥
यथा—नेत्रे [1]लीलालसे ते कमलदलनिभे [2]भ्रूचापविहिते
गण्डोष्ठं पीनमध्यं [3]समसहितघना स्निग्धाश्च दशनाः ।
[4]कर्णावंसप्रलम्बौ चिबुकमपि [5]नतं घोणा सुरुचिरा
[6]सर्वस्मिन् मर्त्यलोके वरतनु [7]विहितास्येका सुवदना ॥९६॥

चत्वार्यादौ च षष्ठं च सप्तमं च चतुर्दशम् ।
अष्टादशं सप्तदशं तथा पञ्चदशं पुनः ॥९७॥
अन्त्योपान्त्ये गुरूण्यत्र लघून्यन्यानि सर्वदा ।
एकविंशतिके पादे स्रग्धरा नाम सा यथा ॥९८॥

91-93 (B XV. 119-120, 122; C. 88-89). 1 B. त्रयोदशं द्वादशं. C. द्वादशं सानुगं 2 C तच्छार्दूलविक्रीडितं 3 B. निर्भिन्नोदरपादबाहुवदना. 4 B. निर्गाशिता. 5 B. adds another def. 94-96 (B.XV. 124-125. 127; C. 90-93). 1 B. लालालसान्ते 2 B. भ्रूचापविनते. 3 C. समसहितघन. 4 C. कर्णौ पार्श्वावलम्बौ. 5 C. नतौ. 6 B स्यक्तं त्वं. 7 C. विदितास्येका. 97-99 (B.XV. 128-229,131, C. 94-96)

यथा—चूताशोकारविन्दैः कुरबकतिलकैः कर्णिकारैः शिरीषैः
पुन्नागैः पारिजातैर्बकुलकुवलयैः किंशुकैः सातिमुक्तैः।
एतैर्नानाप्रकारैरधिकसुरभिभिर्विप्रकीर्णैश्च तैस्तै-
र्वासन्तैः पुष्पवृन्दैर्नरवर वसुधा स्रग्धरेवाद्य भाति[1] ॥९९॥

चतुर्थमाद्यं षष्ठं च दशमं द्वादशं तथा।
षोडशाष्टादशे चैव नैधनं च गुरूण्यथ ॥१००॥
द्वाविंशत्यक्षरे पादे शेषाणि तु लघूनि च।
भवन्ति यत्र तज्ज्ञेयं मद्रकं नामतो यथा ॥१०१॥
[1]उद्यतमेकहस्तचरणं [2]द्वितीयकररेचकं [3]सुविनतं
वदनमृदङ्गवाद्यमधुरं [4]विचित्रकरणान्वितं बहुविधम्।
मद्रकमेतदद्य [5]सुभगे विदग्धगतिचेष्टितैः सललितै-
र्नृत्यसि विभ्रमाकुलपदं [6]वरोरु ललितक्रियं समरसम् ॥१०२॥

[1]एकादशं सप्तदशं सप्तमं सत्रयोदशम्।
[2]अन्त्यमेकोनविंशं च पञ्चमं च गुरूण्यथ ॥१०३॥
शेषाणि तु लघूनि स्युर्विकृतौ चरणेषु च।
वृत्तं तदश्वललितं विज्ञेयं नामतो यथा ॥१०४॥
[3]रथहयनागयोधपुरुषैः सुसंकुलमलं बलं समुदितं
शरशतशक्तिकुन्तपरिघासियष्टिविवृतं[4] बहुप्रहरणम्।
[5]रिपुशतमुक्तशस्त्रवभीतशङ्कितभटं भयाकुलदिशं
कृतमभिवीक्ष्य संयुगमुखे [6]समीप्सितगुणं [7]त्वयाश्वललितम् ॥१०५॥

99 (B XV. 128-29, 131; C. 94-96) 100-102 (B XV. 132-133, 135; C 97-99) 1 B. उत्प्लुत. 2 B ०कररेचितं. 3 C. सललितं. 4 B. विचित्रकरणानुगं. 5 B. सुभगे. 6 B. विविक्तरसभावितं शशिमुखि. 103-105 (B.XV. 136-137, 139; C. 100-102). 1 B. transposes the two hem. 2 *Ibid*. 3 B. विविधतुरङ्गनागरथयोध०. 4 B. ०यष्टिविततं. 5 C. ०रव-शङ्कितभटं भिन्नहतशत्रुनाशि भयाकुलमिदं. 6 B. समर्पितगुणं. 7 C. तदश्व०.

षडादाष्टमं चैव [1]एकादशचतुर्दशे ।
विंशं सप्तदशं चैव त्रयोविंशं तथैव च ॥१०६॥
एतानि तु लघूनि स्युः शेषाणि च गुरूण्यथ ॥१०७॥
[2]चतुर्विंशाक्षरे पादे मेघमालेति सा यथा ॥१०७॥

[3]पवनबलसमाहता [4]तीव्रगम्भीरनादा [5]बलाकावलीमेखला
क्षितिधरसदृशोच्चरूपा महानीलधूमायमानाम्बुगर्भोद्वहा[6] ।
सुरपतिधनुरुज्ज्वलाबद्धकक्ष्या तडिद्द्योतसन्नाहपट्टोज्ज्वला
गगनतलविसारिणी [7]प्रावृषेण्योद्यता मेघमालाधिकं शोभते ॥१०८॥

आद्यं चतुर्थं च तथा पञ्चमं षष्ठमेव च ।
नवमं दशमं चैव अन्त्यं चैव गुरूण्यथ ॥१०९॥
[1]लघून्यन्यानि शेषाणि पादे स्युः पञ्चविंशके ।
वृत्तज्ञैः सा तु विज्ञेया क्रौञ्चपादीति नामतः[2] ॥११०॥

या किल दाक्षं विद्रुतसोमं क्रतुवरमचमसमपगतकलशं
पातितयूपं क्षितचषालं विचयनमसमिधमपशुकमचरुकम् ।
कार्मुकमुक्तेनाशु चकार व्यपगतसुरगणपितृगणमिषुणा
नित्यमसौ ते दैत्यगणारिः प्रदहतु मखमिव रिपुगणमखिलम् ॥१११॥

अष्टावादौ गुरूणि स्युस्तथा चैकोनविंशकं ।
एकविंशं [1]तथा चैव चतुर्विंशं सनैधनम् ॥११२॥
एतानि [2]गुरुसंज्ञानि पादे षड्विंशकाक्षरे ।
यत्र नाम्ना तथा ज्ञेयं तद् भुजङ्गविजृम्भितम् ॥११३॥

106-108 (B.XV, 140-141, 143 ; C, 103-105). 1 B ह्येकादश. 2 B चतुर्विंशतिके. 3 C. ॰समाहता. 4 C. तीव्रनादा. 5 C. ॰ मेखलाशोभिता. 6 B ॰गर्भोद्वता. 7 B. प्रावृषेण्या इट. 109-111 (B.XV. 144-145, 147 ; C, 106-107) 1 B. पञ्चविंशतिके॰ पादे शेषाणि च लघून्यथ. 2 C's ex. is spurious ; see Ag. II p.279 f.n. 3 C. om. this ex. 112-113 (B. XV. 149-150, 152 ; C. 109-110). 1 B. च विज्ञेयं. 2 B. गुरुसङ्ख्यानि.

रूपोपेतां देवैः 'सृष्टां समदगजविलसितगतिं निरीक्ष्य तिलोत्तमां
प्रादक्षिण्यात् 'प्राप्तां द्रष्टुं वहुवदनमचलनयन 'शिरः कृतवान् 'हरः।
दीर्घं निश्वस्यान्तर्दृढं 'स्तनवदनजघनरुचिरां निरीक्ष्य तथा पुनः
'पृष्ठे न्यस्तं देवेन्द्रेण [10]प्रवरमणिगणकवलयं भुजङ्गविजृम्भितम्[11] ॥११४॥

* एतानि समवृत्तानि मयोक्तानि द्विजोत्तमाः।
* विषमार्धसमानां तु पुनर्वक्ष्यामि लक्षणम् ॥११५॥
* यत्र पादास्तु विषमा नानावृत्तसमुद्भवाः।
* ग्रथिताः पादयोगेन तद्वृत्तं विषमं स्मृतम् ॥११६॥
* द्वौ समौ द्वौ च विषमौ वृत्तेऽर्धविषमे तथा।
* सर्वपादैस्तु विषमैर्वृत्तं विषममुच्यते ॥११७॥
* ह्रस्वाद्यमथ दीर्घाद्यं दीर्घं ह्रस्वमथापि वा।
* युग्मौजविषमैः पादैर्वृत्तमर्धसमं स्मृतम् ॥११८॥
* पादे सिद्धे समं सिद्धं विषमं सार्वपादिकम्।
* द्वयोरर्धसमं विद्यादेष [1]छेदस्तु पादशः[2] ॥११९॥
* [1]छेदतस्तु मया [2]प्रोक्तं समवृत्तविकल्पनम्।
* त्रिकैर्विषमवृत्तानां संप्रवक्ष्यामि लक्षणम् ॥१२०॥
* सौ गौ च प्रथमे पादे स्त्रौ लौ चापि द्वितीयके।
* [3]एवं युग्मौजकौ ज्ञेयौ पथ्यावृत्ते त्रिकौ यथा ॥१२१॥

114 (B XV. 149-150, 152, C. 109-110). 4 C सृष्टा 5 C प्राप्ता द्रष्टुं वहुवदननयनसहितं 6 C. शिरस्तु(?)कृतवान्. 7 B. हरिः. 8 C. ०जघनकलिता 9 C. पृष्ठन्यस्ता 10 B ०मणिकनकवलय 11 B, C, add two couplets which are spurious; see R Kavi's note on B. XV. 153-154. 115-119 (B. XV. 155-159; C 114-118) 1 C. भेदस्तु 2 C. adds पादद्वयस्य समसिद्धौ सिद्धमर्धसमं पुनः 120-121 (B. XV 160-162; C. 119-120). 1 C. छेदास्तु ये 2 C. प्रोक्ताः समवृत्तविकल्पिताः. 3 B. युग्मेऽर्धविषमे पादे ज्ञेया पथ्या तु सा त्रिकैः.

* प्रियदैवतमित्रासि [1]प्रियसंबन्धिबान्धवा ।
* [2]प्रियदानरता पथ्या [3]दयिते त्वं प्रियासि मे ॥१२२॥

* म्रौ गौ च प्रथमे पादे यसौ ग्लौ चापि द्वितीयके ।
* रभौ लगौ तृतीये च चतुर्थे तु 'तसौ लगौ' ॥१२३॥

* यथा—[2]नैवाचारो न ते मित्रं न सम्बन्धिगुणक्रिया ।
* सर्वथा सर्वविषमा पथ्या न भवसि प्रिये ॥१२४॥

* [1]अयुजोर्लक्षणं होनद् विपरीतन्तु यत्र तु ।
* पथ्या हि विपरीता सा विज्ञेया नामतो बुधैः ॥१२५॥

* यथा—कृते[च] [2]रमणस्य किं [3]सखि [3]रोषेन तेऽप्यर्थम् ।
* विपरीता[4] न पथ्यासि '[5]त्वं' जडे केन मोहिता ॥१२६॥

* चतुर्थादक्षरादत्र त्रिलघुस्याद्युक्ततः ।
* [1]अनुष्टुप् विपुला सा तु विज्ञेया नामतो यथा ॥१२७॥

* न खल्वस्याः [2]प्रियतमः श्रोतव्य व्याहृतं सस्या ।
* नारदस्य प्रतिकृतिः [4]श्रूयते विपुला ह्रीयम् ॥१२८॥

* विपुला वा युजि ज्ञेया लघुत्वात् सप्तमस्य तु ।
* सर्वत्र [1]सप्तमस्यैव केषाञ्चिद् विपुला तु सा ॥१२९॥

122 (B XV. 163, 121). 1 C. प्रियदैवत. 2 C. ०दानवरा. 3 C यथपि 123-124 (B. XV. 165-65 ; C. 133-134). 1 This is spurious. 2 *Ibid.* See Introduction. 125-126 (B. XV. 165-167; C 122-123) 1 C. दुगमयोर्लक्षण. 2 C. मरणं यस्य. 3 C. रोषेऽतेवेस, B. रोषेण तेऽप्यर्थं 4 C चरितानपन्न्यासि, C. this in 4th foot. 5 C जलेवै मोहितापि, C. this in 3rd foot. 127-128 ( B XV. 168-169 ; C 124-125 ). 1 B. अनुष्टुप् चपला 2 C. प्रियतमे. 3 C. सदा. 4 B. कथ्यते चपला ह्रीयम् । 129-131 ( B.XV. 170-172 ; C 126-121 ). 1 C. सप्तमस्यैव केषाञ्चित् विपुला तु सा यथा.

* यथा—संक्षिता [2]वज्रमध्ये हे हेमकुम्भनिभस्तनी ।
* विपुलासि प्रिये [3]श्रोण्यां पूर्णचन्द्रनिभानने ॥१३०॥

* यथा वा—गङ्गेव मेघोपगमे आह्लावितवसुन्धरा ।
* कूलवृक्षानारुजन्ती[4] स्रवन्ती [5]विपुलाचलात् ॥१३१॥

* एवं[1] विविधयोगास्तु पथ्यापादा भवन्ति हि ।
* [2]युग्मौजविषमैरथः पादैः शेषैरन्यैस्त्रिकैस्तथा ॥१३२॥
* गुर्वन्तकः सर्वलघुस्त्रिको नित्यं हि नेष्यते ।
* प्रथमादक्षराद्यत्र चतुर्थात् प्राग्लघु स्मृतम् ॥ ३३॥

* पथ्यापादं समास्थाप्य त्रीण्यन्ते तु गुरूण्यथ ।
* भवन्ति पादे सततं यत्र तद्वक्त्रमिष्यते ॥१३४॥
* यथा—दन्तक्षताधरं सुभ्रु [3]जागरग्लाननेत्रं च ।
* [4]प्रातः सम्भोगखिन्नं ते [5]दर्शनीयतमं वक्त्रम् ॥१३५॥

* इत्येषा सर्वविषमा नामतोऽनुष्टुबुच्यते ।
* [1]तद्विदां मतवैषम्यं [2]त्रिकादक्षरतस्तथा ॥१३६॥
* स्जौ स्गौ च प्रथमे पादे यथा चैव तृतीयके ।
* केतुमत्यां गणाः प्रोक्ता भ्रौ न्गौ भश्च सदा बुधैः ॥१३७॥

* यथा—स्फुरिताधरं [3]चलितनेत्रं रक्तकपोलमम्बुजदलाक्षम् ।
* किमिदं रुषापहृतशोभं [4]केतुमतीसमं वद मुखं ते ॥१३८॥

130-131 (B XV. 170-172; C. 126-121). 2 B. वज्रवत्मध्ये. 3 C. कथ्या शरचन्द्र. 4 C. ०रुजती. 5 C विपुला वनात्, B. adds another ex. 132-135 (B. XV. 174-177; C. 129-132) 1 C. विपुलयोगास्तु पथ्यापादे 2 B. सगुर्वन्तः. 3 B ०भाननेत्रान्तं. 4 B. रतिसंभोग. 5 B. दर्शनायनरं. 136-138 (B. XV. 181, 182; C 139-141). 1 C. द्विधा मतं हि. 2 C त्रिकादचरन्तथा. 3 B. चकित, C. कलित; we with Bd. 4 C. केतुमदिमुखाकृति.

* स्जावादौ च तथा स्लौ च नसजा गश्च युग्मके।
* भ्नौ ज्लौ तृतीये स्युः स्जौ स्जौ गश्च तुरीयके॥
* एते त्रिकाः क्रमप्राप्ता उद्गतायां प्रकीर्तिताः[1] ॥१३९॥

* यथा—तव रोमराजिरतिभाति सुतनु मदनस्य मञ्जरीम्।
* नाभिकमलविवरोत्पतिता भ्रमरावलीव [2]कुसुमात् समुद्गता ॥१४०॥

* स्जौ [1]स्लौ च ललिता [2]पादे न्सौ जौ गश्च द्वितीयके।
* नौ सौ चैव तृतीये तु द्वि स्जौ गश्च चतुर्थके[3] ॥१४१॥

* यथा—[4]ललिताकुलभ्रमितचारुवसनकरपल्लवा [5]हि मे।
* प्रविकसितकमलकान्तमुखी प्रतिभासि देवि सुरतश्रमातुरा ॥१४२॥

* प्रथमे च तृतीये[1] च नौ रेफः लगौ च कीर्तिताः।
* गणाश्चापरवक्त्रे तु नजौ ज्रौ द्विचतुर्थयोः ॥१४३॥

* यथा—सुतनु [2]जलदपरीतलोचनं [3]जलदनिरुद्धमिवेन्दुमण्डलम्।
* किमिदमपरवक्त्रमेव ते [4]मम तु तथापि मनोहरं मुखम् ॥१४४॥

* नौर्यौ तु प्रथमे पादे नजौ ज्रौ गस्तथापरे।
* पादे [1]तु पुष्पिताग्राया यथैतावपरौ तथा ॥१४५॥

* यथा—[2]पवनबलविधूतचारुशाखं प्रमुदितकोकिलकण्ठनादरम्यम्।
* [3]मधुकरपगीयमानवृक्षं वरतनु पश्य वनं सुपुष्पिताग्रम् ॥१४६॥

139-140 (B.XV. 188-189; C. 135-136). 1 B. स्जौ स्लौ चादौ यथा न्सौ जगौ भ्नौ ज्लौ गश्च तथा पुनः। स्जौ स्जौ गश्च त्रिका ह्येते उद्गतायां प्रकीर्तिता. 2 C. कुसुमे. 141-142 (B XV. 190-191; C. 137-138). 1 C जश्च. 2 C पादे 3 B rewrites this def. 4 C. ०भ्रमिताह्ववसन०, B. ०करचारु पल्लवा. 5 B om हि मे. 143-144 (B XV. 184-185; C. 142-143). 1 B. नौ रलौ गश्च प्रकीर्तितः, C. रेफः ग्लाश्च कीर्तिताः. 2 C. लोचने. 3 C. जलम-निरुद्ध. 4 B शशिवदनेऽस्य मुखं पराङ्मुखम् 145-146 (B.XV. 186-187; C. 144-145). 1 B. तु पुष्पिताग्राया शेषं तु पूर्ववत्. 2 B. पवन बलविधूव० 3 B. मधुकरपरिगीयमानशब्दं.

पादे षोडश [1]मात्राः स्युर्गार्धाशकविकल्पिता ।
चतुर्भिरंशकैर्ज्ञेया वृत्तज्ञैर्वानवासिका ॥१४७॥

यथा—असंस्थितपदा [2]सुविह्वलाङ्गी मदस्खलितचेष्टितैर्मनोज्ञा ।
क यास्यसि वरोरु सुरतकाले विषमा किं वानवासिका त्वम् ॥१४८॥

एवमेतानि वृत्तानि समानि विषमाणि च ।
नाटकादिषु काव्येषु प्रयोक्तव्यानि सूरिभि: ॥१४९॥

सन्त्यन्यान्यपि वृत्तानि यान्युक्तानीह [1]पण्डितैः ।
न च तानि प्रयोज्यानि [2]न शोभां जनयन्ति यत् ॥१५०॥

[3]यान्यतः परमत्र स्युर्गीतकैस्तानि योजयेत् ।
[4]ध्रुवाविधाने व्याख्यास्ये [5]तेषाञ्चैव विकल्पनम् ॥१५१॥

[6]वृत्तलक्षणमेतत्तु समासेन मयोदितम् ।
अत ऊर्ध्वं प्रवक्ष्यामि [7]आर्याणामपि लक्षणम् ॥१५२॥

पथ्या च विपुला चैव चपला मुखतोऽपरा ।
जघने चपला चैव आर्याः [8]पञ्चविधाः स्मृताः ॥१५३॥

[1]आसाञ्चैव प्रवक्ष्यामि यतिमात्राविकल्पनम् ।
[2]लक्षणैर्नियतांशैश्च विकल्पान् गणसंश्रितान् ॥१५४॥

[3]यतिच्छेदश्च [4]विज्ञेयश्चतुर्मात्रो गणस्तथा ।
द्वितीयान्त्यौ युजौ पादौ शेषौ चैवायुजौ स्मृतौ ॥१५५॥

147-148 (B XV. 179-180 ; C. 146-147). 1 C. मात्रा. स्युश्चि-काशकविकल्पिताः, Bbh यस्या नित्यं भवन्ति हि. 2 C. विह्वलाङ्गी. 149-153 (B. XV. 192-196 ; C. 148-152). 1 B. पिण्डशः. 2 B. Ag. हतशोभानि तानि हि. 3 B. यान्यत्र प्रतिषिद्धानि. 4 B. ध्रुव योगे तु वक्ष्यामि. 5 B तेषामेव. 5 B. ०लक्षणमेवं. 7 B ह्यार्याणामपि. 8 B. पञ्च प्रकीर्तिताः. 154-156 (B. XV. 197-199 ; C. 153-155). 1 B. आसां तु संप्रवक्ष्यामि. 2 B. लक्षणं नियमं चैव विकल्पगुणसंश्रयम्. 3 B. यतिश्छेदस्तु. 4 C. ०श्चतुर्मात्रागणस्तथा, B. मात्रो गणः स्मृतः.

* गुरुमध्यविहीनस्तु [5]चतुर्गणसमन्वितः ।
* अयुग्गणो विधातव्यो [6]युग्मगणस्तु यथेप्सितः ॥१५६॥
* अर्धाष्टमगणार्धा च सर्वार्या प्रकीर्तिता[1] ।
* पष्ठश्च द्विविकल्पस्तु नैधने ह्येकसंश्रिते[2] ।
* [3]पश्चार्धे यो गणः षष्ठ एकमात्रः स उच्यते ॥१५७॥
* द्विविकल्पस्तु [1] षष्ठोऽत्र गुरुमध्यो भवेत्तु स ।
* [2]तथा सर्वलघुश्चैव [3]यतिः सख्यासमाश्रिता ॥१५८॥
* [1]सा द्वितीया द्विलघूका [2]सप्तमे सप्तमाद्यतिः ।
* [3]प्रथमादि तथान्ते च पंचमे तु विधीयते ॥१५९॥
* गणेषु त्रिषु [1]पादे तु यस्याः पथ्या तु सा भवेत् ।
* अतश्च विपुलान्या तु विज्ञेयाऽयतिलक्षणा[2] ॥१६०॥
* यथा—[1]रक्तमृदुपद्मनेत्रासितदीर्घबहुलमृदु[कुञ्चित]-केशी[2] ।
* कस्य तु पृथुमृदुजघना [3]तनुबाहुंसोदराऽपथ्या ॥१६१॥

156 (B XV 197-199; C. 153-155) 5 B. चतुर्गुणसमन्वित. 6 C युग्गणो यत्र चैव हि 157 (B.XV 208, 209a, 200, C. 156). 1 C. om this hem. 2 B षष्ठश्च द्विविकल्पस्तु नैधने एकमाश्रितः, षष्ठो वै द्विविकल्पस्तु *नैधनो ह्येकसंश्रित*. C. *नैधने ह्येकसंश्रित*.. 3 *B. पश्चाद्वा, पश्चादर्धे, Ag. पश्चादर्धे.* 158 (B XV. 209b-210a, 201; C. 157). 1 B. य षष्ठो, षष्ठो यो. 2 B. यथा. 3 B. यतिसख्या, B. यतिसंज्ञा, C. यतिः संज्ञाः समाश्रितः. 159 (B.XV. 210b, 202; C. 158). 1 C. सा द्वितीया द्विलघूनि, B. साद्वितीया-द्विलघुका, द्वितीयादिलघुर्ज्ञेय, Bdh. स द्वितीया द्विलघुनी. 2 Bdh. सप्तमे सप्तमाद्यदि, C. सप्तमे प्रथमाद्यतिः, B. सप्तमे प्रथमे (सप्तमे) यतिः, Bbh. सप्तमे वा यतिस्तथा. 3 B. प्रथमादिरथान्त्ये च, C. प्रथमादि तथान्त्ये च. 160 (B. XV. 203; C. 159). 1 B. पादस्य. C. पादेषु; we with Bn. 2 Bn. b, dh. and c. प्रथमे च द्वितीये च सा त्वार्या (त्वन्या) विपुला मता. 161 (B. XV. 113; C. 160). 1 Before 161 B. reads 162. 2 C. बहुलमृदुकेशी. 3 B.C. तनुबाहुंसोदरी पथ्या.

* प्रथमतृतीयौ पादौ द्वादशमात्रौ भवेत्तु सा पथ्या ।
* विपुलान्या खलु गदिता पूर्वोदितलक्षणोपेता ।१६२॥

* विपुला यथा—विपुलजघनवदनस्तननयनैस्ताम्राधरोष्ठकरचरणैः ।
* आयतनासागण्डैर्ललाटकर्णैः शुभा कन्या[1] ॥१६३॥
* अयुजः सर्वगुरवो गुरुमध्यागणा युजः।
* यस्यास्तुः पादयोगे तु विज्ञेया चपला हि सा ॥१६४॥

* द्वितीयश्च चतुर्थश्च [1]जकारौ गुरुमध्यगौ ।
* [2]यस्या स्यात्पादयोगे तु विज्ञेया [3]चपला [4]च सा ॥१६५॥
* मुखेऽस्य मुखचपला स्यादन्यत्र जघने तथा[1] ।
* उभयोरर्धयोरेतल्लक्षणं दृश्यते यदि ।
* वृत्तज्ञैः सा तु विज्ञेया सर्वतश्चपला तथा ॥१६६॥
*मुखचपला यथा—[1]आर्या मुखे तु चपला तथापि चार्या न मे यतः सा तु ।
* दक्षा गृहकृत्येषु तथा दुःखे भवति दुःखार्ता ॥१६७॥
*जघनचपला यथा—[1]वरमृगनयने चपलासि वरोरु शशाङ्कदर्पणनिभास्ये ।
* कामस्य सारभूतेन[ा] पूर्वमश्चारुजघनेन ॥१६८॥
*[सर्वतश्चपला]—[1]उद्व[र्त]-गामिनी परुषभाषिणी कामचिह्नकृतवेषा ।
* या नातिमांसयुक्ता सुराप्रिया सर्वतश्चपला ॥१६९॥
* कार्यौ द्वादशमात्रौ च पादावाद्यौ तृतीयकौ ।
* अष्टादशं द्वितीयं च तथा पञ्चदशोत्तमाः ॥१७०॥

162-163 (B.XV. 212, 214). 164 (B XV. 204) 1 B. चपला, Bd. विपुला 2 B. om this. 165 (B XV. 215, C. 161). 1 B. गुरुमध्यगतो भवेत् 2 B. उभयोरर्धयोर्यत. 3 C विपुला च सा. 4 B. तथा. 166 (B XV. 220, C. 162-163a). 1 B. (217) reads for this पूर्वार्धे लक्षणं ह्येतदस्याः सा च मुखेन तु। पश्चिमार्धे तु चपला यस्या. सा जघनेन तु. 167 (B.XV. 218). 1 C. om. this. 168 (B.XV. 219). 1 C. om. this. 169 (B XV. 216). 1 C. om. this. *170 (B XV. 221*

* [1]त्रिंशन्मात्रास्तु पूर्वार्धे विंशतिः सप्त चापरे।
* उभयोरर्धयोर्ज्ञेयो मात्रापिण्डो विभागशः ॥१७१॥

वृत्तैरेवं तु विविधैर्नानाच्छन्दःसमुद्भवैः।
काव्यबन्धास्तु कर्तव्याः षट्त्रिंशल्लक्षणान्विताः ॥१७२॥

इति भारतीये नाट्यशास्त्रे छन्दोविचितिर्नाम
षोडशोऽध्यायः ॥

Bdh. म द्वितीया
मे प्रथमे ( सम्पूर्णे-
थमानि

171 (B.XV. 206, C. 163b-164a). 1 reads this त्रिंशत्स्याथ यदि स्युरेतानि द्विगुणानि तु। त्रिंशद्धराणि चान्यानि न्यस्य संख्याविभागशः. 2 This is followed in C. by 4½ couplets which are spurious; see the Introduction. 172 (B.XV. 227b-228a, C. 168-169).

## सप्तदशोऽध्यायः

भूषणाक्षरसङ्घातौ शोभोदाहरणे तथा ।
हेतुसंशयदृष्टान्ताः प्राप्त्यभिप्राय एव च ॥१॥
निदर्शनं निरुक्तं च सिद्धिश्चाथ विशेषणम् ।
गुणातिपातातिशयौ तुल्यतर्कः पदोच्चयः ॥२॥
[1]दिष्टं चैवोपदिष्टं च [2]विचारस्तद्विपर्ययः ।
भ्रंशश्चानुनयो माला दाक्षिण्यं गर्हणं तथा ॥३॥
अर्थापत्तिः प्रसिद्धिश्च पृच्छा सारूप्यमेव च ।
मनोरथश्च लेशश्च [3]संक्षोभो गुणकीर्तनम् ॥४॥
[4]क्षेया ह्यनुक्तसिद्धिश्च प्रियं वचनमेव च ।
षट्त्रिंशल्लक्षणान्येवं काव्यबन्धेषु निर्दिशेत् ॥५॥

अलङ्कारैर्गुणैश्चैव [5]बहुभिः समलङ्कृतम् ।
भूषणैरिव [6]विन्यस्तैस्तद् भूषणमिति स्मृतम् ॥६॥
यत्राल्पैरक्षरैः श्लिष्टैर्विचित्रमुपवर्ण्यते[7] ।
[8]तमप्यक्षरसङ्घातं विद्याल्लक्षणसंज्ञितम् ॥७॥
सिद्धैरर्थैः समं कृत्वा ह्यसिद्धोऽर्थः [9]प्रयुज्यते ।
यत्र [10]श्लिष्टविशिष्टार्थं सा शोभेत्यभिधीयते[11] ॥८॥
यत्र [12]तुल्यार्थयुक्तेन वाक्येनाभिप्रदर्शनात् ।
साध्यन्ते निपुणैरर्थास्तदुदाहरणं स्मृतम् ॥९॥

NB. *For XVI. see pp. 348 ff of B.II.*

1-9 (B.XVI. *same*, C. 1-9). 1 B. दिष्टं 2 B. विचारोऽथः 3 C क्षोभोऽथ. 4 B. ज्ञैयाभ्यनुक्त. 5 Ag. बहुर्यदलंकृतम् 6 Ag. विन्यस्तै. B.C. चित्रार्थैः 7 Ag. ॰मुपवर्णनम्. 8 B. तमप्य. 9 B प्रमाध्यते. 10 C श्लिष्टं विशिष्टार्थं. Bp. श्लिष्टा विचित्रार्था. Ag. B, श्लक्ष्णा विचित्रार्था. 11 Ag. ॰मिसंज्ञिता. B. शोभेति विधीयते. 12 C. त्वल्पार्थं.

यत् प्रयोजनसामर्थ्याद् वाक्यमिष्टार्थसाधकम्[1] ।
समासोक्तं मनोग्राहि स हेतुरिति संज्ञित ॥१०॥
अपरिज्ञाततत्त्वार्थं वाक्यं यत्र समाप्यते ।
अनेकत्वाद्विचाराणां स संशय इति स्मृतः ॥११॥
सर्वलोकमनोग्राहि [2]यस्तु पक्षार्थसाधकः ।
हेतोर्निदर्शनकृतः स दृष्टान्त इति स्मृतः ॥१२॥
दृष्ट्वैवावयवान् कांश्चिद् भावो यत्रानुमीयते ॥
प्राप्तिं [1]तामपि जानीयाल्लक्षणं नाटकाश्रयम् ॥१३॥
अभूतपूर्वो [2]योऽप्यर्थः सादृश्यात्परिकल्पितः ।
लोकस्य हृदयग्राही सोऽभिप्राय [3]इति स्मृतः । १४॥
यत्रार्थानां प्रसिद्धानां क्रियते परिकीर्तनम् ।
परापेक्षाव्युदासार्थं तन्निदर्शनमुच्यते ॥१५॥
निरवयस्य वाक्यस्य [4]पूर्वोक्त-[स्य] प्रसिद्धये ।
यदुच्यते तु वचनं निरुक्तं तदुदाहृतम् ॥१६॥
बहूनां च [5]प्रयुक्तानां नाम यत्राभिकीर्त्यते ।
[6]अभिप्रेतार्थसिद्ध्यर्थं सा सिद्धिरभिधीयते ॥१७॥
सिद्धान् बहून् प्रधानार्थान् [7]उक्त्वा यत्र प्रयुज्यते ।
विशेषयुक्तं वचनं विज्ञेयं तद्विशेषणम् ॥१८॥
गुणाभिधानैर्विविधैर्विपरीतार्थयोजितैः[8] ।
गुणातिपातो [9]मधुरोऽनिष्ठुरार्थो भवेदथ[10] ॥
बहून् गुणान् कीर्तयित्वा सामान्यजनसम्भवान् ।
विशेषः कीर्त्यते [11]यस्तु ज्ञेयः सोऽतिशयो बुधैः ॥२०॥

10-12 (B XV, same, C 10-12) 1 Ag. ॰साधनम्. 2 C पक्ष॰.
13-20 (B.XVI same; C. 13-20). 1 B. तामभि. 2 B. यो ह्यर्थः, Ag. ह्यर्थो य॰. 3 B. इतीरित॰. 4 Ag. पूर्वोक्तार्थ॰. C. पूर्वोक्ता तु 5 B. प्रधानाना. 6. B. एकार्थसाधनकृतं, 7 Ag. लब्ध्वा 8 Ag. विविधार्थसंयोजितैः. 9 B. Ag. मधुरैर्निष्ठुरार्थे(॰निष्ठुरैर्वा). 10 Ag. भवेदिह, B. भवेद्यथा. 11 Ag. यत्र.

[1]रूपकैरुपमानैर्वा तुल्यार्थाभिः [2]प्रयोजितः ।
[3]अप्रत्ययार्थसंस्पर्शस्तुल्यतर्कः प्रकीर्तितः ॥२१॥
बहूनां च प्रयुक्तानां [4]पदानां बहुभिः पदैः ।
उच्चयः सदृशार्थो य स विज्ञेयः पदोच्चयः ॥२२॥
यथादेशं यथाकालं यथारूपं च वर्ण्यते ।
यत्प्रत्यक्षं परोक्षं वा दिष्टं तद्वर्णतोऽपि वा ॥२३॥
परिगृह्य च शास्त्रार्थं यद्वाक्यमभिधीयते ।
विद्वन्मनोहरं स्वन्तमुपदिष्टं तदुच्यते ॥२४॥
पूर्वाशयसमानार्थैरप्रत्यक्षार्थसाधनैः ।
अनेकापोहसंयुक्तो[5] विचारः परिकीर्तितः ॥२५॥
विचारस्यान्यथाभावस्तथा दृष्टोपयोगत[6] ।
सन्देहात्कल्प्यते[7] यस्तु [8]स विज्ञेयो विपर्यय. ॥२६॥
वाच्यमर्थं परित्यज्य [9]द[ष्ट]-ादिभिरनेकधा ।
अन्यस्मिन्नेव पतनादिह भ्रंशः स इष्यते ॥२७॥
उभयो [1]प्रीतिजननोर्विरुद्धाभिनिविष्टयोः[2] ।
[3]अर्थस्य साधकश्चैव विज्ञेयोऽनुनयो बुधैः ॥२८॥
[4]ईप्सितार्थप्रसिध्यर्थं कीर्त्यन्ते यत्र सूरिभिः ।
प्रयोजनान्यनेकानि सा मालेत्यभिसंज्ञिता ॥२९॥
[5]हृष्टैः प्रसन्नवदनैर्यत्परस्यानुवर्तनम् ।
क्रियते [6]वाक्यचेष्टाभिस्तद्दा-[7]क्षिण्यमिति स्मृतम् ॥३०॥

B.XVI. 21-27, C. 21-27) 1 Ag. ०रुपमाभिर्वा. 2 Ag. प्रयोजितैः, C. प्रयोक्तृभि०. 3 B. Ag. अप्रसच्चार्थं०. 4 C. पनाना, Ag. gives a v.l. पादोभागः. 5 B. अनेकोपाधिसंयुक्ता. 6 B. दृष्टोपदिष्टयोः, Ag. दृष्टोपदृष्टयो०. 7 B. संदेहान्नायते यत्र. 8 Ag. सविक्षेपो. 9 B.C. दृष्टा०, Ag. दृष्ट्या. 28-41 (B XVI. 28-30; C. 28-30) 1 C. प्रीतिजननोर्वि०. 2 Ag विरुद्धाविनिवेशयोः. 3 Ag. अर्थः प्रमादजनको ज्ञेयस्त्वनुनय०. 4 B. अभिप्रेतार्थसिद्ध्यर्थं. 5 Ag. हितैः प्रसन्नवचनैः. 6 C. वान्यचेष्टाभि. 7 Ag. दाक्षिण्यमुदाहृतम्

यत्र संकीर्तयन् दोषं गुणमर्थेन[1] दर्शयेत् ।
गुणातिपाताद्[2] दोषाद्वा गर्हणं नाम तद्भवेत् ॥३१॥
अर्थान्तरस्य कथने यत्रान्योऽर्थः प्रतीयते ।
वाक्यं माधुर्यसंयुक्तं[3] सार्थापत्तिरुदाहृता[4] ॥३२॥
वाक्यैः [5]सातिशयैरुक्ता वाक्यार्थस्य प्रसाधकैः ।
लोकप्रसिद्धैर्बहुभिः प्रसिद्धिरिति कीर्तिता ॥३३॥
[6]यत्राकारोद्भवैर्वाक्यैरात्मानमथवा परम् ।
[7]पृच्छ[ति] [8]वाभिधत्तेऽर्थं सा पृच्छेत्यभिसंज्ञिता ॥३४॥
[9]दृष्टश्रुतानुभूतार्थकथनादिसमुद्भवम् ।
सादृश्य क्षोभजननं [10]सारूप्यमिति संज्ञितम् ॥३५॥
हृदयस्थस्य[11] वाक्यस्य गूढार्थस्य विभावकम् ।
अन्यापदेशैः कथनं मनोरथ इति स्मृतः ॥३६॥
यद्वाक्य [2]वाक्कुशलैरुपायेनाभिधीयते ।
[3]सदृशार्थाभिनिष्पन्नं [4]स लेश इति कीर्तितः ॥३७॥
परदोषैर्विचित्रार्थैर्यत्रात्मा परिकीर्त्यते ।
[5]अदुष्टोऽन्योऽपि वा कश्चित् स संक्षोभ' इति स्मृत' ॥३८॥
लोके गुणातिरिक्तानां [6]गुणानां यत्र नामभिः ।
[7]एकोऽपि शब्द्यते तत्तु विज्ञेयं गुणकीर्तनम् ॥३९॥
प्रस्तावेनैव शेषोऽर्थः कृत्स्नो यत्र प्रतीयते ।
वचनेन [8]विना जातु सिद्धि· सा परिकीर्तिता ॥४०॥

B XVI. 31-40 ; C. 31-40). 1 Ag. योजयेत्. 2 Ag. दोषं वा. 3 C. वाक्यमाधुर्यसंयुक्तं. B. ॰माधुर्यसम्पन्ना. 4 Ag. ॰रिति स्मृता. 5 B.C. सातिशयैरुक्ता, Ag. सातिशयैर्युक्ता. 6 C. आकारो. 7 C. पृच्छयते, B. पृच्छन्निवाभि॰. 8 B. वाभिधत्ते, C चाभिधत्ते. 9 C. ॰कथनाभि॰. 10 C. सादृश्यवचनजनितं. 11 C हृदयार्थस्य. 2 B. Ag. वाक्यकुशलैः. 3 Ag ॰भिनिष्पत्त्या, C. ॰विनिष्पन्नः. 4 Ag. अनुक्तो, B. अदृष्टो, C. अदृष्टा, 5 B.Ag. तु चोभः C. तु दोष. 6 Ag. बहुना, 7 B. Ag. हि. 8 Ag. विना जातु, C. विजानातु. B. विनानुक्तसिद्धि॰.

यत्प्रसन्नेन मनसा 'पूज्यं पूजयितुं वचः ।
हर्षप्रकाशनार्थं तु सा प्रियोक्तिरुदाहृता[10] ॥४१॥
एतानि च [1]काव्यस्य लक्षणानि षट्त्रिंशदुद्देश्यनिदर्शनानि ।
[2]प्रबन्धशोभाकराणि तज्ज्ञैः सम्यक् प्रयोज्यानि [3]यथारसानि ॥४२॥

** विभूषणं चाक्षरसंहतिश्च च शोभाभिमानौ गुणकीर्तनं च ।
** प्रोत्साहनोदाहरणे निरुक्तं गुणानुवादोऽतिशयश्च हेतुः ॥४२क॥
** सारूप्यमिथ्याध्यवसायसिद्धिपदोच्चयाक्रन्दमनोरथश्च ।
** आख्यानयाच्ञा प्रतिषेधपृच्छादृष्टान्तनिर्भासनसंशयाश्च ॥४२ख॥
** आशीः प्रियोक्तिः कपटं क्षमा च प्राप्तिश्च पश्चात्तपनं तथैव ।
** अर्थानुवृत्तिर्ह्युपपत्तियुक्ती कार्यानुनीती परिदेवनं च ॥४२ग॥
** षट्त्रिंशदेतानि हि लक्षणानि प्रोक्तानि वै भूषणसंमितानि ।
** काव्येषु भावार्थगतानि तज्ज्ञैः सम्यक् प्रयोज्यानि यथारसं तु ॥४२घ॥

[अलङ्कारैर्गुणैश्चैव बहुभिः समलंकृतम् ।
भूषणैरिव विन्यस्तैस्तद् भूषणमिति स्मृतम् ॥४२घ१॥
यत्राल्पैरक्षरैः श्लिष्टैर्विचित्रमुपवर्ण्यते ।
तमप्यक्षरसङ्घातं विद्याल्लक्षणसंज्ञितम् ॥४२घ२॥
सिद्धैरर्थैः समं कृत्वा ह्यसिद्धोऽर्थः प्रसाध्यते ।
यत्र श्लक्ष्णा विचित्रार्था सा शोभेत्यभिसंज्ञिता ॥४२घ३॥ ]
** धार्यमाणस्तु बहुभिर्वचनैः कार्ययुक्तिभिः ।
** न यः पर्यवतिष्ठेत सोऽभिमानस्तु संज्ञितः ॥४२ङ॥
** कीर्त्यमानैर्गुणैर्यत्र विविधार्थसमुद्भवैः ।
[ लोके गुणातिरिक्तानां बहूनां यत्र नामभिः ।
एकोऽभिशब्द्यते यस्तु विज्ञेयं गुणकीर्तनम् ॥४२ङ१॥ ]

9 Ag. पूज्यान्. 10 For another version of the Lakṣaṇas see below 42 ka-425a 42 (B.XVI. 42. p. 364, C. 42). 1 C. वा काव्यविभूषणानि 2 C. काव्येषु सोदाहरणानि. 3 C. बलानुरूपम्.

** उत्साहजननैः स्पष्टैरर्थैरौपम्यसंश्रयैः ।
** प्रसिद्धैरपगूढं च ज्ञेयं प्रोत्साहनं बुधैः ॥४२च॥
** यत्रैकस्यापि शब्दस्य दर्शनात्सुबहून्यपि ।
** यान्ति सिद्धिमनुक्तादि तदुदाहरणं स्मृतम् ॥४२छ॥
** निरुक्तं द्विविधं प्रोक्तं तथ्यं वाऽतथ्यमेव वा ।
** सिद्धिप्रसाधितं तथ्यमतथ्यं चाप्रसाधितम् ॥४२ज॥
** गुणानुवादो हीनानामुत्तमैरुपमाकृतः ।
** उत्तमार्थाद्विशिष्टो यः स चाप्यतिशयः स्मृतः ॥४२झ॥
** बहूनां भाष्यमाणानामनेकार्थविनिर्णयात् ।
** सिद्धौ समानवचनं हेतुरित्यभिसंज्ञितः ॥४२ञ॥
** अपदेशस्तु परोक्षो यस्मादुत्पद्यतेऽनुकरणेन ।
** लक्षणसमानकरणात् सारूप्यं तत्तु निर्देश्यम् ॥४२ट॥
** अभूतपूर्वं यत्रार्थे तुल्यस्यार्थस्य निर्णयः ।
** स मिथ्याध्यवसायस्तु प्रोच्यते काव्यलक्षणे ॥४२ठ॥
[ बहूनां तु प्रधानानां मध्ये यन्नाम कीर्त्यते ।
एकार्थसाधनकृतं सा सिद्धिरिति कीर्त्यते ॥४२ठ१॥ ]
** गुणैर्बहुभिरेकार्थैः पदैर्यः संप्रशस्यते ।
** पदोच्चयं तु तं विद्यान्नानर्थकथनात्मकम् ॥४२ड॥
** आत्मभावमुपन्यस्य परसादृश्ययुक्तिभिः ।
** तीव्रार्थभाषणं यत् स्यादाक्रन्दः स तु कीर्तितः ॥४२ढ॥
[ हृदयस्थस्य भावस्य सुस्पष्टार्थप्रदर्शनम् ।
अन्यापदेशकथनैर्मनोरथ इति स्मृतः ॥४२ढ१॥ ]
** अपृष्टैरथवा पृष्टैर्निर्णयः क्रियते तु यः ।
** आख्यानमिति तज्ज्ञेयं लक्षणं नाटकाश्रयम् ॥४२ण॥
** आदौ यत् क्रोधजननमन्ते हर्षप्रवर्धनम् ।
** यत्तु प्रियं पुनर्वाक्यं सा याच्ञा परिकीर्तिता ॥४२त॥
** कार्येषु विपरीतेषु यदि कश्चित् प्रवर्तते ।
** निवार्यते च कार्यज्ञैः प्रतिषेधः प्रकीर्तितः ॥४२थ॥

[ यत्राकारोद्भवैर्वाक्यैरात्मानमथवा परम् ।
पृच्छन्निवाभिधत्तेऽर्थं सा पृच्छेत्यभिसंज्ञिता ॥४२थ१॥ ]
** सिद्धं पूर्वोपलब्धौ यत्समत्वमुपपादयेत् ।
** निदर्शनकृतस्तज्ज्ञैः स दृष्टान्त इति स्मृतः ॥४२द॥
** अनेकयुक्ति यद्वाक्यमनेकार्थप्रसाधकम् ।
** अनेकवाक्यसंयुक्तं भासनं नाम तद्भवेत् ॥४२ध॥
[ अपरिज्ञाततत्त्वार्थं यत्र वाक्यं समाप्यते ।
अनेकत्वाद्विचाराणां संशयः परिकीर्तितः ॥४२ध१॥ ]
** यत्र शास्त्रार्थसम्पन्नां मनोरथसमुद्भवाम् ।
** अप्रार्थनीयामन्यां वा विदुस्तामाशिषं बुधाः ॥४२न॥
** आदौ यत् क्रोधजननमन्ते हर्षप्रवर्धनम् ।
** तत् प्रियं वचनं ज्ञेयमाशीर्वादसमन्वितम् ॥४२प॥
** अदिव्यं दिव्यमपि वा कृत्वा रूपविपर्ययम् ।
** अविद्वान् वंच्यते येन कपटं तदुदाहृतम् ॥४२फ॥
** दुर्जनोदाहृतैै रूक्षैः सभामध्येऽभिताडितः ।
** अक्रोधः क्रोधजननैर्वाक्यैर्यः सा क्षमा भवेत् ॥४२ब॥
** दृष्टैर्वावयवैः कश्चिद्भावो यत्रानुमीयते ।
** प्राप्तिं तामभिजानीयाल्लक्षणं नाटकाश्रयम् ॥४२भ॥
** अकार्यं सहसा कृत्वाऽकृत्वा कार्यमथापि वा ।
** सन्तापो मनसो यस्तु पश्चात्तापः प्रकीर्तित ॥४२म॥
** प्रश्रयेणार्थसंयुक्तं यत्परस्यानुवर्तनम् ।
** स्नेहाद्दाक्षिण्ययोगाद्वा सानुवृत्तिस्तु संज्ञिता ॥४२य॥
** प्राप्तानां यत्र दोषाणां क्रियते शमनं पुनः ।
** सा ज्ञेया ह्युपपत्तिस्तु लक्षणं नाटकाश्रयम् ॥४२र॥
** साध्यते योऽर्थसम्बन्धो महद्भिः समवायतः ।
** परस्परानुकूल्येन सा युक्तिः परिकीर्तिता ॥४२ल॥
** यत्रापसारयन् दोषं गुणमर्थेन योजयेत् ।
** गुणातिवादं दोषाद्वा कार्यं तदिह संज्ञितम् ॥४२व॥

** अपूर्वक्रोधजनितमपराधं प्रमृज्य यत् ।
** सेवार्थं मधुरं वाक्यमनुनीतिः प्रकीर्तिता ॥४२द॥
** यद्दोषैरन्यनामोक्तैः प्रसिद्धार्थैः प्रयोजितम् ।
** अन्यत्रार्थेन सम्बद्धं ज्ञेयं तत्परिदेवनम् ॥४२ध॥

उपमा दीपकं चैव रूपकं यमकं तथा ।
[1]काव्यस्यैते ह्यलङ्काराश्चत्वारः परिकीर्तिताः ॥४३॥
यत्किञ्चित् काव्यबन्धेषु सादृश्येनोपमीयते ।
उपमा नाम विज्ञेया गुणाकृतिसमाश्रया ॥४४॥
एकस्यैकेन सा [2]कार्यानेकेनाप्यथवा पुनः ।
अनेकस्य तथैकेन बहूनां बहुभिस्तथा ॥४५॥
तुल्यं ते [1]शशिना वक्त्रमिति ह्येकक्रना भवेत्[2] ।
शशाङ्कवत् प्रकाशन्ते ज्योतिंषीति भवेत्तु या ॥४६॥
[[3]अनेकस्यै]-कविषया सोपमा परिकीर्तिता ।
श्येनबर्हिणभासानां [4]तुल्याक्ष इति या भवेत् ॥४७॥
एकस्य बहुभिः सा स्यादुपमा नाटकाश्रया ।
बहूना बहुभिर्ज्ञेया घना इव गजा इति ॥४८॥
प्रशंसा चैव निन्दा च कल्पिता सदृशी तथा ।
किञ्चिच्च सदृशी ज्ञेया ह्युपमा पञ्चधा [1]बुधैः ॥४९॥
शंसा यथा—दृष्ट्वा तु तां विशालाक्षीं तुतोष मनुजाधिपः ।
मुनिभिः साधितां कृच्छ्रात् सिद्धिं मूर्तिमतीमिव ॥५०॥

43-45 (B.XVI. 40-42 ; C 43-45) 1 C उपमा रूपकं चैव 2 C. अलङ्कारास्तु विज्ञेया चत्वारो नाटकाश्रयाः. 3 B. कार्या ह्यनेकेनाथवा. 46-47 (B. XVI 43-44 , C 46-48a). 1 B शशिन बहूमिन्येकेनैक संश्रया. 2 The next hem. in C is redundant. 3 B. C एकस्यानेकविषया, B. bh एकानेक, Bd. एकेन सा त्वनेकेषामु॰ 4 B C. तुल्याक्ष. 48 (B XVI. 45 ; C. 48b-49). 1 Next hem in C. is redundant. 49-55 (B.XVI 46-49 ; C. 50-53). 1 B बुध .

निन्दा यथा—मा त्वं सर्वगुणैर्हीनं सस्वजे कर्कशच्छविम् ।
वने कण्टकिनं वल्ली दावदग्धमिव द्रुमम् ॥५१॥

कल्पिता यथा—क्षरन्तो दानसलिलं लीलामन्थरगामिनः ।
मतङ्गजा विराजन्ते जङ्गमा इव पर्वताः ॥५२॥

सदृशी यथा—यत्त्वयाऽद्य कृतं कर्म परचित्तानुरोधिना ।
सदृशं तत्तवैव [3]स्यादतिमानुषकर्मणः ॥५३॥

किञ्चित्सदृशी—संपूर्णचन्द्रवदना नीलोत्पलदलेक्षणा ।
मत्तमातङ्गगमना संप्राप्तेयं सखी मम ॥५४॥
उपमाया बुधैरेते [4]भेदा ज्ञेयाः समासतः ।
शेषा ये लक्षणैर्नोक्ताः ससाध्यास्तेऽपि लोकतः ॥५५॥

स्वविकल्पेन रचितं तुल्यावयवलक्षणम् ।
किञ्चित्सादृश्यसंपन्नं यद्रूपं रूपकं तु तत्[1] ॥५६॥

यथा—पद्माननास्ताः [2]कुमुदप्रहासा विकासिनीलोत्पलचारुनेत्राः ।
वापीस्त्रियो[3] हंसकुलैर्नदद्भिर्विरेजुरन्योन्यमिवाह्वयन्त्यः[4] ॥५७॥

[5]नानाधिकरणस्थानां शब्दानां [6]संप्रदीपन ।
एकवाक्येन संयोगो [7]यस्तद्दीपकमुच्यते[8] ॥५८॥

यथा—सरांसि हंसैः कुसुमैश्च वृक्षा मत्तैर्द्विरेफैश्च सरोरुहाणि ।
गोष्ठीभिरुद्यानवनानि चैव तस्मिन्नशून्यानि सदा क्रियन्ते ॥५९॥

2 C. कण्ठगत. 3 B. स्यादितिमानुष॰ 4 B. ज्ञेया भेदाः. 5 B. ते ग्राह्या लोककाव्यत, C. ते ग्राह्य काव्यलोकत. Bd. सग्राह्यास्तेऽपि लोकतः. 56-59 (B XVI. 53 54, 56, 58, C 58-61). 1 C. 57 and B. 57 give another def नानाद्रव्यानुरागाद्यैर्यद्दौरम्यगुणाश्रयम् । स्वनिर्वर्णनायुक्तं तद्रूपकमिति स्मृतम्. 2 B. कुमुदप्रभासा. 3 B ॰कुलैः स्वनद्भिः 4 B ॰न्यमिहालपन्त्य, B p. इवालपन्त्य 5 B करणार्थानां 6 B. सप्रदोपकम्. 7 B. तद्दीपकमिहोच्यते 8 B. gives one additional def. प्रसृतं मधुरं चापि गुणैः सर्वैरलङ्कृतम् । काव्ये यत्नाद्भवेद् विभ्रान्तदीपकमिति स्मृतम् .

शब्दाभ्यासस्तु यमकं पादादिषु विकल्पितम् ।
विशेषदर्शनञ्चास्य गदतो मे निबोधत ॥६०॥
पादान्तयमकं चैव काञ्चीयमकमेव च ।
समुद्गयमकं चैव विक्रान्तयमकं तथा ॥६१॥
यमकं चक्रवालं च सन्दष्टयमकं तथा ।
पादादियमकञ्चैव[1] आम्रेडितमथापि च ॥६२॥
चतुर्व्यवसितञ्चैव मालायमकमेव च ।
एतद्दशविधं ज्ञेयं यमकं नाटकाश्रयम् ॥६३॥

चतुर्णां यत्र पादानामन्ते स्यात्सममक्षरम् ।
तद्वै पादान्तयमकं विज्ञेयं नामतो यथा ॥६४॥
दिनक्षयात् संहृतरश्मिमण्डलं दिवीव लग्नं तपनीयमण्डलम् ।
विभाति ताम्रं दिवि सूर्यमण्डलं यथा तरुण्याः स्तनभारमण्डलम्[2] ॥६५॥

[1]पादस्यान्ते यथा चादौ स्यातां [2]यत्र समे पदे ।
तत्काञ्चीयमकं चैव विज्ञेयं सूरिभिर्यथा ॥६६॥
[3]यामायामाश्चन्द्रवतीनां द्रवतीनां
व्यक्ताव्यक्ता सारजनीनां रजनीनाम् ।
फुल्ले फुल्ले सभ्रमरे वाभ्रमेरे वा
रामा रामा विस्मयते च स्मयते च ॥६७।

अर्थेनैकेन यद्वृत्तं सर्वमेव समाप्यते ।
समुद्गयमकं नाम तज्ज्ञेयं [3]पण्डितैर्यथा ॥६८॥
[4]केतकीमुकुलपाण्डरदन्त. शोभते प्रवरकाननहस्ती ।
केतकीमुकुलपाण्डरदन्तः शोभते प्रवरकाननहस्ती ॥६९॥

60-64 (B.VI. 59-63 , C. 62-66). 1 B. तथाम्रेडितमेव च. 2 B. adds another ex. 65-69 (B.XVI. 64, 66-69 , C. 67-71). 1 B. पादस्यादौ तथान्ते च यत्र स्याता पाद समे. 2 C. तत्र. 3 B. याम यामं, C. माया माया. 3 B नामतो यथा 4 B. केतकी कुसुमपाण्डुर 5 B. ibid.

एकैकं पादमुत्क्रम्य द्वौ पादौ सदृशौ [1]यदि ।
विक्रान्तयमकं नाम [2]तद्विज्ञेयमिदं यथा ॥७०॥
स पूर्वं [3]वारणो भूत्वा द्विशृङ्ग इव पर्वतः ।
अभवद्दन्तवैकल्याद् [4]विशृङ्ग इव पर्वतः ॥७१॥

पूर्वस्यान्तेन पादस्य परस्यादिर्यदा समः ।
चक्रवच्चक्रवालं [5]तु विज्ञेयं नामतो यथा[6] ॥७२॥
[7][शरै]-र्यथा शत्रुभिराहता हता
हताश्च [8]बाणैरनुपुङ्खगैः खगैः ।
खगैश्च सर्वैर्युधि [9]सञ्चिताश्चिता-
श्चिताधिरूढा [10]हि हतास्तलैस्तलैः ॥७३॥

आदौ द्वौ यत्र [1]पादे तु भवेतामक्षरे समे ।
सन्दष्टयमकं नाम विज्ञेयं [2]तद् बुधैर्यथा ॥७४॥
[3]पश्य पश्य रमणस्य मे गुणान्
येन येन वशगां करोति माम् ।
येन येन हि [4]ममैति दर्शनं
तेन तेन वशगां करोति माम् ॥७५॥

आदौ पादस्य यत्र स्यात् समावेशः समाक्षरः ।
पादादियमकं नाम तद्विज्ञेयं बुधैर्यथा ॥७६॥
विष्णुः सृजति भूतानि विष्णुः संहरति प्रजाः ।
विष्णुः प्रसूते त्रैलोक्यं विष्णुर्लोकाधिदैवतम् ॥७७॥

70-73 (B XVI. 70-74, C 72-75). 1 B. यदा. 2 B. विज्ञेयं नामतो यथा. 3 C. वानरो. 4 C द्विश्रृङ्ग. 5 B. तत्. 6 B. adds another def. 7 B. शैलास्तथा, C. शैला यथा. 8 C. °रनुपुङ्खपुङ्खैः. 9 C सञ्चिताञ्चिता. 10 C. हि हता हता नरा. 74-77 (B.XVI. 75-78, C. 76-78). 1 C. पादो तु भवेतामक्षरै समो. 2 B. नामतो यथा. 3 C यस्य यस्य. 4 C समैति

पादस्यान्तं पदं [1]यच्च द्विर्द्विरेकमिहोच्यते ।
पादान्त्याम्रेडितं नाम [2]विज्ञेयं निपुणैर्यथा ॥७८॥

विजृम्भितं निःश्वसितं मुहुर्मुहुः
[3]यथाभिधानं स्मरणं पदे पदे ।
यथा च ते ध्यानमिदं पुनः पुनः
[4]तथा गता [5][तां] रजनी विना विना ॥७९॥

सर्वे पादाः समा यत्र भवन्ति नियताक्षरा ।
[1]चतुर्व्यवसितं नाम तद्विज्ञेयं बुधैर्यथा ॥८०॥

[2]वारणानमयमेव कालः
वारणानामयमेव कालः ।
वारणानामयमेव कालः
वा रणानामयमेव कालः ॥८१॥

नानारूपैः स्वरैर्युक्तं यत्रैकं व्यञ्जनं भवेत् ।
तन्मालायमकं नाम विज्ञेयं [3]पण्डितैर्यथा ॥८२॥

हली बली [4]हली माली [5]शूली [6]खेली [7]लली जली ।
बलो बलोच्चलोलाक्षो मुसली त्वाभिरक्षतु ॥८३॥

असौ हि रामारतिविग्रहप्रिया
रहःप्रगल्भा रमणं रहोगतम् ।
रतेन [8]रात्रिं [ग]मयेत् परेण वा
न चेदुदेष्यत्यरुणः पुरो रिपुः ॥८४॥

78-80 (B XVI. 79 80, C. 79-80) 1 B. यत्र. 2 B यमक वत्तु सूरिभि. 3 B. क्यं विधेयस्मरणं 4 B ध्रुव गता. 5 mss. ते. 81-84 (B. XVI, 81-85; C 81-85). 1 C. चतुर्व्यवसितं 2 B all the feet as सावारणानामसमेव 3 B. काव्यकोविदैः. 4 C. लली. 5 B. खेली माली. 6 B. सली 7 C. विग्रहः प्रिया 8 C रात्रिं रमयेत्, B. रात्रौ रमयेत्.

स पुष्कराक्षः क्षतजोक्षिताक्षः
क्षरत् क्षतेभ्यः क्षतजं दुरीक्षम् ।
क्षतैर्गवाक्षैरिव संवृताक्षः
साक्षात् सहस्राक्ष इवावभाति ॥८५॥
एभिरर्थक्रियापेक्षैः [1]कार्यं काव्यं तु लक्षणैः ।
अत ऊर्ध्वं तु वक्ष्यामि काव्यदोषांस्तथाविधान्[2] ॥८६॥

[3]गूढार्थमर्थान्तरमर्थहीनं भिन्नार्थमेकार्थमभिप्लुतार्थम् ।
न्यायादपेतं विषमं विसन्धि शब्दच्युतं वै दश काव्यदोषाः ॥८७॥
पर्यायशब्दाभिहितं [4]गूढार्थमभिसञ्ज्ञितम् ।
अवर्ण्यं वर्ण्यते यत्र तदर्थान्तरमिष्यते ॥८८॥
अर्थहीनं त्वसम्बद्धं [5]सावशेषार्थमेव च ।
भिन्नार्थमभिविज्ञेयमसभ्यं ग्राम्यमेव च ॥८९॥
विवक्षितोऽन्य एवार्थो यत्रान्यार्थेन [6]भिद्यते ।
भिन्नार्थं तदपि प्राहुः काव्यं काव्यविचक्षणाः ॥९०॥
[7]एकार्थस्याभिधानं यत् तदेकार्थमिति स्मृतम् ।
अभिप्लुतार्थं विज्ञेयं यत् [8]पादेन समस्यते ॥९१॥
न्यायादपेतं विज्ञेयं प्रमाणपरिवर्जितम् ।
वृत्तभेदो भवेद्यत्र विषमं नाम तद्भवेत् ॥९२॥
[9]अनुपश्लिष्टशब्दं यत् तद्विसन्धीति [10]काशितम् ।
[11]शब्दच्युतं च [12]विज्ञेयम[प]शब्दस्य योजनात् ॥९३॥
एते दोषा हि काव्यस्य मया सम्यक् प्रकीर्तिताः ।
गुणा विपर्ययादेषां माधुर्यौदार्यलक्षणाः ॥९४॥

85-94 (B.XVI 87-95, C. 97-95) 1 B. काव्यं कुर्यात्तु 2 B गुणास्तथा. 3 C. अगूढमर्था. 4 B गूढार्थमिति संज्ञितम् 5 C मा त्वशेषा. 6 B. विद्यते. 7 B. अविशेषाभिधानं 8 B. पदेन. 9 C. अनुप्रविष्टा 10 B. कीर्तितम्. 11 C. शब्दहीनं. 12 C विज्ञेयमशब्द; B. विज्ञेयमवर्णस्वरयोजनात्.

श्लेषः प्रसादः समता समाधिर्माधुर्यमोजः पदसौकुमार्यम् ।
अर्थस्य च व्यक्तिरुदारता च कान्तिश्च काव्यस्य गुणा दशैते ॥९५॥
ईप्सितेनार्थजातेन सम्बद्धानां परस्परम् ।
श्लिष्टता या पदानां हि श्लेष इत्यभिधीयते[1] ॥९६॥
अप्यनुक्तो बुधैर्यत्र शब्दोऽर्थो वा प्रतीयते ।
[1]सुखशब्दार्थसम्बोधात् प्रसादः [2]परिकीर्त्यते ॥९७॥
अन्योन्यसदृशा [3]यत्र तथा ह्यन्योन्यभूषणाः[4] ।
अलङ्कारगुणाश्चैव [5]समासात् समता यथा[6] ॥९८॥
[1]उपमाद्युपदिष्टानामर्थानां यत्नतस्तथा ।
प्राप्तानां [2]चातिसंयोगः समाधिः परिकीर्त्यते[3] ॥९९॥
बहुशो यच्छ्रुतं वाक्यमुक्तं वापि पुनः पुनः ।
नोद्वेजयति यस्माद्धि तन्माधुर्यमिति स्मृतम् ॥१००॥
[1]अवगीतोऽपि हीनोऽपि [2]स्यादुदात्तावभावकः ।
यत्र [3]शब्दार्थसम्पत्तिस्तदोजः परिकीर्तितम् ॥१०१॥
सुखप्रयोज्यैर्यच्छब्दैर्युक्तं सुश्लिष्टसन्धिभिः ।
सुकुमारार्थसंयुक्तं सौकुमार्यं तदुच्यते ॥१०२॥

95-96 (B.XVI. 96-97, C. 96, 98) 1 B 98, C. 97 add विचारगहनं यत्स्यात्स्फुटं चैव स्वभावतः । स्वतः सुप्रतिबद्धं च श्लिष्टं तत् परिकीर्तितम्. 97-98 (B.XVI. 99, 101, C. 99-100). 1 B. ०शब्दार्थसंयोगात्. 2 B स तु कीर्त्यते. 3 C ०सदृशं 4 C ०भूषणम्. 5 B. समाः स्युः समया मता. 6 B another def. नातिचूर्णपदैर्युक्ता न च व्यर्थाभिधायिभिः । दुर्बोधनैश्च न कृता समत्वात् समता मता. 99-100 (B.XVI. 103, 104, C. 101-102). 1 C. उपमाश्लिष्टानां. 2 B. चापि संक्षेपात् समाधिनिर्णयो मतः. 3 B adds def. अभियुक्तैर्विशेषस्तु योऽर्थस्येहोपलक्ष्यते । तेन चार्थेन संपन्नः समाधिः परिकीर्तितः. 101-102 (B.XVI. 126-107, C. 103-104). 1 C. अवगीतोऽपि हीनोऽपि. 2 B. ०त्तावभासकः, 3 B. संपत्या.

यस्यार्थोऽनुप्रवेशेन मनसः परिकल्प्यते ।
[1]अनन्तरं प्रयोगस्य सार्थव्यक्तिरुदाहृता[2] ॥१०३॥
अनेकार्थविशेषैर्यत् सूक्तैः सौष्ठवसंयुतैः ।
उपेतमतिचित्रार्थं [3]उदात्तं तच्च कीर्त्यते ॥१०४॥
[1]यो मनःश्रोत्रविषयः प्रसादजनको भवेत् ।
शब्दबन्धो प्रयोगेण स कान्त इति भण्यते ॥१०५॥

एवमेते ह्यलङ्कारा गुणा दोषाश्च कीर्तिताः ।
प्रयोगमेषां च पुनर्वक्ष्यामि रससंश्रयम् ॥१०६॥
लघ्वक्षरप्रायकृतं उपमारूपकाश्रयम् ।
काव्यं कार्यं तु [1]काव्यज्ञैर्वीररौद्राद्भुताश्रयम् ॥१०७॥
गुर्वक्षरप्रायकृतं बीभत्से करुणे तथा ।
कदाचिद्रौद्रवीराभ्यां यदार्षणजं भवेत् ॥१०८॥
* रूपदीपकसंयुक्तमार्यावृत्तसमाश्रयम् ।
[2]शृङ्गारे तु रसे कार्यं [3]मृदुवृत्तं तथैव च ॥१०९॥
उत्तरोत्तरसंयुक्तं वीरे [4]पाठ्यं तु यद्भवेत् ।
जगत्यातिजगत्यां वा संकृत्यां [5]चापि तद्भवेत् ॥११०॥
[6]तथैव युद्धसंस्फेटा उत्कृत्यां सम्प्रकीर्तितौ ।
करुणे शक्करी ज्ञेया तथैवातिधृतिर्भवेत् ॥१११॥

103-104 (B.XVI. 109, 111, C. 105-106). 1 B. अनन्तप्रयोगस्य. 2 B (108) adds def. सुप्रसिद्धाभिधाना तु लोककर्मव्यवस्थिता । या क्रिया क्रियते काव्ये सार्थव्यक्तिः प्रकीर्त्यते. 3 C. उदात्तं तच. 105 (B.XVI. 112 ; C.107). 1 B. यन्मनःश्रोत्रविषयमाह्लादयति हीन्दुवत् । लीलाद्यर्थोपपन्ना वा तां कान्तिं कवयो विदुः 106-112 (B. XVI· 113-119 ; C. 108-114). 1 B. नाट्यज्ञैर्वीर. 2 C. शृङ्गारे रसकार्यं तु. 3 C. काव्यं स्यान्नाटकाश्रयम्. 4 C. काव्यं. 5 B. चैव योजयेत्. 6 B. युद्धसंफेटयोर्न्वज्ञैरुत्कृतिः.

यद्वीरे कीर्तितं छन्दस्तद्रौद्रेऽपि प्रयोजयेत् ।
शेषाणामर्थयोगेन छन्द कार्यं प्रयोक्तृभिः ॥११२॥
त्रिविधं ह्यक्षरं [1]कार्यं कविभिर्नाटकाश्रयम् ।
ह्रस्वं दीर्घं प्लुतञ्चैव [2]रसभावविभावकम् ॥११३॥
एकमात्रं भवेद् ह्रस्वं द्विमात्रं दीर्घमिष्यते ।
प्लुतं चैव त्रिमात्रं स्यादक्षरं [3]स्वरयोजनात् ॥११४॥
स्मृते [4]चासूयिते चैव तथा च परिदेविते ।
पठतां ब्राह्मणानां च प्लुतमक्षरमिष्यते ॥११५॥
[5]आ-कारस्तु स्मृते कार्य ऊ-कारश्चाप्यसूयिते[6] ।
परिदेविते तु हा कार ओं-कारोऽध्ययने तथा ॥११६॥
ह्रस्वदीर्घप्लुतानीह यथाभावं यथारसम् ।
[7]काव्ययोगेषु सर्वेषु ह्यक्षराणि तु योजयेत् ॥११७॥
[1]ये बन्धा पूर्वमुद्दिष्टा विषमार्धसमाः समाः ।
[2]उदारशब्दैर्मधुरै कार्यास्तेऽर्थवशानुगा ॥११८॥

शब्दानुदारमधुरान् [3]प्रमदाभिधेयान्
[4]नाट्याश्रयासु कृतिषु प्रयतेत कर्तुम् ।
[5]तैर्भूषिता [6]बहु विभान्ति हि काव्यबन्धाः
पद्माकरा विकसिता इव राजहंसै ॥११९॥

113-117 (B.XVI. 122-126; C. 115-119). 1 C. काव्यं विज्ञेयं. 2 B पदबन्धसमाश्रयम्. 3 B. वर्णसंश्रयम्. 4 C. चाद्भुते. 5 C. अकारस्तु. 6 C. ०प्यसूचिते. 7 B. काव्यबन्धेष्वशेषेषु. C. काव्ययोगेषु सर्वेषु ह्यक्षराणि कृतो- जयेत्. 118-121 (B.XVI. 120-121, 127-128; C. 120-123). 1 B. यच्छन्दः पूर्वमेवोक्तं विषमार्धसमे समम्. 2 B. उदारमधुरैः शब्दैस्तत्कार्यं तु रसानुगम्. 3 C. प्रमदाभिनेयान् 4 C. नाट्याश्रयासु. 5 B. तैर्भूषिता, C. तैर्भूषिता. 6 B. भुवि.

[7]चेकीडितप्रभृतिभिर्विकृतैस्तु शब्दै-
र्युक्ता न भान्ति ललिता भरतप्रयोगाः।
[8]कृष्णाजिनाक्षरुचर्मधरै[9]-र्घृताक्तै-
[10]र्वेश्या द्विजैरिव कमण्डलुदण्डहस्तैः ॥१२०॥

मृदुललितपदार्थं गूढशब्दार्थहीनं
[11]जनपदसुखभोग्यं [12]बुद्धिमन्नृत्तयोज्यम्।
[13]बहुरसकृतमार्गं सन्धिसन्धानयुक्तं
भवति जगति योग्यं नाटकं प्रेक्षकाणाम् ॥१२१॥

इति भारतीये नाट्यशास्त्रे वागभिनयो नाम
सप्तदशोऽध्यायः।

7 C. चेकीडितप्रकृतिभिर्विकृतैस्तु. 8 B. Ag. यज्ञक्रियेव, C. कृष्णाजिनाद्य. 9 C. ०द्यचर्मधुरै. 10 C. विप्रधा. 11 C बुधजनसुखयोग्य. 12 B. युक्तिमन्नृत्य, C. ०नृत्तयोग्यम्. 13 B बहुरसकृत.

# अष्टादशोऽध्यायः

एवं तु संस्कृतं पाठ्यं मया प्रोक्तं [1]द्विजोत्तमाः ।
[2]प्राकृतस्य तु पाठ्यस्य संप्रवक्ष्यामि लक्षणम् ॥१॥
एतदेव विपर्यस्तं संस्कारगुणवर्जितम् ।
विज्ञेयं प्राकृतं पाठ्यं नानावस्थान्तरात्मकम् ॥२॥
त्रिविधं तच्च विज्ञेयं नाट्ययोगे समासतः[1] ।
समानशब्दं विभ्रष्टं देशीगतमथापि च[3] ॥३॥
कमलामलरेणुतरङ्गलोलसलिलादिवाक्यसंपन्नम् ।
प्राकृतबन्धेष्वेवं [1]संस्कृतमिव प्रयोगमुपयाति ॥४॥
ये वर्णाः संयोगात् [2]स्वरवर्णान्यत्वन्यूनतां चापि
[3]गच्छन्ति पदन्यस्तास्ते विभ्रष्टा इति ज्ञेयाः[4] ॥५॥

** [1]एओआरपराणि अ अंआर परं अ पाअए णत्थि ।
** वसआरमज्झिमाइ अ कचवग्गतवग्गणिहणाइं[1] ॥६॥
** वच्चंति कगतदयवा लोपं अत्थं च से वहति सरा ।
** खघथधभा उण हत्तम् उवेन्ति अत्थमम्मुंचंता ॥७॥

1-3 (B XVII. 1-3, C. 1-3) 1 B समासत. 2 C. प्राकृतस्यापि. 3 B adds पाठ्यमेवं तु विज्ञेयं सस्कृत प्राकृत यथा. 4 (B.XVII. 4b-5a; C. 4). 5 (B.XVII. 5b-6a; C. 5). 1 B. सस्कृतमपि. 2 B. वर्णान्यत्वमूनता चापि. 3 B. यान्त्यपदादौ प्रायो विभ्रष्टास्तान् विदुर्विप्रा. 4 B adds ये वर्णा वर्णगता व्यञ्जनयुक्ताश्च ये स्वरा नियताः। तानपरस्परवृत्ते प्राकृतयुक्त्या प्रवक्ष्यामि यथा. 6-9 (B.XVII. 7-10; C. 6 8). 1 C ए ओ आरपराणिअकारपरौ चवा अएणायि वसआरमम्मि माइतवर्णं त वर्णनिगर्गं ॥ वच्छन्ति कटतदवयवा लोवम

** उप्परहुत्तरआरो हेट्ठहुत्तो अ पाअए णत्थि ।
** मोत्तूण भद्दवोद्रह पद्रह्रद चन्द्र जाईस ॥८॥
** सघयघभाण हआर मुहमेहकहा बहु पहूपसु ।
** कगतदयवाण णिच्चं वीयम्मि ठिओ सरो होइ ॥९॥

छ [1]इति षकारो नित्यं वोद्धव्यः षट्पदादियोगे [2]तु ।
किलशब्दो [3]रेफान्तो भवति, यथा क्खुत्ति खलुशब्दः ॥१०॥
ड इति भवति टकारो [4]भटकटककुटीनटाद्येषु ।
सत्वञ्च भवति शषयोः सर्वत्र [5]यथा विसं संका ॥११॥
अस्पष्टश्च दकारो भवति अनादौ तकार [1]इतराद्यः ।
वडवा तडागतुल्यो भवति डकारोऽपि [2]लकारः ॥१२॥
[3]वधमधुशब्दे च तथा धकारवर्णो हकारतां याति ।
सर्वत्र च प्रयोगे भवति नकारोऽपि च णकारः ॥१३॥
आपाणं आवाणं भवति पकारे वत्वयुक्तेन ।
अयथातथादिकेषु [1]थकारवर्णो व्रजति हत्वम् ॥१४॥
परुषं फरुसं विद्यात् पकारवर्णोऽपि फत्वमुपयाति ।
यस्तु मृगः सोऽपि मओ यस्तु मृत' सोऽपि तथैव ॥१५॥
ओकारत्वं [2]गच्छत्यौकारश्चौषधादिषु नियुक्तः ।
[3]प्रचयाचिराचलादिषु चकारवर्णोऽपि च यकार. ॥१६॥

वअपच ते वहति मरा । खप्पतुघलाऊपइहत्य उपतिर्थ्र अमुचंता तचउरयरोहे । ण हुंतो अत्रअएखत्यि मोहूएश्रअवेश्रवरभ्रुदुगचन्दरारंमुक कगतिवाए अएिचनोपजमयिश्रो सरोहोल ऋशो. 13-11 (B.XVII. 11-12 ; C. 9-10). C. इति च. 2 B. यु. 3 B. •अन्त्यो रेफो. 4 C. मटकुटकुटि•. 5 C. तथाहि सप आदेशः 12-13 (B XVII. 13-14 ; C. 11-12). 1 C. इतराद्ये. 2 B. ककारः. 3 B. वर्धनगते च भावे धकारवर्णोऽपि ढत्वमुपयाति. Bg. शठपाठपीठिकादिषु ठकारवर्णोऽपि ढत्वमुपयाति. 14-16 (B.XVII. 15-17 ; C. 12c-15a). 1 B. भकारवर्णो. 2 B. गच्छेदौ. 3 B. प्रचला.

यपरस्वरनिष्पन्ना ह्येवं प्राकृतसमाश्रया वर्णाः ।
संयुक्तानां च पुनर्वक्ष्ये परिवृत्तिसंयोगम्[1] ॥१७॥

** [1]श्चत्प्सथ्याः छ इति ध्यह्ययोर्भवति तु ज्झकारः ।
** [2]ष्टः ट्ठः स्तः त्थः ष्मो म्ह ष्णस्नक्ष्णां ण्हः क्षः [3]खकाररूपः ॥

[4]आश्चर्यं मात्सर्यं चेत्यनयोर्भस्य रियं वै तथा ।
[5]उत्साहश्चोच्छाहो पथ्यं पच्छं च विज्ञेयम् ॥१९॥
तुभ्यं तुज्झं मह्यं मज्झं विध्यश्च भवति [6]विंज्झ इति ।
[7]दृष्टो दट्ठो इति तथा हस्तोऽपि [तु] हत्थ इत्येवम् ॥२०॥
ग्रीष्मो गिम्हो च तथा श्लक्ष्ण लण्हं सदा तु विज्ञेयम् ।
कृष्णः कण्हो यक्षो जक्खो च पल्लङ्क पर्यङ्के ॥२१॥
[8]विपरीतं ह्मयोगो ब्रह्मादौ स्याद् बृहस्पतौ फत्यम् ।
यज्ञश्च भवति जण्णो भीष्मो[9] भिम्मो हि विज्ञेयः ॥२२॥
[10]उपरिगतोऽधस्ताद् वा भवेत् ककारादिकस्तु यो वर्णः ।
स हि संयोगविहीनः [11]शुद्धः कार्यः प्रयोगेऽस्मिन् ॥२३॥
एवमेव तु विज्ञेयं प्राकृतं संस्कृत तथा ।
अत ऊर्ध्वं प्रवक्ष्यामि देशभाषाविकल्पनम् ॥२४॥

भाषा चतुर्विधा ज्ञेया दशरूपप्रयोगत. ।
संस्कृतं प्राकृतं चैव यत्र पाठ्यं प्रयुज्यते ॥२५॥

17-24 (B.XVII 17-26a ; C. 15b-13a) 1 C. श्चत्प्सप्सा च्छ. 2 C ष्ट ट्ठः स्त त्थ ष्पाह्म. 3 C. खकाररूपो हि. B. खकाररूपोऽपि. 4 B. आश्चर्यं अच्छरियं निश्चयमिवदन्ति निच्छयं च यथा वत्सं वच्छं च यथा अप्सरसं तहच्छरस्त्र. 5 B. उत्साहो उच्छा हो. 6 B. विंज्झोत्ति 7 B. दष्टो दट्ठोत्ति वहा. C. हृष्टो दक्ष इति स्यात् 8 C. विपरीतमयोगेन. 9 B.C. भिश्नोत्ति. 10 C. उपरिगते तोऽधस्तात्. 11 C. शुद्धं कार्यं. 25 (B.XVII. 26b-27a , C. 23b-24a) 1 C. देशरूपप्रयोगत·.

[1]अतिभाषार्यभाषा च जातिभाषा तथैव च ।
तथा [2]योन्यन्तरी चैव भाषा नाट्ये प्रकीर्तिता ॥२६॥
अतिभाषा तु देवानामार्यभाषा तु भूभुजाम् ।
[3]संस्कारगुणसंयुक्ता [4]सप्तद्वीपप्रतिष्ठिता ॥२७॥
[5]द्विविधा जातिभाषा च प्रयोगे समुदाहृता ।
[6]म्लेच्छदेशप्रयुक्ता च [7]भारतवर्षमाश्रिता ॥२८॥
अथ [1]योन्यन्तरीभाषा ग्राम्यारण्यपशूद्भवा ॥२७॥
नानाविहंगजा चैव नाट्यधर्मप्रयोगतः ॥२९॥
जातिभाषाश्रयं पाठ्यं द्विविधं समुदाहृतम् ।
प्राकृतं संस्कृतं चैव चातुर्वर्ण्यसमाश्रयम् ॥३०॥
धीरोद्धते [2]धीरललिते धीरोदात्ते तथैव च ।
धीरप्रशान्ते च तथा पाठ्यं योज्यं तु संस्कृतम् ॥३१॥
[3]एषामेव तु सर्वेषां नायकानां [4]प्रयोगतः ।
कारणव्यपदेशेन प्राकृतं संप्रयोजयेत् ॥३२॥
[1]ऐश्वर्येण प्रमत्तस्य दारिद्र्येण प्लुतस्य च ।
[2]उत्तमस्यापि पठतः प्राकृतं संप्रयोजयेत् ॥३३॥
[3]व्याजलिङ्गप्रतिष्ठानां श्रमणानां तपस्विनाम् ।
[4]भिक्षुचक्रचराणाञ्च प्राकृतं संप्रयोजयेत् ॥३४॥

26-28 (B.XVII. 27b-30a ; C. 24b-27a). 1 Bch अभिभाषा. 2 C. जालन्तरी. 3 B.C. संस्कारपाठ्यसंयुक्ता. 4 B.C. सम्यङ्न्याय(न्याय्य)-प्रतिष्ठिता, we with Bbh. 5 Bcd. विविधा. 6 B.C. म्लेच्छशब्दोपचारा, we with Bbh. 7 Bbh तथा भारतसंश्रया. 29-32 (B.XVII. 30b-34a ; C. 27b-31a). 1 C. या जालन्तरी. 2 B. सललिते. 3 B. एतेषामपि. 4 B. प्रयोगजम् 33-34 (B XVII. 34b-36 ; C. 31b-33a). 1 B. precedes this by दारिद्र्याध्ययनाभावयदृच्छादिभिरेव च. 2 B. अनधीतोत्तमानां. 3 B. ॰लिङ्गप्रविष्टानां. 4 C. भिक्षुचाट.

[1]बाले ग्रहोपसृष्टे च स्त्रीणां स्त्रीप्रकृतौ तथा ।
नीचे मत्ते सलिङ्गे च प्राकृतं पाठ्यमिष्यते ॥३५॥
परिव्राण्मुनिशाक्येषु [2]चौक्षेषु श्रोत्रियेषु च ।
[3]द्विजा ये चैव लिङ्गस्थाः संस्कृतं तेषु योजयेत् ॥३६॥
राज्ञश्च गणिकायाश्च शिल्पकार्यास्तथैव च
[4]कार्यावस्थान्तरकृतं योज्यं पाठ्यन्तु संस्कृतम् ॥३७॥
[5]सन्धिविग्रहसम्पन्नं तथा [6]प्रातवाग्गतिम् ।
ग्रहनक्षत्रचरितं खगानां रुतमेव च ॥३८॥
सर्वमेतद्धि विज्ञेयं [7]यस्माद्राज्ञ्‌: शुभाशुभम् ।
नृपपत्न्या [8]स्मृतं तस्मात् काले पाठ्यं तु संस्कृतम् ॥३९॥
क्रीडार्थं सर्वलोकस्य प्रयोगे तु सुखाश्रयम् ।
[1]कलाभ्यासाश्रयं चैव पाठ्यं वेश्यासु संस्कृतम् ॥४०॥
[2]कलोपचारज्ञानार्थं क्रीडार्थं पार्थिवस्य तु ।
निर्दिष्टं [3]शिल्पकार्यास्तु नाटके संस्कृतं वचः ॥४१॥
आम्नायसिद्धं सर्वासां शुभं चाप्सरसां वचः ।
संसर्गाद्देवतानां वै तद्धि लोकोऽनुवर्तते ॥४२॥
छन्दतः प्राकृतं [5]पाठ्यं स्मृतमप्सरसां भुवि ।
मानुषाणां च कर्तव्यं कारणार्थव्यपेक्षया ॥४३॥
न वर्वरकिरातान्ध्रद्रमिलाद्यासु जातिषु ।
नाट्ययोगे तु कर्तव्यं [6]पाठ्यं भाषासमाश्रयम् ॥४४॥

35-39 (B.XVII. 37-41, C. 33b-38a). 1 B. reads 35 as भागवततापसोन्मत्तबालनीचग्रहोपसृष्टेषु । स्त्रीनीचजातिषु तथा नपुंसके प्राकृतं योज्यम् 2 B. चोक्षेषु, C. चैक्षेषु Bm चोदनेषु. 3 B. शिष्टा. 4 B. कलावस्थान्तर. 5 C. •विग्रहसम्बन्धं. 6 C. चाप्यशुभं शुभम्. 7 C. कार्यबन्धे. 8 C. नृपपत्न्या भवेत् पाठ्यं संस्कृतम्. द्विजसत्तमा. 40-45 (B XVII. 42-47; C 38b-44a). 1 B. प्रयोगे च 2 C क्रीडानीलार्थक 3 C. लोकोपचार. 4 C. शिल्पकार्येषु. 5 C. वाक्यं. 6 C. काव्यं.

[7]सर्वास्वेव हि शुद्धासु जातिषु द्विजसत्तमाः ।
[9]शौरसेनीं समाश्रित्य भाषा कार्या तु नाटके ॥४५॥
अथवा छन्दतः कार्या देशभाषा प्रयोक्तृभिः ।
नानादेशसमुत्थं हि काव्यं भवति नाटके ॥४६॥
मागध्यवन्तिजा प्राच्या [1]शौरसेन्यर्धमागधी ।
वाह्लीका दाक्षिणात्या च सप्त भाषाः प्रकीर्तिताः ॥४७॥
** शकाराभीरचण्डालशवरद्रविडान्ध्रजाः[2] ।
** हीना वनेचराणाञ्च विभाषा नाटके स्मृता ॥४८॥
मागधी तु [3]नरेन्द्राणामन्तःपुरनिवासिनाम् ।
चेटानां राजपुत्राणां श्रेष्ठीनां चार्धमागधी ॥४९॥
प्राच्या विदूषकादीनां [4]धूर्तानामप्यवन्तिजा ।
नायिकानां सखीनां च शौरसेन्यविरोधिनी ॥५०॥
[5]यौधनागरिकादीनां दाक्षिणात्या च दीव्यताम् ।
वाह्लीकभाषोदीच्यानां खसानां च स्वदेशजा ॥५१॥
** [1]शकाराणां शकादीनां तत्स्वभावश्च यो गणः ।
** शकारभाषा योक्तव्या [2]चाण्डाली पुल्कसादिषु ॥५२॥
** [3]अङ्गारकारव्याधानां काष्ठपत्रोपजीविनाम् ।
** योज्या [4]शवरभाषा तु किञ्चिद्वानौकसी तथा ॥५३॥
** [5]गजाश्वाजाविकोष्ट्रादिघोषस्थाननिवासिनाम् ।
** आभीरोक्तिः शाबरी च द्रामिडी [6]वनचारिषु ॥५४॥

7 B सर्वास्वेव हि शुद्धासु 9 C सौरसेनं. 46-50 (B XVII. 48-52; C. $44^{b}$-$49^{a}$) 1 B. शोरसेनी, C. सूरसेनी. 2 B. शकाराभीर-चण्डाल-शवरद्रमिलान्ध्रजाः, C. शवराभीरचण्डालसचरद्रविडोद्रजाः. 3 B. नरेन्द्राणामन्तः-पुरसमाश्रयाः, C. नराणाञ्चैवान्तपुरनिवासिनाम् 4 C. योज्या भाषा. 5 C. ०नागरिका-दीना. 51-54 (B XVII. 53-56, C $49^{b}$-52, $54^{a}$). 1 C. शवराणा, B. शकारघोषकादीना 2 C. पाञ्चाली. 3 B. अङ्गारकारकव्याधकाष्ठयन्त्रोपजीविनाम्. 4 B. शकारभाषा. 5 B. गजाश्वाजाविको०. 6 C. द्रविडादिषु

[1]सुरङ्गखनकादीनां [2]सन्धिकाराश्वरक्षताम् ।
व्यसने [3]नायिकादीनामात्मरक्षासु मागधी ॥५५

** गङ्गासागरमध्ये तु ये देशाः संप्रकीर्त्तिताः ।
** एकारबहुलां तेषु भाषां तज्ज्ञः प्रयोजयेत् ॥५६॥
** विन्ध्यसागरमध्ये तु ये देशाः श्रुतिमागताः ।
** नकारबहुलां तेषु भाषां तज्ज्ञः प्रयोजयेत् ॥५७।
** सुराष्ट्रावन्तिदेशेषु [1]वेत्रवत्यन्तरेषु च ।
** ये देशास्तेषु कुर्वीत [2]चकारबहुलामिह ॥५८॥
** हिमवत्सिन्धुसौवीरान् [3]येऽन्ये जनाः समाश्रिताः ।
** उकारबहुलां [4]तेषु नित्यं भाषां प्रयोजयेत् ॥५९।
** चर्मण्वतीनदीतीरे ये चार्बुदसमाश्रयाः ।
** ओकारबहुलां नित्यं तेषु भाषां प्रयोजयेत् ॥६०॥
एवं भाषाविधानन्तु कर्त्तव्यं नाटकाश्रयम् ।
अत्र नोक्तं मया यच्च लोकाद् ग्राह्यं बुधैस्तु तत् ॥६१॥

इति भारतीये नाट्यशास्त्रे भाषाविधानं नाम
अष्टादशोऽध्यायः ॥

55 (B.XVII. 57 , C. 54b-55a). 1 C. सुरङ्गखनका, B. सुरङ्गाखनका. 2 C. औध्द्रिकाना च रक्षताम् , B. सन्धिकाराश्वरक्षताम्. 3 C. नायिकादीना. 56-57 (B.XVII. 59-60 ; C. 55b-56a, 53). 58 59 (B. XVII. 61-62 ; C. 56b-58a). 1 B. वेत्रवत्युत्तरेषु. 2 B. चकारप्रायसंश्रयान्. 3 C. येऽन्यदेशान् , B. ये जनाः समुपाश्रिताः 4 B चन्द्रस्तेषु 60 (B.XVII. 63 ; C. om.). 61 (B.XVII. 64 ; C 48b-49).

# एकोनविंशोऽध्यायः

एवं भाषाविधानं तु मया प्रोक्तं द्विजोत्तमाः[1]।
[2]पुनर्वाक्यविचारं तु लौकिकं संनिबोधत ॥१॥
उत्तमैर्मध्यमैर्नीचैर्ये संभाष्या यथा नराः।
समानोत्कृष्टहीनाश्च नाटके तान्निबोधत ॥२॥
देवानामपि ये देवा महात्मानो महर्षयः।
भगवन्निति ते वाच्या यास्तेषां योषितस्तथा ॥३॥
देवाश्च लिङ्गिनश्चैव [3]नानाश्रुतिधराश्च ये।
भगवन्निति ते वाच्याः पुरुषैः स्त्रीभिरेव च ॥४॥
आर्येति ब्राह्मणं ब्रूयान् महाराजेति पार्थिवम्।
उपाध्यायेति चाचार्यं वृद्धं तातेति चैव हि ॥५॥
[4]छन्दतो नामभिर्वाच्या ब्राह्मणैस्तु नराधिपाः।
तत्क्षाम्यं [5]तु महीपालैर्यस्मात् पूज्या [6]द्विजाः स्मृताः ॥६॥
ब्राह्मणैः सचिवो वाच्यो ह्यमात्य सचिवेति वा।
शेषैरन्यैर्जनैर्वाच्यो हीनैरार्येति नित्यशः ॥७॥
समैः संभाषणं कार्यं येन नाम्ना तु संज्ञितः।
हीनैः [7]सपरिहारं तु नाम्ना संभाष्य उत्तमः ॥८॥
नियोगाधिकृता [8]ये तु पुरुषा योषितस्तथा।
[9]कारुकाः शिल्पिनश्चैव संभाष्यास्ते तथैव हि ॥९॥
मान्यो[10] भावेति वक्तव्यो किञ्चिदूनस्तु [11]मारिष।
समानो[12] हि वयस्येति [13]हंहो हण्डे इति वाऽधमः ॥१०॥

1-11 (B. XVII. 65-75 ; C. 1-11) 1 B. continues the ch. XVII. 2 B. वाक्यविधानं. 3 B श्रुत०. 4 B नाम्ना राजेति वा. 5 B. हि 6 B.द्विजाः स्मृताः 7 B. Ag. सपरिवारं, Ag. also सपरिहासं. 8 B. श्चैव 9 C. कारकाः 10 C. मान्यो. 11 B. मार्पक. 12 B. ०ह्य. 13 B हहो हण्डेति C. हो हं वा

आयुष्मन्निति वाच्यस्तु रथी सूतेन सर्वदा ।
[14]तपस्वी च प्रशान्तश्च साधो इति हि शब्द्यते ॥११॥
स्वामीति युवराजस्तु कुमारो भर्तृदारकः ।
सौम्य भद्रमुखेत्येवं हेपूर्वं चाधमं वदेत् ॥१२॥
यद्यस्य कर्म शिल्पं वा विद्या वा जातिरेव वा ।
स तेन नाम्ना संभाष्यो नाटकादौ प्रयोक्तृभिः ॥१३॥
वत्स पुत्रक तातेति नाम्ना गोत्रेण वा पुनः ।
वाच्यः शिष्यः सुतो वाऽथ पित्रा वा [1]गुरुणाऽथवा ॥१४॥
संभाष्याः शाक्यनिर्ग्रन्था [1]भदन्तेति प्रयोक्तृभिः ।
[2]आमन्त्रणैस्तु पाषण्डाः [3]शेषाः स्वसमयाश्रितैः ॥१५॥
देवेति नृपतिर्वाच्यो भृत्यैः प्रकृतिभिस्तथा ।
भट्टेति सार्वभौमस्तु नित्यं परिजनेन हि ॥१६॥
राजन्नित्यृषिभिर्वाच्यः ह्यपत्यप्रत्ययेन वा ।
वयस्य राजन्निति वा भवेद्वाच्यो महीपतिः ॥१७॥
विदूषकेन राज्ञी च [4]चटी च भवतीत्यपि ।
नाम्ना वयस्येत्यपि वा राज्ञा वाच्यो विदूषकः ॥१८॥
सर्वस्त्रीभिः पतिर्वाच्यः आर्यपुत्रेति यौवने ।
अन्यदा पुनरार्येति [5]वाच्यो राज्ञ्यापि भूपतिः ॥१९॥
आर्येति पूर्वजो भ्राता वाच्यः पुत्र इवानुजः[6] ।
पुरुषाभाषणं ह्येवं नाट्ये कार्यं प्रयोक्तृभिः ॥२०॥

[7]पुनस्त्रीणां च वक्ष्यामि संभाषां नाटकाश्रयाम् ।
तपस्विन्यो देवनाश्च वाच्या भगवतीति च ॥२१॥

14 B तपस्वीति. 12-14 (B XVII. 76-78; C 12-14) 1 B. गुरुणापि वा 15-27 (B.XVII. 79-91a; C 15-27a). 1 Bg. भद्रं ते 2 C. आमन्त्रणेषु. 3 C शेषास्तु समयाश्रितैः. 4 C. चेट्या च. 5 B. महाराजेति भूपतिः. 6 B adds योषिद्भिरथ कान्त्येति राजपुत्रेति यौवने:. 7 B. पुनः स्त्रीणां प्रवक्ष्यामि यथाभाष्यास्तु नाटके.

गुरुभार्या च वक्तव्या स्थानीया भवतीति च ।
गम्या भद्रेति वक्तव्या [8]वृद्धाम्बेति च नाटके ॥२२॥
राजपत्न्यश्च संभाष्या सर्वाः परिजनेन तु[9] ।
भट्टिनी स्वामिनी देवी [10]इत्येवं नाटके बुधैः ॥२३॥
देवीति महिषी वाच्या राज्ञा परिजनेन च ।
भोगिन्य [11]परिशिष्टास्तु स्वामिन्य इति वा पुनः ॥२४॥
[12]कुमार्यश्चैव वक्तव्याः प्रेष्याभिर्भर्तृदारिकाः ।
स्वसेति भगिनी वाच्या [13]ज्येष्ठा वत्सेति चानुजा ॥२५॥
ब्राह्मण्यार्येति वक्तव्या लिङ्गस्था व्रतिनी च या ।
पत्नी चार्येति संभाष्या पितुर्नाम्ना सुतस्य वा ॥२६॥
समानाभिस्तथा सख्यो [14]हला भाष्याः परस्परम् ।
प्रेष्या हञ्जेति वक्तव्या स्त्रिया [15]या तूत्तमा भवेत् ॥२७॥
अज्जुकेति [1]भवेद्वेश्या वाच्या परिजनेन तु ।
[2]या त्वत्र वृद्धा सा त्वत्ता भाष्या [3]परिजनेन च ॥२८॥
प्रियेति भार्या शृङ्गारे वाच्या राज्ञेतरेण वा ।
पुरोधःसार्थवाहानां [4]भार्यास्त्वार्येति [5]नित्यशः ॥२९॥

[6]तल्लिङ्गस्थानि नामानि कार्याणि कविभिर्द्विजाः[7] ।
औत्पत्तिकानि यानि [8]स्युर्न प्रख्यातानि नाटके ॥३०॥

8 C. वृद्धा वाच्येति 9 B. वै. 10 B. ०त्येवं वै नाटके बुधैः. 11 C. इति शेषास्तु. 12 C. om. this hem. 13 B वत्सेति च यवीयसी. 14 B हलेति स्यात् परस्परम्. 15 B. यत्तूत्तमा भवेत्. 28-30 (*B* XVII. 92b-95a; C 27b-30a). 1 B. च वक्तव्या वेश्या परिजनेन च. 2 B अत्तेति गणिकामाता वाच्या परिजनेन हि 3 C. नाट्यजनेन. 4 C नार्य० 5 B C सर्वदा, we with Bbh. 6 B. तल्लिङ्गार्थानि. 7 B सदा for द्विजाः. 8 B स्युरप्रख्यातानि.

[1]ब्रह्मक्षत्रस्य नामानि गोत्रकर्मानुरूपतः ।
काव्ये कार्याणि कविभिः शर्मवर्मकृतानि च ॥३१॥
दत्तप्रायाणि नामानि [2]वणिजां तु प्रयोजयेत्[3] ।
शौर्योदात्तानि नामानि तथा शूरेषु योजयेत् ॥३२॥
विजयार्थानि नामानि [4]राजस्त्रीणां तु नित्यशः ।
दत्ता मित्रा च [5]सेनेति वेश्यानामानि [6]योजयेत् ॥३३॥
नानाकुसुमनामानः प्रेष्याः कार्यास्तु नाटके ।
मङ्गलार्थानि नामानि चेटानामपि कारयेत् ॥३४॥
गम्भीरार्थानि नामानि [7]योजयेदुत्तमेषु च ।
यस्मान्नामानुसदृशं कर्म तेषां भविष्यति ॥३५॥
जातिचेष्टानुरूपाणि शेषाणामपि [8]योजयेत् ।
नामानि पुरुषाणां तु स्त्रीणां चोक्तानि तत्त्वतः ॥३६॥
एवं [9]नामविधानं तु कर्तव्यं कविभिस्त्वथ ।
एवं भाषाविधानानि ज्ञात्वा [10]सर्वमशेषतः ॥३७॥
ततः पाठ्यं प्रयुञ्जीत षडलङ्कारसंयुतम् ।

पाठ्यगुणानिदानीं वक्ष्यामः । तद्यथा सप्त स्वरा, त्रीणि स्थानानि, चत्वारो वर्णाः, द्विविधा काकुः, षडलङ्कारा, षडङ्गानि । तेषामिदानीं [1]लक्षणान्यभिव्याख्यास्यामः । तत्र सप्त स्वराः षड्जर्षभगान्धारमध्यमपञ्चमधैवतनिषादाः । एते रसेषूपपाद्याः । यथा—

हास्यशृङ्गारयोः कार्यौ स्वरौ मध्यमपञ्चमौ ॥३८॥

31-37 (B.XVII 95-102, C 30b-37a). 1 C. ब्राह्म॰. 2 C. ॰न्तु प्रयोजयेत् 3 B. adds कापालिकास्तु घण्टान्तनामानः समुदाहृताः. 4 C. राज्ञा स्त्रीणाञ्च कारयेत्. 5 B. सेना च. 6 C. कारयेत्. 7 B स्युत्तमाना प्रयोजयेत्. 8 C. कारयेत्. 9 C. नामाभिधानं. 10 B वर्गाण्यशेषत. 38 (B XVII. 103 ; C. 37b-38a). 1 B. लक्षणम्.

षड्जर्षभौ तथा चैव [1]वीररौद्राद्भुतेषु तु ।
गान्धारश्च निषादश्च कर्तव्यौ करुणे रसे ॥३९॥
धैवतश्चैव कर्तव्यो बीभत्से सभयानके ।
त्रीणि स्थानान्युर कण्ठशिरांसीति [2]भवन्त्यपि ।
शारीर्यामथ वीणायां त्रिभ्य स्थानेभ्य एव च ॥४०॥
उरसः शिरसः कण्ठात् स्वरः काकुः प्रवर्तते ।
आभाषणं तु दूरस्थे शिरसा सम्प्रयोजयेत् ॥४१॥
[1]नातिदूरेऽपि [2]कण्ठेनाप्युरसा चापि पार्श्वतः ।
उरसोदाहृतं वाक्यं शिरसा दीपयेद् बुधः ॥४२॥
कण्ठेन शमनं कुर्या[3]त्पाठ्ययोगेषु [4]नित्यश
उदात्ताश्चानुदात्तश्च स्वरितः कम्पितस्तथा ।
वर्णाश्चत्वार एव स्युः पाठ्ययोगे तपोधनाः ॥४३॥

तत्र हास्यशृङ्गारयो [1]स्वरितोदात्तैः, [2]वर्णैः पाठ्यमुपपाद्यम् वीररौद्राद्भुतेषूदात्तकम्पितैरिति[3], करुणवात्सल्यभयानकेषूदात्तस्वरितकम्पितैरिति ।

द्विविधा काकुः साकांक्षा निराकांक्षा चेति वाक्यस्य साकांक्षनिराकांक्षत्वात् ।

अनियुक्तार्थकं वाक्यं साकांक्षमिति सञ्ज्ञितम् ।
नियुक्तार्थं तु यद्वाक्यं निराकांक्षं तदुच्यते ॥४४॥

तत्र साकाङ्क्षं नाम तारादिमन्द्रान्तम् अनियुक्तार्थम् अनिर्यानित-

39-40 (B. XVII. 104-061, C. 38b-40) 1 B. ॰भूतेष्वथ. 2 B भवन्त्यपि च (B. reads the hem. as prose). 40-43 (B XVII. 106b-109; C. 40-43). 1 B. नातिदूरे च 2 B कण्ठेन ह्युरसा चैव 3 B. पाठ्ययोगेषु. 4 B.C. सर्वदा, we with Bbh. 44 (B XVII. 110-111; C. *prose* and 44). 1 C. om वर्णैः पाठ्यमुपपाद्यम् 2 B. कम्पितैरिति. 3 C. adds वर्णैः पाठ्यमुपपादयेदिति. 4 C. कम्पितै॰.

वर्णालङ्कारं कण्ठोरःस्थानगतम्, निराकाङ्क्षं नाम नियुक्तार्थं निर्यातित वर्णालङ्कारं शिरःस्थानगतं मंद्रादितारान्तमिति। अथ षडलङ्काराः—

उच्चो दीप्तश्च मन्द्रश्च नीचो द्रुतविलम्बितौ।
पाठ्यस्यैते ह्यलङ्काराः लक्षणञ्च निबोधत ॥४५॥

उच्चो नाम शिरःस्थानगतस्तारस्वरः, स च दूरस्थाभाषणविस्मयोत्तरोत्तरसंजल्पदूराह्वानत्रासनाबाधादिषु[1]। दीप्तो नाम शिरःस्थानगतस्तारतरः, स चाक्षेपकलहविवादामर्षोत्कृष्टाधर्षणाक्रोधशौर्यदर्पतीक्ष्णरूक्षाभिधाननिर्भर्त्सनाक्रन्दितादिषु[2]। मन्द्रो नाम उरःस्थानगतो[3] निर्वेदग्लानिशङ्काचिन्तौत्सुक्यदैन्यावेगगुह्यार्थवचनव्याधिगाढशस्त्रक्षतमूर्च्छामदादिषु[4]। नीचो नाम उरःस्थानगतमन्द्रतरः [5]स्वभावाभाषणव्यधितपथिश्रान्तत्रस्तपतितमूर्च्छितादिषु। द्रुतो नाम [6]कण्ठगतः स च त्वरित [7]लल्लनमन्मनमदनभयशीतज्वरत्रस्तायस्तागूढकार्यवेदनादिषु[8]। विलम्बितो नाम कण्ठस्थानगत [9]मन्द्रः [10]शृङ्गारवितर्कितविचारामर्षासूयिताव्यक्तार्थप्रवादलज्जाचिन्तातर्जनविस्मयदोषानुकीर्तनदीर्घरोगनिपीडनादिषु[10]।

अत्रानुवंश्याः श्लोका भवन्ति
उत्तरोत्तरसंजल्पे [11]परुषाक्षेपणे तथा।
तीक्ष्णरूक्षाभिनयने आवेगे क्रन्दिते तथा ॥४६॥
परोक्षस्य समाह्वाने तर्जने त्रासने तथा।
दूरस्थाभाषणे चैव तथा निर्भर्त्सनेषु च ॥४७॥

45 (B XVII 113, C 45) 46 (B XVII 114-115, C *prose* anb 46) 1 C त्रासनार्थं यादेषु 2 C ०निर्भर्त्सनादिषु 3 C om. शङ्का after ग्लानि, B om आवेग after दैन्य 4 C *om* गुह्यार्थवचन after मूर्च्छामद. 5 C. ०व्यधितपथि. B ०व्यधिशमश्रमार्तछन्न 6 C कण्ठगतस्खलित 7 Ag C स्खलितवेल्लन for लल्लनमन्मन, and त्रस्तायस्तातिथिकार्यवेदना after ज्वर. C. कार्यवेदनासु 9 B तनुमन्द्र. 10 B add करुण after शृङ्गार. 10 C. दीर्घरोष for दीर्घरोग. 11 B. परुषाक्षेपणेषु च.

भावेष्वेतेषु नित्यं हि [1]नानारससमाश्रयात् ।
उच्चा दीप्ता द्रुता चैव काकुः कार्या प्रयोक्तृभिः ॥४८॥
व्याधिते च ज्वरार्ते च [1]शोके च क्षुत्पिपासिते ।
नियमस्थे वितर्के च गाढशस्त्रक्षतेषु च ॥४९॥
गुह्यार्थवचने चैव चिन्तायां तपसि स्थिते ।
मन्द्रा नीचा च कर्तव्या काकुर्नाट्यप्रयोक्तृभिः ॥५०॥
[1]लल्ले च मन्मने चैव भयार्ते [2]शीतविप्लुते ।
मन्द्रा द्रुता च कर्तव्या काकुर्नाट्यप्रयोक्तृभिः ॥५१॥
[3]दृष्टानष्टानुसरणे [4]इष्टानिष्टश्रुतौ तथा ।
इष्टार्थाख्यापने चैव [5]चिन्ताध्याने तथैव च ॥५२॥
[1]उन्मादेऽसूयने चैव उपालम्भे तथैव च ।
अव्यकार्थे [2]प्रवादे च [3]कथायोगे तथैव च ॥५३॥
उत्तरोत्तरसंजल्पे कार्येऽतिशयसंयुते ।
[4]विक्षते व्याधिते त्वङ्गे [5]दुःखे शोके तथैव च ॥५४॥
विस्मयामर्षयोश्चैव हर्षे च परिदेविते ।
विलम्बिता च दीप्ता च काकुर्मन्द्रा च वै भवेत् ॥५५॥
लघ्वक्षरप्रायकृते गुर्वक्षरकृते तथा ।
उच्चा दीप्ता च कर्तव्या काकुस्तत्र प्रयोक्तृभिः ॥५६॥
यानि सौम्यार्थयुक्तानि सुखभावकृतानि च ।
मन्द्रा विलम्बिता चैव तत्र काकुर्विधीयते ॥५७॥

47-48 (B. XVII. 116-117 ; C. 47-48). 1 B. नानारससमाश्रया.
49-50 (B. XVII. 118-119 ; C. om ). 1 B भयार्ते शीतविप्लुते.
51-52 (B.XVII. 120-121 ; C. 49-50). 1 C. मल्ले च मर्दने.
2 C. चितविप्लुते. 3 C. °नष्टानुसारेण. 4 B. इष्टानिष्टश्रुते. 5 C. चिन्तयाने.
53-55 (B.XVII. 122-124 ; C. 51b-53a, 51a, 53b). 1 B. उन्मादेऽसूयिते.
2 C. प्रदाते. 3 C. तपालोके. 4 B. विकृते. 5 C. दुःखशोके. 56-57 (B.
XVII. 125-126 ; C. 55,56.

यानि स्युस्तीक्ष्णरूपाणि दीप्ता चोच्चा च तेष्वऽपि ।
एवं नानाश्रयोपेतं पाठ्यं योज्यं प्रयोक्तृभिः ॥५८॥
हास्यशृङ्गारकरुणेष्विष्टा काकुर्विलम्बिता ।
वीररौद्राद्भुतेषूच्चा दीप्ता चापि[1] प्रशस्यते ॥५९॥
भयानके सबीभत्से द्रुता नीचा च कीर्तिता ।
एवं भावरसोपेता [1]काकुर्योज्या प्रयोक्तृभिः ॥६०॥

अथाङ्गानि[2] । विच्छेदोऽर्पणं विसर्गोऽनुबन्धो दीपनं प्रशमनमिति षडङ्गानि । तत्र विच्छेदो नाम विरामकृतः । अर्पणं नाम [3]लीलावर्णस्वरेणापूरयदिव [4]यङ्ग-परपठ्यते[5] । विसर्गो नाम वाक्यन्यासः । अनुबन्धो नाम [6]पदान्तरेष्वविच्छेदः अनुच्छ्वसनं वा । दीपनं नाम त्रिस्थानशोभि वर्धमानस्वरश्च[7] । प्रशमनं नाम तारं गतानां [8]स्वराणामवैस्वर्येणावतरणमिति । एषाञ्च रसगतः प्रयोगः । तत्र [9]हास्यशृङ्गारयोरर्पणविच्छेददीपनप्रशमनयुक्तं पाठ्यं[10] कार्यं, [11]करुणवीराद्-भुतेषु समाकाङ्क्षाविच्छेदप्रशमनार्पणदीपनानुबन्धनबहुलं पाठ्यं प्रयोज्यं, बीभत्सभयानकयोर्विच्छेदार्पणयुक्तमिति । सर्वेषामप्येषां [11]मन्द्रमध्यतार-व्यवस्थायां त्रिस्थानगतः प्रयोगः । तत्र दूरस्थाभाषणे [12]तारं शिरसा नातिदूरे मध्यं कण्ठेन, पार्श्वतो मन्द्रमुरसा प्रयोजयेत् पाठ्यमिति [13]मन्द्रात्तारं न गच्छेत्ताराद्वा मन्द्रमिति । एषाञ्च [14]द्रुतमध्यविलंबितास्त्रयो लया रसेषूपपाद्याः

58-59 (B.XVII 127-128, C 55,57b-58a). 1 B. चापि. 60 (B. XVII 129-132, C 58bc-59). 1 B काकु. कार्या 2 B. अथाङ्गानि षट् 3 B. लीलायमानमधुरवल्गुना स्वरेण पूरयतेव. 4 Mss. रङ्ग. 5 B. adds तदर्पणम्. 6 B. पदान्तरेष्वपि विच्छेदः अनुच्छ्वसनं वा, C. ०ष्ववि-च्छेदानुच्छ्वासनं वा 7 B. स्वरश्चेति. 8 B. स्वराणां प्रशान्तताम् ..णावतारणम्. 9 B ०रेव आकाङ्क्षायाम् 10 C. वाक्यं 11 B दीपनप्रशमनयुक्तं करुणेविच्छेद-प्रशमनदीपनानुबन्धबहुलं वीररौद्राद्भुतेषु विसर्गविच्छेदयुक्तं बीभत्सभयानकयोरिति. 11 B. मन्द्रमध्यतारकृत प्रयोगः त्रिस्थानगत । 12 C. तार शिरसो । 13 C. मन्द्रात्तारं गच्छेत्ताराद्वा. 14 C. ०विलम्बितास्त्रयो वर्णाः

तत्र हास्यशृङ्गारयोर्मध्यलयः करुणे विलंबितो वीररौद्राद्भुतबीभत्सभयानकेषु द्रुत इति।

अथ विरामः। अर्थसमाप्तौ कार्यवशान्न छन्दोवशात् दृश्यन्ते हि एकद्वित्रिचतुरक्षरा विरामाः। यथा—

किं गच्छ मा विश सुदुर्जन वारितोऽसि
कार्यं त्वया न मम सर्वजनोपभुक्त[1]।
सुचासु चाङ्कुरगतेऽत्र तथोपचारे-
ष्वल्पाक्षराणि हि पदानि भवन्ति काव्ये ॥६१॥

एवं विरामः प्रयत्नतोऽनुष्ठेय। कस्माद्, [2]विरामोऽर्थानुदर्शको [3]भवति। [4]अपि च श्लोकः—

विरामे [5]तु प्रयत्नो हि नित्यं कार्यः प्रयोक्तृभिः।
[6]कस्मादभिनयो [7]ह्यस्मादर्थापेक्षी यतः स्थितः[8] ॥६२॥
यत्र व्यग्रावुभौ हस्तौ तत्र दृष्टिसमन्वितः।
वाचिकाभिनयः कार्यो विरामैरर्थदर्शिभिः[1] ॥६३॥
प्रायो वीरे च रौद्रे च करौ प्रहरणाकुलौ।
बीभत्से कुत्सितत्वाच्च भवतः कुञ्चितौ करौ ॥६४॥
हास्ये चोद्देशमात्रेण करुणे च प्रलम्बितौ।
अद्भुते [2]विस्मयात् स्तब्धौ भयाच्चैव भयानके ॥६५॥
एवमादिषु [3]सर्वेषु अधिकारेषु हस्तयोः।
अलङ्कारविरामाभ्यां साध्यते ह्यर्थनिश्चयः ॥६६॥
ये विरामाः स्मृता [4]वृत्ते तेष्वलङ्कार इष्यते।
समाप्तेऽर्थे पदे वापि तथा प्राणवशेन च[5] ॥६७॥

61-62 (B.XVII. 132-133 ; C. 59-60). 1 B. ०भुक्तम्, C. ०भुक्तः. 2 C. विरामार्थानुदर्शक. 3 B. om. भवति 4 B. अत्र श्लोकः. 5 B. ०षु प्रयत्नो हि. 6 C. तस्मादभिनये 7 B. ह्यस्मिन्नर्थापेक्षी. 8 B स्मृत. 63-67 (B XVII. 134-138; C. 61-65) 1 B. अर्थदर्शकैः. 2 C. विस्मयस्तब्धौ. 3 B. चान्येषु प्रविचारेऽपि. 4 C. वृत्ते, Bbh. वृत्ते. 5 B. वा

पदवर्णसमासे च द्रुते वह्वर्थसङ्कटे ।
कार्यो विरामः पादान्ते तथा प्राणवशेन वा
शेषमर्थवशेनैव विरामं संप्रयोजयेत् ॥६८॥

[1]अत्र च रसभावानुगतानि कृष्याण्यक्षराणि बोद्धोष्यानि । तद्यथा—

[2][ओ]कारैकारसयुक्तमैकारौकारसंयुक्तम् ।
व्यञ्जनं यद्भवेद्दीर्घं कृष्यं तत्तु [3]भवेदिह ॥६९॥
विषादे च वितर्के च प्रश्ने [4]चाऽमर्षणे तथा ।
कलाकालप्रमाणेन कार्यं पाठ्यं प्रयोक्तृभिः ॥७०॥
शेषाणामर्थयोगेन [5]विरामे विरमेदिह ।
एकद्वित्रिचतुःपञ्च षट्कलं च विलम्बितम् ॥७१॥
विलम्बिते [6]विरामे च [7]यदा गुर्वक्षरं भवेत् ।
षण्णां [8]कलानां परतो [9]लम्बनं न विधीयते ॥७२॥
अथवा कारणोपेतं प्रयोगं कार्यमेव च ।
समीक्ष्य वृत्ते कर्तव्यो विरामो रसभावतः ॥७३॥
[10]ये विरामाः स्मृताः [11]काव्ये वृत्तपादसमुद्भवाः ।
उत्क्रम्यापि क्रमं तज्ज्ञैः कार्यास्तेऽर्थवशात्तथा[11] ॥७४॥
नापशब्दं पठेत् तज्ज्ञो [1]भिन्नवृत्त न चैव हि
[2]विश्रमेष्वविरामेषु [3]दैन्ये काकुं न दीपयेत्[4] ।
एवमेतत् स्वरकृतं कलाकाललयान्वितम् ॥७५॥

68-74 (B XVII 139-145, C 66 73a) 1 C. अत्रानुगतानि चत्वार्यक्षराणि, B अत्र च भावगतानि रसगतानि च कृष्याक्षराणि बोद्धव्यानि 2 C. आकारे॰, B. आकारै॰ 3 B. विधीयते 4 B. ॰थामर्ष एव च. 5 C विरामो. 6 C. विरामे च विलम्बे च. 7 B. सदा. 8 C. पदानां. 9 C. लंघनं, B विलम्बो. 10 B. पाठ्ये. 11 C. ॰र्थवशात्तदा. 75 (B.XVII 146-149a; C. 73b-74). 1 C. भिन्नवृत्तेन, B भिन्नवृत्तं तथैव. 2 C. विश्रमेषा॰. 3 C. न काकु रसहीनकम् 4 C. repeats here the 77a.

[5]व्यपेतं काव्यदोषैस्तु लक्षणाढ्यं गुणान्वितम् ।
स्वरालङ्कारसंयुक्तं पठेत् [6]काव्यं यथाविधि ॥७५॥
[7]अलङ्कारा विरामा ये संस्कृतपाठ्यसंश्रयाः ।
ते सर्वे संप्रकर्तव्याः स्त्रीणां पाठ्ये [8]त्वसंस्कृते ॥७६॥
एवमेतत् [9]स्वरयुतं कलातालयान्वितम् ।
दशरूपविधाने तु योज्यं पाठ्यं प्रयोक्तृभिः ॥७७॥
उक्तं काकुविधानं तु यथावदनुपूर्वशः ।
अत ऊर्ध्वं प्रवक्ष्यामि दशरूपविकल्पनम् ॥७८॥

इति भारतीये नाट्यशास्त्रे वागङ्गाभिनये काकुस्वरव्यञ्जको
नाम एकोनविंशोऽध्यायः ।

5 B. वर्जितं. 6 B. पाठ्यं. 6 C. काव्यदोषैस्तु. 7 B. अलङ्कारा विरामाश्च ये पाठ्ये संस्कृते स्मृता . 8 C. तु. 9 B. स्वरकृतं कलाकालयान्वितम्

# विंशोऽध्यायः

वर्तयिष्याम्यहं विप्राः दशरूपविकल्पनम् ।
नामतः कर्मतश्चैव तथा चैव प्रयोगतः ॥१॥
नाटकं सप्रकरणमङ्को व्यायोग एव च ।
भाणः समवकारश्च वीथी प्रहसनं डिम ॥२॥
[1]ईहामृगश्च विज्ञेयो दशमो नाट्यलक्षणे ।
एतेषां लक्षणमहं व्याख्यास्याम्यनुपूर्वशः ॥३॥
सर्वेषामेव काव्यानां मातृका वृत्तयः स्मृताः ।
आभ्यो [2]विनिःसृतं ह्येतद्दशरूपं प्रयोगतः ॥४॥
जातिभिः श्रुतिभिश्चैव स्वरा ग्रामत्वमागताः ।
यथा [3]तथा वृत्तिभेदैः काव्यबन्धा भवन्ति हि ॥५॥
ग्रामौ पूर्णस्वरौ द्वौ तु [4]यथा वै षड्जमध्यमौ ।
सर्ववृत्तिविनिष्पन्नौ [5]काव्यबन्धे तथात्विमौ ॥६॥
ज्ञेयं प्रकरणं चैव तथा नाटकमेव च ।
[6]सर्ववृत्तिविनिष्पन्नं [7]नानावस्थासमाश्रयम् ॥७॥
[8]भाणः समवकारश्च [9]वीथी चेहामृगस्तथा ।
उत्सृष्टिकाङ्को व्यायोगो[10] डिमः प्रहसन तथा ॥८॥
कैशिकीवृत्तिहीनानि रूपाण्येतानि कारयेत् ।
अत ऊर्ध्वं प्रवक्ष्यामि काव्यबन्धविकल्पनम् ॥९॥
प्रख्यातवस्तुविषयं प्रख्यातोदात्तनायकं चैव ।
राजर्षिवंशचरितं [11]तथा च दिव्याश्रयोपेतम् ॥१०॥

1-11 (B XVIII 1-11 ; C 1-11). 1 C ईहामृगश्च विज्ञेय दशम नाट्य लक्षणम् 2 C विनि सृता. 3 C. यथा for तथा. 4 C तथा for यथा 5 B काव्यबन्धौ 6 B. ०विनिष्पन्नौ 7 C नाट्यावस्था०. 8 B वीथी for भाणः. 9 B तथेहामृग एव च 10 B. भाण प्रहसनं डिम· 11 B. तथैव

[12]नानाविभूतिसंयुतमृद्धिविलासादिभिर्गुणैश्चापि ।
[13]अङ्कप्रवेशकाढ्यं भवति[13] हि तन्नाटकं नाम ॥११॥
नृपतीनां यच्चरितं नानारसभावचेष्टितैर्बहुधा[1] ।
सुखदुःखोत्पत्तिकृतं [2]तज्ज्ञेयं नाटकं नाम ॥१२॥
[3]नानावस्थान्तरितो बिन्दोः सं-[चा-]रमात्रमधिकृत्य ।
[4]कर्तव्योऽङ्कोऽप्येवं [5]स तु सम्यङ् नाटके तज्ज्ञैः ॥१३॥
अङ्क इति रूढिशब्दो भावैश्च रसैश्च रोहयत्यर्थान् ।
नानाविधानयुक्तो यस्मात्तस्माद् भवेदङ्कः ॥१४॥
अङ्कसमाप्तिः [6]कार्या [7]काव्यच्छेदे न बीजसंहारः ।
वस्तुव्यापी बिन्दुः काव्यसमुत्थोऽत्र नित्यं स्यात् ॥१५॥
यत्रार्थस्य समाप्तिर्यत्र [1][न] बीजस्य भवति संहारः ।
किञ्चिदवलग्नबिन्दुः सोऽङ्क इति सदाऽवगन्तव्यः ॥१६॥
ये नायका निगदितास्तेषां प्रत्यक्षचरितसंयोगः ।
[2]नानावस्थोपेतः कार्यस्त्वङ्कोऽ[3]विकृष्टस्तुः ॥१७॥
[4]नायकदेवीगुरुजनपुरोहितामात्यसार्थवाहानाम् ।
नैकरसान्तरविहितो ह्यङ्कः [5]खलु वेदितव्यः स.[6] ॥१८॥
क्रोधप्रसादशोकाः शापोत्सर्गोऽथ विद्रवोद्वाहौ ।
[7]अद्भुतसंश्रयदर्शनमङ्के[ऽ]प्रत्यक्षजानि स्युः ॥१९॥

12 B. ०विभूतिभिर्युतम्. and ०गुणैश्चैव. 13 C. अङ्कप्रवेशकाव्यं. 12-15 (B.XVIII. 12-15; C. 12-15). 1 B. ०चेष्टितं बहुधा. 2 B. भवति हि. 3 B. नानावस्थोपेतं कार्यं प्रयत्नोदय, बिन्दुविस्ताराद्. 4 C. कर्तव्याङ्कोऽप्येवं, B कर्तव्योऽङ्कः सोऽपि. 5 B. तु गणान्वितं नाट्यतत्त्वज्ञैः 6 C. om. कार्या. 7 C. काव्यच्छेदो न, B. काव्यच्छेदेन बीज०. 16-19 (B.XVIII. 16-20; C. 16-20). 1 Mss. च 2 C. नानावस्थान्तरित 3 C. यथार्थरसः. 4 C. देवीपरि०. 5 B. इति स वेदितव्यस्तु. 6 BC. add पञ्चाद्या दशपरा ह्यङ्काः स्युर्नाटके प्रकरणे च । निष्क्रामः सर्वेषां यस्मिन्नङ्के स विज्ञेयः. 7 C. ०मङ्कप्रत्यक्षजानि. B ०मङ्के प्रत्यक्षजानि.

युद्धं राज्यभ्रंशो मरणं नगररोपधनञ्चैव ।
[1]अप्रत्यक्षकृतानि प्रवेशकैः संविधेयानि ॥२०॥
[2]अङ्के प्रवेशके वा प्रकरणमाश्रित्य नाटकं वापि ।
न वधः [3]कर्तव्यः स्यात् [4]यस्तत्र तु नायकः ख्यातः ॥२१॥
अपसरणमेव कार्यं ग्रहणं वा [5]सन्धिरेव वा [6]योज्यः ।
[7]तैस्तैः कार्यश्लेषैः प्रवेशकैः [8]सूचयेच्चैव ॥२२॥
एकदिवसप्रवृत्तः कार्यस्त्वङ्कोऽथ बीजमधिकृत्य ।
आवश्यककार्याणामविरोधेन प्रयोगेषु ॥२३॥
एकाङ्के न कदाचित् बहूनि कार्याणि योजयेद्धीमान् ।
आवश्यकाविरोधेन तत्र [9]कार्याणि कार्याणि ॥२४॥
रङ्गं तु ये प्रविष्टाः सर्वेषां भवति तत्र निष्क्रामः ।
बीजार्थयुक्तियुक्तं कृत्वा [10]कार्यं यथार्थरसम्[11] ॥२५॥
ज्ञात्वा [12]दिवसावस्थां [13]क्षणयाममुहूर्तलक्षणोपेताम् ।
विभजेत् सर्वमशेषं पृथक् पृथक् [14]कार्यमङ्केषु ॥२६॥
दिवसावसानकार्यं यद्यङ्के नोपपद्यते सर्वम् ।
अङ्कच्छेदं कृत्वा प्रवेशकैस्तद्विधातव्यम् ॥२७॥
अङ्कच्छेदं [15]कुर्यात् मासकृतं वर्षसञ्चितं वापि ।
तत्सर्वं कर्तव्यं वर्षादूर्ध्वं न तु कदाचित् ॥२८॥

*20-28* (B. XVIII. *38-40, 20-23, 25*, C. *21-29*). *1* B. प्रत्यक्षाणि तु नाङ्के प्रवेशकैः 2 C. अङ्कप्रवेशके च. 3 C. तस्य for कर्तव्यः. 4 C यस्त तु, B. योऽभ्युदयी; we with Bph, d. 5 C. सन्धिवा ग्रहणमेव वा. 6 C. नित्यम्. 7 Bbh. तैस्तैः काव्यश्लेषैः, B. काव्यश्लेषैर्बहुभिर्यथारसं नाट्यतत्त्वज्ञैः, Bm. एभि. कार्यविशेषैः. 8 Bm. सूचयेद्वापि. Bd. सूचयेच्चैव. 9 C काव्यानि. 10 C काव्यं. 11 B adds न बहूनीह कार्याणि त्वेकाङ्के विनियोजयेत् । आवश्यकाना कार्याणा विरोधो हि तथा भवेत्. 12 C दिवसान्तान्. 13 C. ०लक्षणोपेतान् 14 C काव्यमङ्केषु 15 B कृत्वा for कुर्यात्

यः कश्चित् कार्यवशाद् गच्छति पुरुषः प्रकृष्टमध्वानम् ।
तत्राप्यङ्कच्छेदः कर्तव्यः पूर्ववत् तज्ज्ञैः ॥२९॥
सन्निहितनायकोऽङ्कः कर्तव्यो नाटके प्रकरणे [2]च ।
परिजनकथानुबन्धः [3]प्रवेशको [1]वापि कर्तव्यः ॥३०॥
[1]अङ्कान्तराधिकारी [2]सङ्क्षेपमथाधिकृत्य [सन्धी]नाम्[3] ।
प्रकरणनाटकविषये प्रवेशको [4]भवति काव्येषु ॥३१॥
नोत्तममध्यमपुरुषैराचरितो नाप्युदात्तवचनकृतः ।
प्राकृतभाषाचारः प्रयोगमासाद्य कर्तव्यः ॥३२॥
[5]कालार्थान्तरगतिव्यत्यासारम्भकार्यविषयाणाम् ।
[6]अर्थाभिधानपूर्वः प्रवेशकः स्यादनेकार्थः ॥३३॥
बह्वाश्रयमप्यर्थं प्रवेशकैः सङ्क्षिपेच्च सन्धिषु वा ।
[7]बहुचूर्णपदैर्युक्तं जनयति खेदं प्रयोगस्य ॥३४॥
यत्रार्थस्य समाप्तिर्न भवेदङ्के प्रयोगबाहुल्यात् ।
[1]बहुवृत्तान्तोऽल्पकथैः प्रवेशकैः [2]संविधातव्यः ॥३५॥
[3]मध्यमपात्रैः कार्यो नित्यं विष्कम्भकस्तु विज्ञेयः ।
संस्कृतवचनानुगतः [4]सङ्क्षिप्तार्थः प्रवेशकवत् ॥३६॥
शुद्धः सङ्कीर्णो वा द्विविधः [5]खलु नाटके प्रयोगज्ञैः ।
[6]मध्यमपात्रः शुद्धः सङ्कीर्णो नीचमध्यकृत ॥३७॥

29-30 (B. XVIII 32, 28; C. 30-31). 2 B. वा for च. 3 C. प्रवेशके. 31-34 (B XVIII 33-36; C. 32-35). 1 C B. अङ्कान्तरानुसारी, we with Ch. and Bd 2 C सङ्क्षेपमथाधिकृत्य बिन्दूनाम्. B. संक्षेपार्थमधिकृत्य बिन्दूनाम्. 3 Mss. बिन्दूनाम् 4 B संविधातव्य. 5 Bd. कालार्थान्तरसंगतिं, B कालोत्थानगतिरसो व्यासत्यासंरम्भकार्य. 6 B अर्थाभिधानयुक्त. 7 C. बहुपूर्णपदवृत्तं. 35-37 (B XVIII. 37, 54-55; C. 36-38). 1 B. ०वृत्तान्तस्त्वल्पकथै. 2 B. सोऽभिधातव्यः. 3 B मध्यमपुरुषैर्नित्यं योज्यो विष्कम्भकोऽत्र तत्त्वज्ञैः. 4 C संक्षिप्तार्थः. 5 B. विष्कम्भकोऽपि कर्तव्यः. 6 C मध्यमपात्रैः.

अङ्कान्तरे मुखे वा प्रकरणमाश्रित्य नाटके वाऽपि ।
विष्कम्भकस्तु नियतः कर्तव्यो मध्यमैरधमैः[1] ॥३८॥
न महाजनपरिवार कर्तव्यं नाटकं प्रकरणं वा ।
ये तत्र [1]कार्यपुरुषाश्चत्वारः पञ्च वा ते स्युः ॥३९॥
* व्यायोगेहामृगसमवकारडिमसंज्ञितानि काव्यानि ।
* दशभिर्द्वादशभिर्वा [द्वैः] कार्याणि [प्रयोगज्ञैः[1]] ॥४०॥
* न त्ववतरण कार्यं रङ्गे रथगजवाजिविमानानाम् ।
* तेषामाकृतिवेषैर्विधानमुक्तं [2]गतिविचारैः ॥४१॥
* अथवा पुस्तकृतानि तु गजवाजिविमानशैलयानानि ।
* कर्तव्यानि विधिज्ञैस्तथा [3]चाद्रव्यप्रहरणानि ॥४२॥
* यदि [4][कार]णोपपन्ना स्कन्धावारप्रवेशनं कुर्यात् ।
* [5]कर्तव्यमत्रगमनं[5] पुरुषैः षड्भिश्चतुर्भिर्वा ॥४३॥
* [6]अल्पपुरुषाश्ववाहनमल्पपरिच्छदमल्पसञ्चारम् ।
* कार्यं दर्शनरूपं [7]क्षत्रे न नटानां हि राज्यविधिः ॥४४॥
[1]कार्यं गोपुच्छाग्रं कर्तव्यं [2]काव्यबन्धमासाद्य ।
ये चोदात्ता भावास्ते सर्वे पृष्ठतः कार्याः ॥४ ॥
सर्वेषां काव्यानां नानारसभावयुक्तियुक्तानाम् ।
निर्वहणे कर्तव्यो नित्यं हि रसोऽद्भुतस्तज्ज्ञैः ॥४६॥
नाटकलक्षणमेतन्मया समासेन कीर्तितं विधिवत् ।
प्रकरणमतः परमहं लक्षणयुक्त्या प्रवक्ष्यामि ॥४७॥

38 (C 39) 1 Instead of this B. (56) अङ्कान्तरालविहितः प्रवेशकोऽर्थक्रिया समभिवीक्ष्य । संक्षेपात् सन्धीनामर्थानां चैव कर्तव्यः. 39 (B.XVIII. 41 ; C. 40). 1 C. कार्याः पुरुषाः. 40-44 (B.XVIII. om. ; C. 41-45). 1 A part of this hem. is lost. 2 C गतिविचारैः 3 C. चाद्रव्यप्रहरणि. 4 C. करणोपपन्ना. 5 C. कर्तव्यमन्तगमनं. 6 C ॰पुरुषार्थवाहनम् , ॰परिच्छेदम्. 7 C क्षतेन. 45-47 (B XVIII. 42-44 ; C 46-48) 1 B Ag. काव्यं. 2 B. कार्यबन्धं.

यत्र [1]कविरात्मशक्त्या वस्तु शरीरञ्च [2]नायकं चैव ।
औत्पत्तिकं प्रकुरुते [3]प्रकरणमेतद् बुधैर्ज्ञेयम् ॥४८॥
[4]यदनार्षनायकहार्यकाव्यं प्रकरोत्यद्भुतगुणयुक्तम् ।
उत्पन्नबीजवस्तु प्रकरणमिति तदपि विज्ञेयम् ॥४९॥
यन्नाटके मयोक्तं वस्तु शरीरं [5]रसाश्रयोपेतम् ।
तत् प्रकरणेऽपि योज्यं [6]केवलमुत्पाद्यवस्तु स्यात् ॥५०॥
विप्रवणिक्सचिवानां पुरोहितामात्यसार्थवाहानाम् ।
चरितं यदनेकविधं [7]तज्ज्ञेयं प्रकरणं नाम ॥५१॥
नोदात्तनायककृतं न दिव्यचरितं न राजसम्भोगम् ।
बाह्यजनसंप्रयुक्तं [8]विज्ञेयं प्रकरणं तज्ज्ञैः ॥५२॥
दासविटश्रेष्ठियुतं वेशस्त्र्युपचारकारणोपेतम् ।
मन्दकुलस्त्रीचरितं कार्यं काव्यं प्रकरणे तु ॥५३॥
सचिवश्रेष्ठिब्राह्मणपुरोहितामात्यसार्थवाहानाम् ।
गृहवार्ता यत्र भवेन्न तत्र वेश्याङ्गना कार्या ॥५४॥
यदि वेशयुवतियुक्तं न [1]कुलस्त्रीसङ्गमो भवेत्तत्र ।
अथ कुलजनप्रयुक्तं न वेशयुवतिर्भवेत्तत्र ॥५५॥
यदि वा कारणयुक्त्या [2]वेशकुलस्त्रीसङ्गमो[ऽथ]वा स्यात् ।
अविकृतभाषाचारं तत्र तु पाठ्यं प्रयोक्तव्यम् ॥५६॥
प्रकरणनाटकविषये [1]कविभि पञ्चाद्या [2]दशावराश्च ।
[3]अङ्काः कर्तव्याः स्युर्नानारसभावसंयुक्ताः ॥५७॥

48-53 (B.XVIII. 45-50, C. 49-54). 1 C. आत्मशबुद्धया. 2 C नाटकञ्चैव. 3 B प्रकरणमिति तद्. 4 B यदनार्षमथाहार्यं. 5 B. च वृत्तिभेदाश्च. 6 B. सलक्षणं सर्वसन्धिषु तु. 7 B ज्ञेयं तत्. 8 B. तज्ज्ञेयं. 54 56 (B.XVIII. 51-53; C. 55-57). 1 B. कुलस्त्रीसङ्गमोऽपि स्यात्. 2 B. वेशकुलस्त्रीकृतोपचार स्यात्. C. वेशकुलस्त्रीसङ्गमो न स्यात्. 57 (B XVIII. 29, C. 58). 1 B. om. कविभि. 2 B. दशपरा भवन्त्यङ्काः., C. दशपराश्च. 3 B अङ्कान्तरसन्धिषु च प्रवेशकास्तेषु तावन्त.

अङ्कान्तरालविहितः [1]प्रवेशकोऽर्थक्रियां समभिवीक्ष्य ।
[2]सङ्क्षेपार्थं सन्धिष्वर्थानां संविधातव्यः ॥५८॥
** अनयोश्च [1]बन्धयोगादन्यो भेदः प्रयोक्तृभिर्ज्ञेय-[2] ।
** [3]प्रख्यातस्त्वितरो वा नाटकयोगे प्रकरणे च[4] ॥५९॥
** प्रकरणनाटकभेदादुत्पन्नं वस्तु [5]नायको नृपतिः ।
** अन्त पुरसङ्गीतकयानामधिकृत्य कर्तव्या ॥६०॥
** स्त्रीप्राया चतुरङ्का ललिताभिनयात्मिका [1]सुविहितार्थां ।
** [2]बहुनृत्तगीतपाठ्या रतिसम्भोगात्मिका चैव ॥६१॥
** [3]राजोपचारयुक्ता [4]प्रसादनक्रोधसंयुता चापि ।
** [5]नायकदेवीदूतीसपरिजना नाटिका ज्ञेया[6] ॥६२॥

[7]प्रकरणनाटकलक्षणमुक्तं [8]विप्रा मया समासेन ।
वक्ष्याम्यतः परमहं [9]लक्षणयुक्तं समवकारम् ॥६३॥
देवासुरबीजकृत प्रख्यातोदात्तनायकश्चैव ।
त्र्यङ्कस्तथा त्रिकपटस्त्रिविद्रवः स्यात् त्रिशृङ्गारः ॥६४॥
द्वादशनायकबहुलो [1]ह्यष्टादशनाडिकाप्रमाणश्च ।
वक्ष्याम्यस्याङ्कविधिं [2]यावत्यो नाडिका यत्र[3] ॥६५॥

58 (B.XVIII 56, C. 59). 1 C ०क्रियामभिवीक्ष्य. 2 B. सङ्क्षेपात् सन्धीनामर्थानां चैव कर्तव्य. 59-60 (B XVIII. 57-58; C. 60a, 61b, 60b, 61a). 1 C. ०योगादेवो 2 B. कार्यः for ज्ञेय. 3 C. प्रत्याख्यात०. 4 B. वा. 5 B नायकं नृपतिम्. 61-63 (B.XVIII. 59-62; C. 62-65). 1 C. विहितार्था 2 C. प्रनृत्तगीत०. 3 C. रामोपचार० 4 C. प्रसाधन०, B प्रसाधनक्रोधदम्भ०. 5 B. नायक देवीदूति सपरिजना. 6 B.C. add. अन्तर्भावगतयोरपि भावयोरुभयोरपि । अथ दर्शितानि रूपाणि इत्युदितानि तु. 7 C. ०नाटकनाटकलक्षणं. 8 C om. विप्रा. 9 B. लक्षणयुक्त्या. 64-65 (B.XVIII. 63-64; C. 66-67). 1 C. ०नाडिकाप्रमाणश्च 2 C. यत्रान्या. 3 C कार्या

[1]ज्ञेयं तु नाडिकाख्यं मानं कालस्य यन्मुहूर्तार्धम् ।
तन्नाडिकाप्रमाणं यथोक्तमङ्केषु संयोज्यम्[2] ॥६६॥
[1]अङ्कस्तु समवकारे सविद्रवः सकपटः [2]सवीथ्यङ्गः ।
[3]द्वादशनाडिसंयुक्तः प्रथमः कार्यो [4]यथोक्तस्तु ॥६७॥
[1]कार्यस्तथा द्वितीयः समाश्रितो नाडिकाद्वितयम् तु ।
[2]वस्तुप्रमाणविहितो द्विनाडिकः स्यात् तृतीयस्तु ॥६८॥
अङ्कोऽङ्कस्त्वन्यार्थः कर्तव्यः काव्यबन्धमासाद्य ।
अर्थं हि समवकारे [1]ह्यप्रतिसम्बन्धमिच्छन्ति ॥६९॥
युद्धजलसम्भवो वा [1]वाय्वग्निगजेन्द्रसम्भवो वाऽपि ।
नगरोपरोधजो वा विज्ञेयो विद्रवस्त्रिविधः ॥७०॥
यस्तु गतिक्रमविहितो दैववशाद्वा परप्रयुक्तो वा ।
सुखदुःखोत्पत्तिकृतस्त्रिविधः [2]कपटोऽत्र ज्ञेयः ॥७१॥
त्रिविधश्चात्र विधिज्ञैः पृथक् पृथक् कार्ययोगविहितार्थः ।
[3]त्रिविधस्तत्र शृङ्गारो ज्ञेयो धर्मार्थकामकृतः ॥७२॥
[1]यत्र तु धर्मे प्रार्थितमात्महितं भवति [2]साधितं बहुधा ।
[3]प्रतिनियमतपोयुक्तं ज्ञेयोऽसौ धर्मशृङ्गारः ॥७३॥

66 (B XVIII 67 ; C 72a, 68b). 1 B. नाडासंज्ञा ज्ञेया. C reads 66b as अङ्कस्तु समवकारे कालस्यतन्मुहूर्तमिति 2 B C. add या नाडिकेति संज्ञा कालविभागे क्रियाभिसम्पन्ना । कार्या च सा प्रयत्नाद्यथाक्रमेणेत्र शास्त्रोक्ता. 67 (B. XVIII 65, C. o). 1 C. अङ्केस्तु 2 B समाथोक्त 3 B. द्वादशनाडीविहितः. 4 C यथावस्तु 68 (B XVIII. 66, C 71). 1 C. कार्यस्तदा. 2 B वस्तुममाणविहिता 69 (B XVIII 69, C 72 b, 73). 1 B. ह्यप्रतिसम्बन्ध॰. 70-72 (B. XVIII. 70 72 ; C. 74-76) 1 C. वाय्वग्निजलेन्द्रसम्भवो. 2 C. कपटाश्रमा. 3 B. शृङ्गारः कर्तव्या धर्मे चार्थे च काम च. 73 (B XVIII. 73 ; C. 77). 1 C. यत्र तु धर्मे प्रार्थितमात्र हित, B. यस्मिन् धर्मप्रापकमात्महितं. 2 B साधन 3 B. व्रतनियम॰.

अर्थस्येच्छायोगाद् बहुधा चैवार्थतोऽर्थशृङ्गारः ।
स्त्रीसंप्रयोगविषयेष्वयथार्थमपीष्यतेऽभिरतिः ॥७४॥
कन्याविलोभनं वा प्राप्तं स्त्रीपुंसयोस्तु रम्यं वा ।
निभृतं वा सावेगं जानीयात् कामशृङ्गारम् ॥७५॥
[1]उष्णिग्गायत्र्याद्या[द्]-न्यानि बन्धकुटिलानि ।
वृत्तानि समवकारे [2]कविभिस्तानि प्रयोज्यानि ॥७६॥
एवं कार्यस्तज्ज्ञैः सुखदुःखसमाश्रयः समवकारः ।
वक्ष्याम्यत परमहं लक्षणमीहामृगस्यापि ॥७७॥
दिव्यपुरुषाश्रयकृतो दिव्यस्त्रीकारणोपगतयुद्धः ।
सुविहितवस्तुनिबन्धो [1]विप्रत्ययकारकश्चैव ॥७८॥
उद्धतपुरुषप्रायः स्त्रीरोषग्रथितकाव्यबन्धश्च ।
संक्षोभविद्रवकृतः संफेटकृतस्तथा चैव ॥७९॥
स्त्रीभेदनापहरणावमर्दसम्प्राप्तवस्तुशृङ्गारः ।
ईहामृगस्तु कार्यः सुसमाहितकाव्यबन्धश्च ॥८०॥
यद् व्यायोगे कार्यं ये पुरुषा [1]वृत्तयो रसाश्चैव ।
ईहामृगेऽपि ते स्युः [2]केवलममरस्त्रियो ह्यस्मिन् ॥८१॥
यत्र तु वधेप्सितानां [3]वधोऽप्युदग्रो भवेत्तु पुरुषाणाम् ।
किञ्चिद् व्याजं कृत्वा तेषां युद्धं शमयितव्यम् । ८२॥
ईहामृगस्य लक्षणमिदमित्युक्तं मया समासेन ।
डिमलक्षणं च भूयो लक्षणयुक्त्या प्रवक्ष्यामि ॥८३॥
प्रख्यातवस्तुविषयः प्रख्यातोदात्तनायकोपेतः ।
षड्रसलक्षणयुक्तश्चतुरङ्को वै डिम कार्यः ॥८४॥

74-76 (B XVIII. 74-76 ; C 78-80). 1 B. उष्णिग्गायत्र्याद्यान्यन्यानि, C. उष्णिग्गायत्री वा यानि तथान्यानि. 2 C. कविभिर्नैव, Ckh कविभिः सम्यक्. 77-79 (B.XVIII. 77-79 ; C. 81-83). 1 C. विप्रालय०. 80-84 (B. XVIII 80-84 ; C. 84a. 85a 88). 1 C. ये रसाश्च निर्दिष्टा.. 2 B. अमरस्त्रिया योग. 3 C. वधोऽप्युदग्रयो, B वधोऽद्युदग्रो.

शृङ्गारहास्यवर्जः [1]शेषैरन्यैः रसैः समायुक्तः ।
दीप्तरसकाव्ययोनिर्नानाभावान्वितश्चैव[2] ॥८५॥
निर्घातचन्द्रसूर्योपरागसोल्कावपातसंयुक्तः ।
[3]युद्धनियुद्धप्रहरणसंफेटकृतश्च कर्तव्यः ॥८६॥
मायेन्द्रजालबहुलो [1]बहुपुरुषोत्थानभेदसंयुक्तः ।
[2]देवासुरराक्षसभूतयक्षनागाश्च पुरुषाः स्युः ॥८७॥
षोडशनायकबहुलः सात्त्वत्यारभटिवृत्तिसंयुक्तः[3] ।
कार्यो डिमः [4]प्रयत्नात्तज्ज्ञैर्नानाश्रयविशेषैः[5] ॥८८॥
डिमलक्षणमित्युक्तं मया समासेन लक्षणानुगतम् ।
व्यायोगस्य तु लक्षणमतः परं संप्रवक्ष्यामि ॥८९॥
व्यायोगस्तु विधिज्ञैः कर्तव्यः [6]ख्यातनायकशरीरः ।
अल्पस्त्रीजनयुक्तस्त्वेकाहकृतस्तथा चैव ॥९०॥
बहवस्तत्र च पुरुषा [1]व्यायच्छन्ते यथा समवकारे ।
न च [2]तत्प्रमाणयुक्तः तदेकाङ्कः [3]संविधातव्यः ॥९१॥
न च दिव्यनायककृतः कार्यो राजर्षिनायकनिबद्धः ।
युद्धनियुद्धाधर्षणसङ्घर्षश्चापि[4] कर्तव्यः ॥९२॥
एवंविधस्तु कार्यो व्यायोगो दीप्तकाव्यरसयोनिः ।
वक्ष्याम्यतः परमहं लक्षणमुत्सृष्टिकाङ्कस्य ॥९३॥
प्रख्यातवस्तुविषयस्त्वप्रख्यातः कदाचिदेव स्यात् ।
दिव्यपुरुषैर्वियुक्तः शेषैरन्यैर्भवेत्पुम्भिः ॥९४॥

85-86 (B XVIII. 85-86 ; C. 89-90). 1 C. शेषैरन्यैः समायुक्तः. B शेषैः सर्वैः रसैः. 2 B. ॰नानाभावोपसम्पन्नः. 3 B. ॰नियुद्धाधर्षण॰. 87-90 (B. XVIII. 87-90 ; 91-94). 1 B. बहुपुस्तोत्थान॰. 2 B. देवभुजगेन्द्रराक्षसयक्षपिशाचावकीर्णश्च. 3 B. ॰वृत्तिसम्पन्नः. 4 B. om. तज्ज्ञैः. 5 C ॰विशेषेण, B ॰श्रयभावसम्पन्नः. 6 B. प्रख्यात. 91-93 (B.XVIII. 91-94 ; C. 95-98) 1 B. C. कविभिः कार्यः. 2 C. तत्प्रमाणस्तु. 3 B. एवायम्. 4 B. ॰संघर्षकृतश्च.

करुणरसप्रायकृतो निवृत्तयुद्धोद्धतप्रहारश्च ।
स्त्रीपरिदेवनबहुलो निर्वेदिभाषितश्चैव ॥९५॥
नानाव्याकुलचेष्टः सात्त्वत्यारभटिकैशिकीहीन ।
[1]कर्तव्योऽभ्युदयान्तस्तज्ज्ञैरुत्सृष्टिकाङ्कस्तु ॥९६॥
यद् दिव्यनायककृतं काव्यं सङ्ग्रामबन्धवधयुक्तम् ।
तद्भारते तु वर्षे कर्तव्यं काव्यबन्धेषु ॥९७॥
[1]कस्माद् भारतमिष्टं वर्षेष्वन्येषु [2]देवविहितेषु ।
हृद्या सर्वा भूमि शुभगन्धा काञ्चनी यस्मात् ॥९८॥
उपवनगमनक्रीडाविहाररनारीरतिप्रमोदाः स्युः ।
तेषु हि वर्षेषु सदा न भवति दुःखं न वा [3]शोकः ॥९९॥
ये [4]तेषामधिवासाः पुराणवादे च पर्वता [5]गदिता ।
सम्भोगस्तेषु भवेत् कर्मारम्भो भवेदस्मिन् ॥१००॥
अङ्कस्य लक्षणगतं व्याख्यातं [1]शेषमात्मगतम् ।
प्रहसनमतःपरमहं सल्लक्षणं संप्रवक्ष्यामि ॥१०१॥
प्रहसनमपि विज्ञेय द्विविधं शुद्धं तथैव सङ्कीर्णम् ।
[1]तस्य व्याख्यास्येऽहं पृथक् पृथक लक्षणविशेषान् ॥१०२॥
[1]भगवत्तापसभिक्षुश्रोत्रियविप्रातिहासससंयुक्तम् ।
[2]नीचजनसंप्रयुक्तं परिहासाभाषणप्रायम् ॥१०३॥
अविकृतभाषाचारं [3]विशेषहासोपहासरचितपदम् ।
नियतगतिवस्तुविषयं शुद्धं ज्ञेयं प्रहसनं तु ॥१०४॥

95-96 (B XVIII 95-96, C. 99-100). 1 B. कार्य. काव्यविधिज्ञैः सततं तत्. 97-100 (B.XVIII. 97-100; C. 101-104). 1 C तस्मात्. 2 C. नित्यकालं हि. 3 C. शोकम्. 4 C. तेषामपि. 5 B. प्रोक्ताः. 101 (B. XVIII 101b-102a, C 105). 1 B. अशेषयोगमात्मगतम्. 102 (B.XVIII. 101a, 102b; C. 106). 1 B. वक्ष्यामि तयोर्युक्त्या. 103-104 (B.XVIII. 103-104; C. 107-108). 1 B. ०तापसविप्रैरन्यैरपि हास्यवादसंबद्धम्. 2 B. कापुरुषसंप्रयुक्तं. 3 B. विशेषभावोपनचरितपदम्

वेश्याचेटनपुंसकधूर्तविटा[1] बन्धकी च यत्र स्युः ।
अनिभृतवेषपरिच्छदचेष्टाकरणात्तु[2] सङ्कीर्णम् ॥१०५॥
लोकोपचारयुक्ता या वार्ता यश्च दम्भसंयोगः ।
तत्प्रहसने प्रयोज्यं धूर्तविटविवादसम्पन्नः ॥१०६॥
[1]वीथ्यङ्गैः संयुक्तं कर्तव्यं प्रहसनं यथायोगम् ।
भाणस्यापि हि लक्षणमतःपरं संप्रवक्ष्यामि ॥१०७॥
आत्मानुभूतशंसी परसंश्रितवर्णनाविशेषस्तु[2] ।
[3]द्विविधाश्रयो हि भाणो विज्ञेयस्त्वेकहार्यश्च ॥१०८॥
परवचनमात्मसंस्थं [4]परवचनैरुत्तरोत्तरैर्ग्रथिवाक्यम्[5] ।
आकाशपुरुषकथितैरङ्गविकारैरभिनयेत्तत्[6] ॥१०९॥
धूर्तविटसंप्रयोज्यो नानावस्थान्तरात्मकश्चैव ।
एकाङ्को बहुचेष्टः सततं कार्यो बुधैर्भाणः ॥११०॥
भाणस्यापि हि निखिलं लक्षणमुक्तं तथागमानुगतम् ।
वीथ्याः सम्प्रति निखिलं कथयामि यथाक्रमं विप्राः[1] ॥१११॥
वीथी स्यादेकाङ्का द्विपात्रहार्या तथैकहार्या वा ।
अधमोत्तममध्याभिर्युक्ता स्यात् प्रकृतिभिस्तिसृभिः ॥११२॥
सर्वरसलक्षणाढ्या युक्ता ह्यङ्गैस्त्रयोदशभिः ।
अङ्गानां वक्ष्येऽहं लक्षणमखिलं यथादेशम्[2] ॥११३॥

105-106 (B.XVIII. 105-106; C. 109-110). 1 B. विटधूर्ता. 2 B. ॰चेष्टितकरणैस्तु. 107-109 (B.XVIII. 107-109; C. 110-113). 1 C. उद्घात्यकादिभिरिदं वीथ्यङ्गैः मिश्रितं भवेन्मिश्रिम्. 2 C. विशेषस्तु. 3 B. C. विविधाश्रयो, we with Bch. 4 B. प्रतिवचन॰. 5 B.C. ॰ग्रथितैः, we with Bbh. 4 B. अभिनयेच्चैव. 110-111 (B.XVIII. 110-111; C. 114-115). 1 B. reads here 113a. 112 (B. XVIII. 112b-112a; C. 116a, 117a). 113 (B.XVIII. 113a; C. 116b, 117b). 1 See above note 1 on 111. 2 B. om. 113b.

उद्घात्यकावलगिते त्ववस्पन्दितमेव च[1] ।
असत्प्रलापश्च तथा प्रपञ्चो नालिकापि च ॥११४॥
वाक्केल्यधिबलं चैव छलं व्याहार एव च ।
मृदवं त्रिगतं चैव ज्ञेयं गण्डमथापि वा ॥११५॥
त्रयोदश सदाङ्गानि वीथ्यामेतानि योजयेत् ।
लक्षणं पुनरेतेषां प्रवक्ष्याम्यनुपूर्वशः ॥११६॥
पदानि त्वगतार्थानि यैर्नराः[1] पुनरादरात् ।
योजयन्ति पदैरन्यैस्तदुद्घात्यकमुच्यते ॥११७॥
यत्रान्यस्मिन् समावेश्य कार्यमन्यत्प्रसाध्यते[2] ।
तच्चावलगितं नाम विज्ञेयं नाट्ययोक्तृभिः ॥११८॥
[1]आक्षिप्य कञ्चिदर्थन्तु शुभाशुभसमुत्थितम् ।
[2]यत्सृजेद् बुद्धिवैशद्यात् तदवस्पन्दितं भवेत् ॥११९॥
असम्बद्धन्तु यद्वाक्यम् असम्बद्धमथोत्तरम्[3] ।
असत्प्रलापितञ्चैव वीथ्यां सम्यक् प्रयोजयेत् ॥१२०॥
मूर्खजनसन्निकर्षे [1]विद्वान्यत्र प्रभाषते सम्यक् ।
[2]वचनञ्च गृह्यतेऽस्य स ज्ञेयोऽसत्प्रलापस्तु ॥१२१॥

114-116 (B.XVIII 113b-115a; C 118-120). 1 B. reads all as उद्घात्यकावलगितावस्पन्दितनाल्यसत्प्रलापम् । वाक्केल्यथ प्रपञ्चो मृदवाधिबले छलं त्रिगतम् । व्याहारो गण्डश्च त्रयोदशाङ्गान्युदाहृतान्यस्या. । अथ वीथी संप्रोक्तां लक्षणमेषा प्रवक्ष्यामि. 117-118 (B.XVIII. 115b-117a; C. 121-122). 1 B. ये नराः. 2 B. प्रसाध्यते. 119-120 (B. XVIII. 117b-118a; C. 123-124). 1 B. आक्षिप्तेऽर्थे तु कस्मिंश्चिच्छुभाशुभसमुत्थिते. 2 B. कौशल्यादुच्यते-ऽन्योऽर्थस्तदवस्पन्दितं भवेत्. 3 B. om. this couplet; but Bd. has it. 121 (B XVIII. 119; C. 125). 1 C. विद्वानन्यत्र भाषते, B. हितमपि यत्र प्रभाषते सम्यक् 2 B न च गृह्यतेऽस्य वचनं विज्ञेयोऽसत्प्रलापोऽसौ.

यदसद्भूतं वचनं संस्तवयुक्तं द्वयोः [1]परस्परत ।
एकस्य चार्थहेतोः स हास्यजनन [2]प्रपञ्चस्तु ॥१२२॥
हास्येनावगतार्था प्रहेलिका नालिकेति विज्ञेया ।
एकद्विप्रतिवचनात् [1]वाक्केलिका नाम तामाह ॥१२३॥
[1]परवचनमात्मसंस्थं चोत्तरोत्तरसमुद्भवं द्वयोर्यत्र ।
[2]अन्योन्यार्थविशेषणमधिबलमिति तद् बुधैर्ज्ञेयम् ॥१२४॥
[1]यत्रादौ प्रतिवचनैर्विलोभयित्वा परं पराकारैः ।
[2]तैरेवार्थविहीनैर्विपरीतस्याच्छलं नाम ॥१२५॥
प्रत्यक्षं नायकस्यैव यद्वै दृष्टवदुच्यते[1] ।
अशङ्कितं तथायोगाद् व्याहारः सोऽभिधीयते ॥१२६॥
यत्कारणाद् गुणानां दोषीकरणं भवेद्विवादकृतम् ।
दोषगुणीकरणं वा तन्मृदवं नाम विज्ञेयम् ॥१२७॥
[1]यद्युदात्तवचनमिह च त्रिधा विभक्तं भवेत्प्रयोगेषु ।
[2]हास्यरससंप्रयुक्तं तत् त्रिगतं नाम विज्ञेयम् ॥१२८॥
संरम्भसंभ्रमकृतं [1]यन्धविवादं तथापवादकृतम् ।
बहुवचनाक्षेपकृतं गण्डमिति वदन्ति तत्त्वज्ञाः[2] ॥१२९॥

122 (B. XVIII. 120b-121a ; C. 126) 1 B. परस्परं यत्तु. 2 B. प्रपञ्चः स्यात्. 123 (B XVIII. 118b, 120a ; C. 127). 1 B वाक्केली स्यात् प्रयोगेऽस्मिन्. 124 (B XVIII. 122b-123a ; C. 128) 1 B. परवचनमात्मनश्चोत्तरोत्तरसमुद्भवं द्वयोर्यत्तु, C. ०समुद्भवो द्वयोयत्र 2 B. अन्योन्यार्थविशेषकमधिबलं 125 (B.XVIII. 123b , C. 129) 1 B. om. this hem. 2 B. अन्यार्थमित्र वाक्यं छद्मभिसन्धानहासरोषकरम्. 126 (B.XVIII. 125a ; C. 130 ). 1 B. only प्रत्यक्षवृत्तिरुक्तो व्याहारो हास्यलेशार्थः. 127 (B.XVIII. 121b-122a ; C. 131). 128 (B XVIII. 124 : C. 132 . 1 B श्रुतिसारूप्यादस्मिन् बहवोऽर्था युक्तिभिर्नियुज्यते. 2 B. यद्धास्यमहास्यं वा. 129 (B.XVIII. 125b-126a ; C. 133). 1 B. विवादयुक्तं. 2 B. closes this chapter with इति दशरूपविधानं सर्वं प्रोक्तं मया हि लक्षणतः etc.

एतान्यङ्गानि तत्र स्युः स्पष्टार्थानि त्रयोदश ।
तथागमसमुद्दिष्टैर्युक्तप्रकृतिभिस्तथा ॥१३०॥
रसैर्भावैश्च निखिलैर्युक्ता वीथी प्रकीर्तिता ।
एकहार्या द्विहार्या वा कर्तव्या कविभिः सदा ॥१३१॥
अन्यानि च लास्यविधावङ्गानि तु [1]नाटके प्रयुक्तानि ।
अस्माद्विनिःसृतानि तु भाण इवैकप्रयोज्यानि ॥१३२॥
भाणाकृतिवल्लास्यं विज्ञेयं त्वेकपात्रहार्यं च ।
प्रकरणवदूह्यकार्यसंस्तवयुक्तं [2]विविधभावं ज्ञेयम् ॥१३३॥
गेयपदं [1]स्थितपाठ्यमासीनं [2]पुष्पगण्डिका ।
[3]प्रच्छेदकं त्रिमूढं च सैन्धवाख्यं द्विमूढकम् ॥१३४॥
उत्तमोत्तमकं चैव [4]विचित्रपदमेव च ।
उक्तप्रत्युक्तं भावं च लास्याङ्गानि विदुर्बुधाः ॥१३५॥
[1]आसने चोपविष्टायां तन्त्रीभाण्डोपबृंहितम् ।
गायनैर्गीयते शुष्कं तद् गेयपदमुच्यते ॥१३६॥
या नृत्यत्यासीना[1] नारी गेयं प्रियगुणान्वितम् ।
साङ्गोपाङ्गविधानेन तद्गेयपदमुच्यते ॥१३७॥
प्राकृतं या नियुक्ता तु [1]पठेदासनसंस्थिता ।
मदनानलतप्ताङ्गी [2]स्थितपाठ्यं तदुच्यते[3] ॥१३८॥

130-131 (C. 134-135). 132 133 (C. 136-137; B.XIX. 117-118). 1 B. नाटकोपयोगीनि 2 C. विविधमवं. 134-135 (C. 138-139; B. XIX 119-120). 1 C स्थिति॰ 2 C. पुष्पगन्धिका. 3 B. प्रच्छेदकं. 4 B. चैवमुक्तप्रयुक्तमेव च । लास्ये दशविधं ह्येतदङ्गनिर्देशलक्षणम् 136 (C. 140; B. XIX. 121). 1 B. आसनेषूपविष्टैर्यत्. C. आसने चोपविष्टायां. 137 (C. 141; B XIX. 122). 1 B.C. नृत्यत्यासना. 138 (C. 142; B XIX. 123). 1 B. पठेदासनस्थं. 2 C. स्थितिपाठ्यं. 3 B. adds a couplet

आसीनमास्यते यत्र [1]चिन्ताशोकसमन्वितम्
[2]अप्रसाधितगात्रं च [3]जिह्मदृष्टिनिरीक्षितम्[4] ॥१३९॥
यत्र स्त्री नरवेषेण ललितं संस्कृतं पठेत् ।
सखीनां तु विनोदाय सा ज्ञेया [1]पुष्पगण्डिका[2] ॥१४०॥
प्रच्छेदकः स विज्ञेयो यत्र चन्द्रातपाहताः ।
स्त्रियः प्रियेषु सज्जन्ते ह्यपि विप्रियकारिषु ॥१४१॥
[1]अनिष्ठुरश्लक्ष्णपदं समवृत्तैरलङ्कृतम् ।
नाट्यं पुरुषभावाढ्यं त्रिमूढकमुदाहृतम् ॥१४२॥
पात्रं विस्मृतसङ्केतं सुव्यक्तकरणान्वितम् ।
प्राकृतैर्वचनैर्युक्तं विदुः सैन्धवकं बुधाः ॥१४३॥
[1]शुभार्थगीताभिनयं चतुरस्रपदक्रमम् ।
[2]स्पष्टभावरसोपेतं [3]व्याजचेष्टं द्विमूढकम् ॥१४४॥
उत्तमोत्तमकं विद्यादनेकरससंश्रयम् ।
[1]विचित्रैः श्लोकबन्धैश्च हेलाभावविभूषितम् ॥१४५॥
यदि [1]प्रतिकृतिं दृष्ट्वा विनोदयति मानसम् ।
[2]मदनानलतप्तं तु विच्छिन्नपदमुच्यते ॥१४६॥
कोपप्रसादजनितं साधिक्षेपपदाश्रयम् ।
उक्तप्रत्युक्तमेव स्याच्चित्रगीतार्थयोजितम् ॥१४७॥

139 (C. 143 ; B.XIX. 125) 1 B.सर्वातोद्यविवर्जितम् 2 B.C. अप्रमारित०. 3 B. चिन्ताशोकसमन्वितम्. 4 B. adds a couplet. 140 (C. 144 ; B XIX. 127) 1 C. पुष्पगन्धिका. 2 B. adds another def. 141 (C. 145 ; B.XIX. 129) 142 (C. 146 ; B XIX 130) 1 B. अनिष्ठुरश्लक्ष्ण 143 (C. 147 ; B. XIX. 131) 144 (C. 148 ; B.XIX. 133) 1 B. मुखप्रतिमुखोपेतं. 2 B. श्लिष्ट०. 3 B. वैचित्र्यार्थं द्विमूढके. 145 (C. 149 ; B. XIX 134). 1 B. विचित्रैः. 146 (C. 150 ; B. XIX. 136). 1 B. प्रियाकृतिं. 2 B. ०तप्ताङ्गी. 147 (C. 151 ; B.XIX 135). 1 C. किन्तु गीतार्थयोजितम्.

दृष्ट्वा स्वप्ने प्रियं यत्र मदनानलतापिता ।
करोति विविधान् भावान् तद्वै 'भावितमुच्यते' ॥१४८॥
एतद्वै 'लास्यविधौ लक्षणमुक्तं मया तु विस्तरतः ।
तदिहैव तु यन्नोक्तं प्रसङ्गविनिवृत्तिहेतोस्तु' ॥१४९॥
'इति दशरूपविधानं सर्वं प्रोक्तं मयाऽहि लक्षणतः ।
अतःपरं प्रवक्ष्यामि वृत्तीनामिह्लक्षणम्' ॥१५०॥

इति भारतीये नाट्यशास्त्रे दशरूपविधानं नाम
विंशोऽध्यायः ।

148 (C. 152 ; B XIX. 137) 1 B भावितम्. 149 (C. 153, B.XIX. 138). 1 B. एतेषा. 2 B. adds here XIX. 139-153 which are repetitions. See below XXI. 11 4-127. 150 (C. 154 ; B.XIX. 154). 1 C इतिवृत्तं समन्यक्तं मया प्रोक्तं द्विजोत्तमाः.

# एकविंशोऽध्यायः

इतिवृत्तं तु [1]काव्यस्य शरीरं परिकीर्तितम् ।
पञ्चभिः सन्धिभिस्तस्य [2]विभागः संप्रकल्पितः ॥१॥
इतिवृत्तं द्विधा चैव बुधस्तु [3]परिकल्पयेत् ।
आधिकारिकमेकं तु प्रासङ्गिकमथापरम् ॥२॥
यत्कार्यं [4]हि फलप्राप्त्याः सामर्थ्यात्परिकल्प्यते ।
तदाधिकारिकं ज्ञेयमन्यत् प्रासङ्गिकं विदुः ॥३॥
कवेः प्रयत्नान्नेतॄणां युक्तानां विध्युपाश्रयात् ।
कल्प्यते [5]यत्फलप्राप्तिः [6]समुत्कर्षात् फलस्य तु ॥४॥
कारणात् फलयोगस्य वृत्तं स्यादाधिकारिकम् ।
[7]परोपकरणार्थं तु कीर्त्यते ह्यानुषङ्गिकम् ॥५॥
संसाध्ये फलयोगे तु व्यापारः [9]साधकस्य यः ।
तस्यानुपूर्व्या [10]विज्ञेयाः पञ्चावस्थाः प्रयोक्तृभिः ॥६॥
* [11]नाट्यप्रकरणमया अवस्थास्ता मता इह ।
* धर्मकामार्थसम्बन्धः फलयोगस्तु कथ्यते ॥७॥
प्रारम्भश्च प्रयत्नश्च तथा प्राप्तेश्च सम्भवः ।
नियता च फलप्राप्तिः फलयोगश्च पञ्चमः ॥८॥
औत्सुक्यमात्रबन्धस्तु यद्बीजस्य निबध्यते ।
महतः फलयोगस्य स खल्वारम्भ इष्यते ॥९॥

1-9 (C. 1-9; B.XIX. 1-3,5,4,7-9). 1 B. नाट्यस्य. 2 C. विभागाः परिकीर्तिताः. 3 C परिवर्जयेत्. 4 C. तु. 5 B. हि. 6 B.C. समुत्कर्षात्, we with Bc. 7 C. तु. 8 B. तस्योपकरणार्थं. 9 B. reads this before 4, and BC add after this लौकिकसुखदुःखाख्या यथावस्थारसोद्भवा । दशधा मन्मथावस्था व्यवस्था त्रिविधा मता. 10 C. ०ज्ञेया. 11 Bcddh have this, not B.

अपश्यतः फलप्राप्तिं व्यापारो यः फलं प्रति ।
[1]परं चौत्सुक्यगमनं स प्रयत्नः प्रकीर्तितः ॥१०॥
ईषत्प्राप्तिश्च या काचिद् [2]अर्थस्य परिकल्पते ।
भावमात्रेण [3]स ज्ञेयो विधिज्ञैः प्राप्तिसम्भवः ॥११॥
नियतां च फलप्राप्तिं यत्र भावेन पश्यति ।
नियतां तां फलप्राप्तिं [4]सगुणां परिचक्षते ॥१२॥
अभिप्रेतं समग्रं च प्रतिरूपं क्रियाफलम् ।
[5]यद् दृश्यते निवृत्ते तु फलयोगः स उच्यते ॥१३॥
सर्वस्यैव हि कार्यस्य प्रारब्धस्य फलार्थिभिः ।
[6]यथानुक्रमशो ह्येताः पञ्चावस्था भवन्ति हि ॥१४॥
आसां स्वभावभिन्नानां परस्परसमागमात् ।
विन्यासः फलभावेन [7]फलाय परिकल्प्यते ॥१५॥
इतिवृत्तं [8]यथाख्यात पुरस्तादाधिकारिकम् ।
तदारम्भादि कर्तव्यं [9]फलान्तं च यथा भवेत् ॥१६॥
[10]पूर्णसंधि च [11]तत्कार्यं हीनसन्ध्यपि वा पुनः ।
नियमात्पूर्णसन्धिः स्याद्धीनसन्धिस्तु कारणात् ॥१७॥
एकलोपे चतुर्थस्य द्विलोपे त्रिचतुर्थयोः ।
द्वितीयत्रिचतुर्थानां त्रिलोपे लोप इष्यते ॥१८॥
प्रासङ्गिके परार्थत्वान्न ह्येष नियमो भवेत् ।
यद्वृत्तं [12]तु भवेत्तत्र संयोज्यमविरोधतः ॥१९॥

10-19 (C. 10-20 ; B XIX, 10-19). 1 B.C. परं. 2 B. फलस्य. 3 B. तं प्राहुर्विधिज्ञाः प्राप्तिसम्भवम्. 4 C. सगुणस्तु विनिर्दिशेत्. 5 B. इतिवृत्ते भवेद्यस्मिन् फलयोगः प्रकीर्तितः. 6 B. एतास्त्वनुक्रमेणैव. 7 B फलहेतुः प्रकीर्तितः. 8 B. समाख्यातं. 9 C. फलान्ति. 10 B. पूर्णसन्धि च कर्तव्यं. 11 C यन् कार्यं Bc. तत् कार्यं. 12 B सम्भवेत्तत्र तद्योज्य०.

इतिवृत्ते यदावस्थाः पञ्चारम्भादिकाः स्मृताः ।
[1]अर्थप्रकृतयश्चासां पञ्च बीजादिका अपि ॥२०॥
[2]बीजं विन्दुः पताका च प्रकरी कार्यमेव च ।
अर्थप्रकृतयः पञ्च ज्ञात्वा योज्या यथाविधि ॥२१॥
अल्पमात्रं समुत्सृष्टं बहुधा यत्प्रसर्पति ।
फलावसानं यच्चैव बीजं तदभिधीयते ॥२२॥
प्रयोजनानां विच्छेदे यदविच्छेदकारणम् ।
यावत्समाप्तिर्बन्धस्य स विन्दुरिति संज्ञितः ॥२३॥
यद्वृत्तं हि परार्थं स्यात् प्रधानस्योपकारकम् ।
प्रधानवच्च कल्प्येत सा पताकेति कीर्तिता ॥२४॥
फलं संकल्प्यते सद्भिः परार्थं यस्य केवलम् ।
अनुबन्धेन हीनस्य प्रकरीं तां विनिर्दिशेत् ॥२५॥
यदाधिकारिकं वस्तु सम्यक् प्राज्ञैः प्रयुज्यते ।
तदर्थो यः समारम्भस्तत्कार्यं समुदाहृतम् ॥२६॥
एतेषां यस्य येनार्थो यतश्च गुण इष्यते ।
प्रधानं तत्प्रकर्तव्यं गुणभूतान्यतः परम् ॥२७॥
एकोऽनेकोऽपि वा सन्धिः पताकायां च यो भवेत् ।
प्रधानार्थानुयायित्वादनुबन्धः[3] स कीर्त्यते ॥२८॥
आगर्भादाविमर्शाद्वा पताका विनिवर्तते ।
[4]कस्मायस्मात्तु बन्धोऽस्याः परार्थायोपकल्प्यते ॥२९॥
यत्रार्थे चिन्त्यमानेऽपि तल्लिङ्गार्थः प्रयुज्यते ।
आगन्तुकेन भावेन पताकास्थानकं तु तत् ॥३०॥
सहसैवार्थसम्पत्तिर्गुणवत्युपचारतः ।
पताकास्थानकमिदं प्रथमं परिकीर्त्यते ॥३१॥

20-31 (C. 21-32; B. XIX. 20-31). 1 B ०प्रकृतयः पञ्च तथा. 2 C. बीजविन्दु-पताकाश्च. 3 B. अनुसन्धिः. 4 C. तस्मात्.

[1]वचः सातिशयश्लिष्टं काव्यबन्धसमाश्रयम् ।
पताकास्थानकमिदं द्वितीयं परिकीर्तितम् ॥३२॥
अर्थोपक्षेपणं [2]यत्तु लीनं सविनयं भवेत् ।
श्लिष्टप्रत्युत्तरोपेतं तृतीयमिदमिष्यते ॥३३॥
द्व्यर्थो वचनविन्यासः सुश्लिष्टः काव्ययोजितः ।
[3]उपन्याससंयुतश्च तच्चतुर्थमुदाहृतम्[4] ॥३४॥
चतुष्पताकापरमं नाटके [5]काव्यमिष्यते ।
पञ्चभिः सन्धिभिर्युक्तं [6]तां च वक्ष्याम्यतः परम् ॥३५॥
मुखं प्रतिमुखं गर्भो विमर्शश्च तथैव हि ।
तथा निर्वहणं चैव सन्धयो नाटके स्मृताः ॥३६॥
* पञ्चभिः सन्धिभिर्युक्तं प्रधानमनुकीर्त्यते ।
* शेषाः प्रधानसन्धीनामनुग्राह्यास्तु सन्धयः[7] ॥३७॥
यत्र बीजसमुत्पत्तिर्नानार्थरससम्भवा ।
काव्ये शरीरानुगतं तन्मुखं परिकीर्तितम् ॥३८॥
बीजस्योद्घाटनं यत्तु[8] दृष्टनष्टमिव क्वचित् ।
[9]मुखे न्यस्तस्य सर्वत्र तद्वै प्रतिमुखं भवेत् ॥३९॥
उद्भेदस्तस्य बीजस्य प्राप्तिरप्राप्तिरेव वा ।
पुनश्चान्वेषणं यत्र स गर्भ इति संज्ञितः ॥४०॥
गर्भनिर्भिन्नबीजार्थो विलोभनकृतोऽपि वा ।
[10]क्रोधव्यसनजो वापि विमर्शः स इति स्मृतः ॥४१॥

32-41 (C. 32-42; B.XIX. 32-42). 1 C. वचसाऽतिशय°. 2 B. यत्र. 3 C. उपन्यासैः संयुतश्च. B. उपन्याससुयुक्तश्च. 4 B. adds यत्र सातिशयं वाक्यमर्थोपक्षेपणं भवेत् । श्लिष्टं दृष्टमन्ते च पताकार्थं तु तद्भवेत्. 5 B. कार्यं. 6 BC. तश्च 7 B. °मनुग्राह्यनुसन्धयः. 8 B. यत्र 9 B. मुखन्यस्तस्य. 10 C. किंचिदाश्लेषसंयुक्तो.

[1]समानयनमर्थानां मुखाद्यानां सबीजिनाम् ।
[2]फलोपसङ्गतानाञ्च ज्ञेयं निर्वहणं तु तत् ॥४२॥
एते हि सन्धयो ज्ञेया नाटकस्य प्रयोक्तृभिः ।
तथा प्रकरणस्यापि शेषाणां च निबोधत ॥४३॥
[3]व्यायोगेहामृगौ चापि त्रिसन्धी परिकीर्तितौ ।
न तयोरवमर्शस्तु कर्तव्यः कविभिः सदा ॥४४॥
[4]डिमः समवकारश्च चतुःसन्धी प्रकीर्तितौ ।
गर्भावमर्शौ न स्यातां [5]न च वृत्तिस्तु कैशिकी ॥४५॥
द्विसन्धि तु प्रहसनं वीथ्यङ्को भाण एव च ।
मुखनिर्वहणे [6]स्यातां तेषां वृत्तिश्च भारती[7] ॥४६॥
एवं च सन्धयः कार्या दशरूपे प्रयोक्तृभिः ।
पुनः सन्ध्यन्तरं तेषामङ्गकल्पं निबोधत[8] ॥४७॥
साम भेदः प्रदानं च दण्डश्च वध एव च
प्रत्युत्पन्नमतित्वं च गोत्रस्खलितमेव च ॥४८॥
साहसं च भयश्चैव ह्रीर्माया क्रोध एव च ।
ओजः संवरणं भ्रान्तिस्तथा हेत्ववधारणम् ॥४९॥
दूतो लेखा तथा स्वप्नश्चित्रं मद इति द्विजाः ।
सन्ध्यन्तराणि सन्धीनां विशेषस्त्वेकविंशतिः ॥५०॥
सन्धीनां यानि वृत्तानि प्रदेशेष्वनुपूर्वशः ।
स्वसम्पद्गुणयुक्तानि तान्यङ्गान्युपधारयेत् ॥५१॥
इष्टस्यार्थस्य [9]वचनं वृत्तान्तस्यानुपक्षयः ।
रागप्राप्तिः प्रयोगस्य गुह्यानां चैव गूहनम् ॥५२॥

---

42-52 (C. 43-53, B.XIX 43-51). 1 C. समानय समार्थाना मुख्यार्थाना. 2 B. नानाभावोत्तराणां यद्भवेत्. 3 B. reads this (44a) as 45a and *vice versa*. 4 *Ibid.* 5 B. तयोर्वृत्तिश्च कैशिकी. 6 B. तत्र कर्तव्ये कविभिः सदा. 7 B. adds here a couplet, *on Vṛtti*. 8 B. om. 47-50. 9 B.C. रचना, we with Bd.

आश्चर्यवदभिख्यातं प्रकाश्यानां प्रकाशनम् ।
अङ्गानां षड्विधं ह्येतदुक्तं शास्त्रे प्रयोजनम् ॥५३॥
अङ्गहीनो नरो [1]यद्वद्युद्धारम्भेऽक्षमो भवेत् ।
अङ्गहीनं तथा काव्यं न प्रयोगक्षमो भवेत् ॥५४॥
[2]काव्यं यदपि हीनार्थं सम्यगङ्गैः समन्वितम् ।
[3]दीप्तत्वात्तु प्रयोगस्य शोभामेति न संशयः ॥५५॥
[4]उदात्तमपि यत्काव्यं स्यादङ्गैः परिवर्जितम् ।
हीनत्वात्तु प्रयोगस्य न सतां रञ्जयेन्मनः ॥५६॥
[5]तस्मात्सन्धिप्रयोगेषु [6]यथादेशं यथारसम् ।
कविनाऽङ्गानि कार्याणि सम्यक्तानि निबोधत ॥५७॥
उपक्षेपः परिकरः परिन्यासो विलोभनम् ।
युक्तिः प्राप्तिः समाधानं विधानं परिभावना ॥५८॥
उद्भेदः करणं भेदो एतान्यङ्गानि वै मुखे ।
तथा प्रतिमुखे चैव शृणुताङ्गान्यतः परम् ॥५९॥
विलासः परिसर्पश्च विधूतं तापनं तथा ।
नर्म नर्मद्युतिश्चैव तथा [7]प्रगमनं पुनः ॥६०॥
निरोधश्चैव विज्ञेयः पर्युपासनमेव च ।
वज्रं पुष्पमुपन्यासो वर्णसंहार एव च ॥६१॥
एतानि वै प्रतिमुखे गर्भेऽङ्गानि निबोधत ।
अभूताहरणं मार्गो रूपोदाहरणे क्रमः ॥६२॥
सङ्ग्रहश्चानुमानं च प्रार्थनाक्षिप्तमेव च ।
तोटकाधिबले चैव [8]चोद्वेगो विद्रवस्तथा ॥६३॥

53-63 (C. 54-64 ; B.XIX. 52-62). 1 B. यद्वन्नैवारम्भोद्यतो. 2 B. has 55 after 56. 3 C. दीप्ताङ्गत्वात्. 4 See 3 above. 5 B. ॰सन्धिप्रदेशेषु. 6 B. यथायोगं. 7 B. प्रगयणं. 8 C चोद्भेदो.

अङ्गान्येतानि वै गर्भे ह्यवमर्शे निबोधत ।
अपवादोऽथ संफेटोऽभिद्रवः[1] शक्तिरेव च ॥६४॥
व्यवसायः प्रसङ्गश्च [द्र]तिः[1] खेदो निषेधनम् ।
विरोधनमथादानं सादनं[2] च प्ररोचना ॥६५॥
[3]एतान्यवमृशेऽङ्गानि भूयो निर्वहणे शृणु ।
[4]सन्धिर्विबोधो ग्रथनं निर्णयः परिभाषणम् ॥६६॥
[5]कृति' प्रसादश्चानन्दः समयो ह्यपगूहनम् ।
भाषणं पूर्ववाक्यं च [6]काव्यसंहार एव च ॥६७॥
प्रशस्तिरिति [7]चाङ्गानि कुर्यान्निर्वहणे बुध ।
चतुष्षष्टिर्बुधैर्ज्ञेयान्येतान्यङ्गानि सन्धिषु[8] ॥६८॥

पुनरेषां प्रवक्ष्यामि लक्षणानि यथाक्रमम् ।
काव्यार्थस्य समुत्पत्तिरुपक्षेप इति स्मृत ॥६९॥
[9]समुत्पन्नार्थबाहुल्यं ज्ञेयः परिकरस्तु सः ।
तन्निष्पत्त्या तु कथनं परिन्यासः प्रकीर्तितः ॥७०॥
गुणनिर्वर्णन यत्तु विलोभनमिति स्मृतम् ।
संप्रधारणमर्थानां युक्तिरित्यभिधीयते ॥७१॥
[10]मुखार्थस्योपगमनं प्राप्तिरित्यभिसंज्ञितम् ।
बीजार्थस्योपगमनं समाधानमपीष्यते ॥७२॥
सुखदु खकृतो योऽर्थस्तद्विधानमिहोच्यते ।
कौतूहलोत्तरावेगो[11] भवेत्तु परिभावना ॥७३॥

64-73 ( C. 65-75, B.XIX 63-73 ). 1 B.C. विद्रव . Mss द्युति . 2 B C. छादनं, NL. सादनं. 3 B. व्यवहारश्च युक्तिश्च विमर्शाङ्गान्यमूनि च. 4 B. सन्धिर्निरोध., C सन्धिर्विरोध , DR ०विबोध . 5 B.C. द्युतिः, B.n. कृति'. 6 C. कार्य०. 7 B. संहारे ज्ञेयान्यङ्गानि नामत'. 8 B C add a couplet 9 B. यदुत्पन्नार्थ०. 10 B. C. सुखार्थ०. 11 C. ०रावेशो.

बीजार्थस्य प्ररोहो य उद्भेदः स तु कीर्तितः ।
प्रकृतार्थसमारम्भः करणं परिचक्षते ॥७४॥
सङ्घातभेदनार्थो यः स भेद इति संज्ञितः ।
एतानि तु मुखाङ्गानि वक्ष्ये प्रतिमुखे पुनः ॥७५॥
समीहा रतिभोगार्था विलास इति कीर्तितः ।
दृष्टनष्टानुसरणं परिसर्पस्तु वर्ण्यते ॥७६॥
कृतस्यानुनयस्यादौ विधूतमपरिग्रहः ।
अपायदर्शनं यत्तु तापनं नाम तद्भवेत् ॥७७॥
क्रीडार्थं विहितं यत्तु हास्यं नर्म तु संज्ञितम् ।
दोषप्रच्छादनार्थं तु हास्यं नर्मद्युति स्मृतम् ॥७८॥
उत्तरोत्तरवाक्यं तु भवेत्प्रगमनं[1] बुधाः ।
या तु व्यसनसंप्राप्तिर्निरोधः सः प्रकीर्तितः ॥७९॥
क्रुद्धस्यानुनयो यत्तु भवेत्तत्पर्युपासनम् ।
विशेषवचनं यत्तु तत्पुष्पमिति संज्ञितम् ॥८०॥
[2]प्रत्यक्षरूक्षं यद्वाक्यं तद्वज्रमिति संज्ञितम् ।
उपपत्तिकृतो योऽर्थ उपन्यासस्तु स स्मृतः ॥८१॥
चातुर्वर्ण्योपगमनं वर्णसंहार इष्यते ।
एतानि तु प्रतिमुखे गर्भे चापि निबोधत[3] ॥८२॥
कपटापाश्रयं यत्तदभूताहरणं विदुः ।
तत्त्वार्थवचनं चैव मार्ग इत्यभिधीयते ॥८३॥
चित्रार्थसमवाये तु वितर्को रूपमिष्यते ।
यत्तु सातिशयं वाक्यं तदुदाहरणमिष्यते ॥८४॥
[4]भावतत्त्वोपलब्धिस्तु क्रम इत्यभिधीयते ।
सामदानार्थसंयोगः[5] संग्रहः स तु कीर्तितः ॥८५॥

74-85 (C. 76-87; B. XIX. 74-85a). 1 B. प्रगयः. 2 C. प्रत्यक्षरूपं 3 B. om. this hem. 4 C भावकृत्वो°. 5 B. सामदानादि.

रूपानुरूपगमनमनुमानमिति स्मृतम् ।
रतिहर्षोत्सवाद्यर्थप्रार्थना प्रार्थना भवेत् ॥८६॥
गर्भस्योद्भेदनं यत्तु तदाक्षिप्तमिति स्मृतम् ।
संरम्भवचनं चैव तोटकं नाम संज्ञितम् ॥८७॥
कपटेनातिसन्धानं ज्ञेय त्वधिबलं बुधैः ।
भयं नृपारिदस्यूत्थमुद्वेगः परिकीर्तित· ॥८८॥
[1]नृपाग्निभयसंयुक्तः संभ्रमो विद्रवः स्मृतः ।
एतान्यङ्गानि गर्भे स्युरवमर्शे निबोधत[2] ॥८९॥
दोषप्रख्यापनं यत् स्यात् सोऽपवादः प्रकीर्तितः ।
रोषग्रथितवाक्यं तु संफेटः स उदाहृतः ॥९०॥
गुरुव्यतिक्रमो यस्तु [1]विज्ञेयोऽभिद्रवस्तु सः ।
[2]विरोधोपशमो यस्तु सा शक्तिः परिकीर्तिता ॥९१॥
व्यवसायस्तु विज्ञेयः [3]प्रतिज्ञाहेतुसम्भवा ।
प्रसङ्गश्चैव विज्ञेयो गुरूणां परिकीर्तनम् ॥९२॥
वाक्यमाधर्षणकृतं[4][द्र]तिस्तज्ज्ञैरुदाहृतम् ।
मनश्चेष्टाविनिष्पन्नः श्रमः खेद उदाहृतः ॥९३॥
ईप्सितार्थप्रतिघातो [5]निषेधः स तु कीर्तितः ।
[6]विरोधनं तु संरम्भादुत्तरोत्तरभाषणम् ॥९४॥
बीजकार्योपगमनमादानमिति[7] अंज्ञितम् ।
अवमानात्कृतं वाक्यं कार्यार्थे [8]सादनं भवेत् ॥९५॥

86-95 (C. 88-97 ; B. XIX. 85b-94) 1 B. शङ्काभयत्रास कृतो विद्रवः मनुदाहृत·. 2 B om. 89b. 1 B. यस्तु स द्रवः परिकीर्तित, C. विज्ञेयो विद्रवस्तु स·. 2 C. विरोधिप्रशमो. 3 B. प्रतिज्ञाहेतुमम्भवः, C. प्रतिज्ञादोषसम्भवः. 4 B.C. द्युतिः. 5 B. प्रतिषेध·. 6 B. कार्यात्ययोपगमनंविरोधनमिति स्मृतम्. 7 B. ·मातानमिति. 8 B.C. छादनं NL. मादनं.

प्ररोचना च विज्ञया संहारार्थप्रकाशिनी ।
एतान्यवमृशेऽङ्गानि संहारे तु निबोधत ॥९६॥
[1]मुखबीजोगमनं सन्धिरित्यभिधीयते ।
कार्यस्यान्वेषणं युक्त्या [2]विबोध इति कीर्तितः ॥९७॥
उपक्षेपस्तु कार्याणां ग्रथनं परिकीर्तितम् ।
अनुभूतस्य कथनं निर्णयः समुदाहृतः ॥९८॥
परिवादकृतं यत् स्यात् तदाहु परिभाषणम् ।
लब्धस्यार्थस्य [3]गमनं [4]कृतिरित्याभिधीयते ॥९९॥
शुश्रूषाद्युपसम्पन्नः प्रसाद इति भण्यते ।
समागमस्तु योऽर्थानामानन्दः स तु कीर्तितः ॥१००॥
दुःखस्यापगमो यस्तु [5]समयः स निगद्यते[6] ।
अद्भुतस्य च संप्राप्तिर्भवेत्तदुपगूहनम् ॥१०१॥
सामदानादिसंयुक्तं भाषणं तूच्यते बुधैः ।
पूर्ववाक्यं तु विज्ञेयं यथोक्तार्थप्रदर्शकम् ॥१०२॥
वरप्रदानसंप्राप्ति काव्यसंहार इष्यते ।
[7]नृपदेशप्रशान्तिश्च प्रशस्तिरभिधीयते ॥१०३॥
इत्येतानि यथासन्धि कार्याण्यङ्गानि [8]रूपके ।
कविभिः [9]काव्यकुशलै रसभावानवेक्ष्य तु ॥१०४॥
[10]सर्वाङ्गानि कदाचित्तु द्वित्रियोगेन वा पुनः ।
ज्ञात्वा कार्यमवस्थां च योज्यान्यङ्गानि सन्धिषु[11] ॥१०५॥
* विष्कम्भश्चूलिका चैव तथा चैव प्रवेशकः ।
* अङ्कावतारोऽङ्कमुखमर्थोपक्षेपपञ्चकम् ॥१०६॥

96-106 (C. 98-108 ; B XIX. 95-110). 1 C. मुखबीजो॰. 2 B. निरोध, C. विरोध. 3 B.C. शमनं, Bbh. गमनं. 4 B.C. युति, DR. कृति. 5 C. स शम. सन्निगयते. 6 B. reads here 99b. 7 C. नृपदेव॰. 8 B. नाटके. 9 C. कार्यकुशलैः. 10 B. संमिश्रानि. 11 B. reads here 47-50.

* मध्यमपुरुषनियोज्यो नाटकमुखसन्धिवस्तुसञ्चारः[1] ।
* विष्कम्भकस्तु [2]कार्यः पुरोहितामात्यकञ्चुकिभिः ॥१०७॥
* शुद्धः सङ्कीर्णो वा द्विविधो विष्कम्भकस्तु विज्ञेयः ।
* मध्यमपात्रैः शुद्धः सङ्कीर्णो नीचमध्यमैः कृतः ॥१०८॥
* अन्तर्यवनिकासंस्थैरुत्तमाधममध्यमैः[1] ।
* अर्थोपक्षेपणं [2]यत्र क्रियते सा हि चूलिका ॥१०९॥
* [3]अङ्कान्तराधिकारी संक्षेपार्थमधिकृत्य [सन्धी]नाम[4] ।
* प्रकरणनाटकविषये प्रवेशको नाम विज्ञेयः[5] ॥११०॥
* [6]अङ्कान्तरेऽथवाऽङ्के निपतति यस्मात् प्रयोगमासाद्य ।
* बीजार्थयुक्तियुक्तो विज्ञेयोऽङ्कावतारोऽसौ ॥१११॥
* विश्लिष्टमुखमङ्कस्य स्त्रिया वा पुरुषेण वा ।
* यत्र संक्षिप्यते पूर्वं तदङ्कमुखमिष्यते ॥११२॥
[1]वृत्तिवृत्त्यङ्गसम्पन्नं [2]पदार्थप्रकृतिस्समम् ।
पञ्चावस्थासमुत्पन्नं पञ्चभिः सन्धिभिर्युतम् ॥११३॥
सन्ध्यन्तरैकविंशत्या चतुःषष्ट्यङ्गसंयुतम्[3] ।
षट्त्रिंशल्लक्षणोपेतं गुणाऽलङ्कारभूषितम् ॥११४॥
महारसं महाभोगमुदात्तवचनान्वितम् ।
महापुरुषसञ्चारं साध्वाचारजनप्रियम् ॥११५॥
[4]सुश्लिष्टसन्धियोगं च सुप्रयोगं सुखाश्रयम् ।
मृदुशब्दाभिधानं च कविः कुर्यात्तु नाटकम् ॥११६॥

107-108 (C. 109-110 ; B XIX. 111-112). 1 B. ॰सन्धिमात्रसञ्चारः 2 C. संस्तुतः पुरोहित॰. 109-111 (C. 111-112, 115 ; B.XIX. 113-114). 1 B. ॰संस्थैः सूतादिभिरनेकधा. 2 B. यत्तु. 3 B. अङ्कान्तरानुसारी. 4 Mss. बिन्दुनाम्. 5 C. adds here 2 couplets ; see XX. 33 above. 6 B. अङ्कान्त एव चाङ्को. 112-116 (C. 116-120 ; B.XIX. 115-116, 139-141). 1 C. वृत्तिप्रलम्ब, 2 C. पताकार्थप्रतिक्रियम्. 3 B. shortens 113-114a. 4 B. सुश्लिष्टसन्धिसंयोगं.

अवस्था या तु लोकस्य सुखदुःखसमुद्भवा ।
नानापुरुषसंचारा नाटके सम्भवेदिह ॥११७॥
न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला ।
न तत्कर्म न योगोऽसौ नाटके यन्न दृश्यते ॥११८॥
यो यः स्वभावो लोकस्य नानावस्थान्तरात्मकः ।
[1]सोऽङ्गाभिनयसंयुक्तो नाट्यमित्यभिधीयते ॥११९॥
देवतानामृषीणां च राज्ञां [2]लोकस्य चैव हि ।
पूर्ववृत्तानुचरितं नाटकं नाम तद्भवेत् ॥१२०॥
यस्मात् स्वभावं [3]संहृत्य साङ्गोपाङ्गगतिक्रमैः ।
[4]अभिनीयते गम्यते तस्माद्वै नाटकं स्मृतम् ॥१२१॥
सर्वभावैः सर्वरसैः सर्वकर्मप्रवृत्तिभिः ।
नानावस्थान्तरोपेतं नाटकं संविधीयते ॥१२२॥
[1]यान्येव शिल्पजातानि लोककर्मकृतानि च ।
[2]तान्यशेषाणि रूपाणि कर्तव्यानि प्रयोक्तृभिः ॥१२३॥
लोकस्वभावं संप्रेक्ष्य नराणां च बलाबलम् ।
संभोगं चैव युक्तिं च ततः कार्यं तु नाटकम् ॥१२४॥
भविष्यति युगे प्रायो भविष्यन्त्यबुधा नराः ।
ये चापि हि भविष्यन्ति [3]तेऽप्यल्पश्रुतबुद्धयः ॥१२५॥
बुद्धयः कर्म शिल्पानि वैचक्षण्यं कलासु च ।
सर्वाणि पुंसां नश्यन्ति यदा लोकः प्रणश्यति[4] ॥१२६॥
तदेवं [5]लोकभावानां प्रसमीक्ष्य बलाबलम् ।
मृदुशब्दं सुखार्थं च कविः कुर्यात्तु नाटकम् ॥१२७॥

117-127 (C. 121-131; B.XIX. 142-152). 1 B. लोकाङ्गाभिनयै॰. 2 B. योतङ्गस्नेषताम्. 3 B. संलज्य. 4 B. प्रयुज्यते ज्ञायते. 123-127 (C. 127-131; B.XIX. 148-152). 1 B. अनेकशिल्पजातानि नैककर्मक्रियाणि. 2 C. तानि शेषाणि. 3 B. ते चाश्रुतबुद्धयः. 4 B. reads 126 differently. 5 B. लोकभावानां.

चेकीडिताद्यैः शब्दैस्तु काव्यबन्धा भवन्ति ये।
वेश्या इव न [1]शोभन्ते कमण्डलुधरैर्द्विजैः ॥१२८॥
इतिवृत्तं ससन्ध्यङ्गं मया प्रोक्तं द्विजोत्तमाः[1]।
अत ऊर्ध्वं प्रवक्ष्यामि वृत्तीनामिह लक्षणम् ॥१२९॥

इति भारतीये नाट्यशास्त्रे सन्ध्यङ्गविकल्पो नाम
एकविंशोऽध्यायः।

128 (C. 132; B.XIX. 153). 1 B. न ते मान्ति. 129 (C 133; B.XIX. 154). 1 B. दशरूपविधानं च मया प्रोक्तं द्विजोत्तमाः.

# द्वाविंशोऽध्यायः

समुत्थानं तु वृत्तीनां व्याख्यास्याम्यनुपूर्वशः ।
यथा वस्तूद्भवं चैव काव्यानां च विकल्पनम् ॥१॥
एकार्णवं जगत् कृत्वा भगवानच्युतो यदा ।
शेते स्म नागपर्यङ्के [1]लोकान् संक्षिप्य मायया ॥२॥
अथ [2]वीर्यमदोन्मत्तावसुरौ मधुकैटभौ ।
तर्जयामासतुर्देवं तरसा युद्धकाङ्क्षिणौ ॥३॥
[3]बाहू विमर्दमानौ तावक्षयं भूतभावनम् ।
मुष्टिभिर्जानुभिश्चैव योधयामासतु प्रभुम् ॥४॥
[4]अभिद्रवन्तावन्योन्य वाक्यैश्च परुषैस्तदा ।
नानाधिक्षेपवचनैः कम्पयन्ताविवोदधिम् ॥५॥
तयोर्नानाप्रकाराणि [5]श्रुत्वा वाक्यानि गर्जतो ।
[6]किञ्चिदाकम्पितमना द्रुहिणो वाक्यमब्रवीत् ॥६॥
किमिदं भारती वृत्तिर्वाग्भिरेव प्रवर्तते ।
उत्तरोत्तरसंबद्धा नन्विमौ निधनं नय ॥७॥
पितामहवचः श्रुत्वा प्रोवाच मधुसूदनः ।
[7]बाढं कार्यक्रियाहेतोर्भारतीयं विनिर्मिता ॥८॥
[8]भाषतो वाक्यभूयिष्ठा भारतीयं भविष्यति ।
[9]अहमेतौ निहन्म्यद्य इत्युक्त्वा वचनं हरिः ॥९॥
शुद्धैरविकृतैरङ्गैः साङ्गहारैस्तदा भृशम् ।
[10]योधयामास तौ दैत्यौ युद्धमार्गविशारदौ ॥१०॥

1-10 (C 1-10, B XX 1-10) 1 C लोक 2 B वीर्यबलो०
3 B निज बाहू विमृद्नन्तौ भूतभावनमन्ततः 4 B बहुभिः परुषैर्वाक्यैरन्योन्यमभिद्रवम्
5 B. वचांसि वदतोस्तदा, C गर्जतोः, Bc सर्जतो 6 B श्रुत्वा त्वभिहतमना
7 B कार्यहतोर्मया ब्रह्मन् 8 B. वदता 9 B तस्मादेतौ 10 B योधयामासतु

[1]भूमिसंस्थानसंयोगैः पदन्यासैस्तदा हरेः ।
अतिभारोऽभवद्भूमेर्भारती तत्र निर्मिता ॥११॥
वल्गितैः शार्ङ्गधनुषस्तीव्रैर्दीप्तिकरैस्तथा ।
सत्त्वाधिकैरसंभ्रान्तैः सात्त्वती तत्र निर्मिता ॥१२॥
विचित्रैरङ्गहारैस्तु देवो लीलासमुद्भवैः[2] ।
बबन्ध यच्छिखापाशं कैशिकी तत्र निर्मिता ॥१३॥
संरम्भावेगबहुलैर्नानाचारीसमुत्थितैः ।
नियुद्धकरणैश्चित्रैर्निर्मिताऽऽरभटी ततः ॥१४॥
यां यां देवः समाचष्टे क्रियां वृत्तिसमुत्थिताम्[3] ।
तां तदर्थानुगैर्वाक्यैः द्रुहिणः प्रत्यपूजयत् ॥१५॥
यदा हतौ तावसुरौ हरिणा मधुकैटभौ ।
उक्तवांस्तु तदा ब्रह्मा नारायणमरिन्दमम् ॥१६॥
अहो [4]विचित्रैर्विशदैः स्फुटैः सललितैरपि ।
अङ्गहारैः कृतं देव त्वया दानवनाशनम् ॥१७॥
तस्मादयं सर्वलोके नियुद्धसमयक्रमः ।
सर्वशस्त्रविमोक्षेषु न्यायसंज्ञो भविष्यति ॥१८॥
न्यायाश्रितैरङ्गहारैर्न्यायाच्चैव समुत्थितैः ।
यस्माद्युद्धं कृतं ह्येतत्तस्मान् [5]न्यायः प्रकीर्तितः[6] ॥१९॥
* ततो देवेषु निक्षिप्तो द्रुहिणेन महात्मना ।
* पुनर्नाट्यप्रयोगे च [7]नानाभावरसान्विताः ॥२०॥
* वृत्तिसंज्ञा कृता ह्येता [8]नानाभावरसाश्रया ।
* चरितैस्तस्य[9] देवस्य द्रष्टव्यं यद् यादृशं कृतम् ॥२१॥

11-21 (C. 11-21, B XX. 11-21). 1 B. भूमिसंयोगसंस्थानैः 2 B. °समन्वितैः 3 B. वृत्तिषु संस्थितम्. 4 B. °विषमैः 5 B. न्यायाः प्रकीर्तिताः. 6 B. adds one couplet. 7 B. नानाभावसमन्विता. 8 B काव्यबन्धसमा°. 9 B. °र्यस्य.

ऋषिभिस्तादृशी वृत्तिः कृता [1]पाठ्यादिसम्भवा ।
नाट्यवेदसमुत्पन्ना वागङ्गाभिनयात्मिका ॥२२॥
[2]पुनरिष्वस्त्रजातेन नानाचारी समाकुले ।
मया काव्यक्रियाहेतोः प्रक्षिप्ता द्रुहिणाज्ञया ॥२३॥
ऋग्वेदाद् भारती वृत्तिर्यजुर्वेदात्तु सात्त्वती ।
कैशिकी सामवेदाच्च शेषा चाथर्वणात्तथा ॥२४॥
या वाक्प्रधाना पुरुषप्रयोज्या
स्त्रीवर्जिता [3]संस्कृतपाठ्ययुक्ता ।
स्वनामधेयैर्भरतैः प्रयुक्ता
सा भारती नाम भवेत्तु वृत्तिः ॥२५॥
भेदास्तस्यास्तु विज्ञेयाश्चत्वारोऽङ्गत्वमागताः ।
प्ररोचना मुखं चैव वीथी प्रहसनं तथा ॥२६॥
जयन्यदयिनी चैव मङ्गल्या विजयावहा ।
सर्वपापप्रशमनी पूर्वरङ्गे प्ररोचना[4] ॥२७॥
नटी विदूषको वापि पारिपार्श्विक एव वा ।
सूत्रधारेण सहिताः संलापं यत्र कुर्वते ॥२८॥
चित्रैर्वाक्यैः स्वकार्योत्थैर्वीथ्यङ्गैरन्यथापि वा ।
आमुखं तत्तु विज्ञेयं बुधैः प्रस्तावनापि वा[5] ।
आमुखाङ्गान्यतो वक्ष्ये यथावदनुपूर्वशः ॥२९॥
उद्घात्यकः कथोद्घातः प्रयोगातिशयस्तथा ।
प्रवृत्तकावलगिते आमुखाङ्गानि पञ्च वै ॥३०॥
उद्घात्यकावलगितयोर्लक्षणं कथितं मया ।
शेषाणां लक्षणमहं व्याख्यास्याम्यनुपूर्वशः ॥३१॥

22-31 ( C. 22, 23-31; B.XX. 23b-34 ). 1 C. वाक्याङ्ग°. 2 C. पुनरिष्वसुजातेन. 3 C. संस्कृतवाक्य. 4 B. adds. a couplet. 5 B. adds a hem.

सूत्रधारस्य वाक्यं वा यत्र वाक्यार्थमेव वा।
गृहीत्वा प्रविशेत् पात्रं कथोद्घातः स कीर्तितः ॥३२॥
¹प्रयोगेऽत्र प्रयोगं तु सूत्रधारः प्रयोजयेत्।
ततश्च प्रविशेत् पात्रं प्रयोगातिशयो हि सः ॥३३॥
²प्रवृत्तं कार्यमाश्रित्य सूत्रभृद्यत्र वर्णयेत्।
तदाश्रयाच्च पात्रस्य प्रवेशस्तत् प्रवृत्तकम् ॥३४॥
एषामन्यतमं श्लिष्टं योजयित्वा तु युक्तिभिः³।
पात्रग्रन्थैरसम्बाधं प्रकुर्यादामुखं बुधः ॥३५॥
एवमेतद् बुधैर्ज्ञेयमामुखं विविधाश्रयम्⁴।
लक्षणं पूर्वमुक्तं तु वीथ्याः प्रहसनस्य च ॥३६॥
इत्यष्टार्धविकल्पा वृत्तिरियं भारती मया प्रोक्ता।
सात्त्वत्यास्तु विधानं लक्षणयुक्त्या प्रवक्ष्यामि ॥३७॥

या सात्त्वतेनेह गुणेन युक्ता
न्यायेन वृत्तेन समन्विता च।
हर्षोत्कटा संहृतशोकभावा
सा सात्त्वती नाम भवेत्तु वृत्तिः ॥३८॥

वागङ्गाभिनयवती सत्त्वोत्थानवचनप्रकरणेषु।
सत्त्वाधिकारयुक्ता विज्ञेया सात्त्वती वृत्तिः ॥३९॥
वीराद्भुतरौद्ररसा विज्ञेया ⁵हास्यकरुणशृङ्गारा।
उद्धतपुरुषप्राया परस्पराघर्षणकृता च ॥४०॥
उत्थापकश्च परिवर्तकश्च ⁶संलापकः ससंघातः।
चत्वारोऽस्या भेदा विज्ञेया नाट्यतत्त्वज्ञैः ॥४१॥

32-41 (C. 32-41; B.XX. 35-44). 1 B. प्रयोगे तु. 2 B. कालप्रवृत्तिम्...वर्णना या प्रयुज्यते. 3 B. adds a hem. 4 C. विबुधाश्रयम्. 5 B. निरस्तकरुण०. 6 B. संलापकश्च संघातः.

अहमप्युत्थास्यामि त्वं तावद्दर्शयात्मनः शक्तिम् ।
इति सङ्घर्षसमाश्रयमुत्थितमुत्थापको ज्ञेयः ॥४२॥
उत्थानसमारब्धानर्थानुत्सृज्य योऽर्थयोगवशात् ।
अन्यानर्थान् भजते स चापि परिवर्तको ज्ञेयः[1] ॥४३॥
साधर्षजो निराधर्षजो वापि [2]विविधवचनसंयुक्तः ।
साधिक्षेपालापो ज्ञेयः संलापकः सोऽपि[3] ॥४४॥
[4]मित्रार्थकार्ययुक्त्या दैववशादात्मदोषयोगाद्वा ।
संघातभेदजननस्तज्ज्ञैः संघातको ज्ञेयः ॥४५॥
इत्यष्टार्धविकल्पा वृत्तिरियं सात्त्वती मयाऽभिहिता ।
कैशिक्यास्त्विह लक्षणमतः परं संप्रवक्ष्यामि ॥४६॥

या श्लक्ष्णनेपथ्यविशेषचित्रा
स्त्रीसंयुता या बहुनृत्तगीता ।
कामोपभोगप्रभवोपचारा
तां कैशिकीं वृत्तिमुदाहरन्ति ॥४७॥

नर्म च नर्मस्फुर्जो नर्मस्फोटोऽथ नर्मगर्भश्च ।
कैशिक्याश्चत्वारो भेदा ह्येते समाख्याताः ॥४८॥
आस्थापितशृङ्गारं विशुद्धकरणं निवृत्तवीररसम् ।
हास्यप्रवचनबहुलं नर्म त्रिविधं विजानीयात् ॥४९॥
[5]ईर्ष्याक्रोधप्रायं सोपालम्भवचनानुविद्धं च ।
आत्मोपक्षेपकृतं सविप्रलम्भं स्मृतं नर्म ॥५०॥
नवमङ्गमसम्भोगो रतिसमुदयवाक्यवेषसंयुक्तः ।
ज्ञेयो नर्मस्फुर्जो [6]ह्यवसानभयात्मकश्चैव ॥५१॥
विविधानां भावानां लवैर्लवैर्भूषितो बहुविशेषः ।
असमग्राक्षिप्तरसो नर्मस्फोटस्तु विज्ञेयः ॥५२॥

42-52 ( C. 42-52 ; B.XX. 45-60 ) 1 B. adds a couplet. 2 B. रागवचन॰. 3 B. adds a couplet. 4 C. मित्रार्थवाक्य॰, B. मन्त्रार्थैर्वाक्यशक्त्या. Bdh. मन्त्रार्थकार्यं. 5 C. ईर्ष्याक्रोधप्रयासोप॰. 6 C. ॰भयानकश्चैव.

[1]विज्ञानरूपशोभाधनादिभिर्नायको गुणैर्यत्र ।
प्रच्छन्नं व्यवहरते कार्यवशान्नर्मगर्भोऽसौ[2] ॥५३॥
इत्यष्टार्धविकल्पा वृत्तिरियं कैशिकी मया प्रोक्ता ।
अत ऊर्ध्वमुद्धतरसामारभटीं संप्रवक्ष्यामि ॥५४॥
आरभटप्रायगुणा तथैव [3]बहुवचनकपटोपेता च ।
दम्भानृतवचनवती त्वारभटी नाम विज्ञेया ॥५५॥
[7][4]पुस्तावपातप्लुतलङ्घितानि
[5]चान्यानि मायाकृतमिन्द्रजालम् ।
चित्राणि [6]युद्धानि च यत्र नित्यं
तां तादृशीमारभटीं वदन्ति[7] ॥५६॥
संक्षिप्तकावपातौ वस्तूत्थापनमथापि संफेटः ।
एते ह्यस्या भेदा लक्षणमेषां प्रवक्ष्यामि ॥५७॥
अन्वर्थशिल्पयुक्तो बहुपुस्तोत्थानचित्रनेपथ्यः ।
संक्षिप्तवस्तुविषयो ज्ञेयः संक्षिप्तको नाम ॥५८॥
भयहर्षसमुत्थानं [8]विद्रुतसंभ्रान्तविविधवचनं च ।
क्षिप्रप्रवेशनिर्गममवपातमिमं विजानन्ति ॥५९॥
सर्वरससमासकृतं [9]सविद्रवम् विद्रवाश्रय वाऽपि ।
[10]कार्यं विभाव्यते यत् यत्तद्वस्तूत्थापनं ज्ञेयम् ॥६०॥
संरम्भसमायुक्तो बहुयुद्धकपटनिर्भेदः ।
शस्त्रप्रहारबहुलः संफेटो नाम विज्ञेयः ॥६१॥
एवमेता बुधैर्ज्ञेया वृत्तयो नाट्यसंश्रयाः ।
रसप्रयोगमासां च कीर्त्यमानं निबोधत ॥६२॥

53-62 (C. 53-64; B.XX. 61-72). 1 B. ॰रूपशोभाधनादि॰. 2 B.C. add a couplet. 3 C. बहुवचनकपटा च, B. बहुकपटवचनोपेता, 4 C. प्रस्तावपात॰. 5 B. छेद्यानि. 6 C. युक्तानि. 7 B.C. add a couplet. 8. B. विद्रवविनिपातसंभ्रमाचरणम्. 9 B. C. सविद्रवाविद्रवाश्रयं, By. सविद्रवं वाप्यविद्रवं 10 B.C. नाट्यं, Bp. कार्यं.

[1]शृङ्गारे चैव हास्ये च वृत्तिः स्यात् कैशिकीति सा।
[2]सात्त्वती नाम सा ज्ञेया वीराद्भुतसमाश्रया ॥६३॥
[3]भयानके च बीभत्से रौद्रे चारभटी भवेत्।
[4]भारती चापि विज्ञेया करुणाद्भुतसंश्रया[5] ॥६४॥
वृत्त्यन्त एषोऽभिनयो मयोक्तो
वागङ्गसत्त्वप्रभवो यथावत्।
आहार्यमेवाभिनयं प्रयोगे
वक्ष्यामि नेपथ्यकृतं [6]पुनश्च ॥६५॥

इति भारतीये नाट्यशास्त्रे वृत्तिविकल्पो नाम
द्वाविंशोऽध्यायः ॥

63-65 (C. 65-69 ; (B.XX. 73-77). 1 B. हास्यशृङ्गारबहुला कैशिकी परिचक्षिता. 2 B. सात्त्वती चापि विज्ञेया वीराद्भुतसमाश्रया. 3 B. रौद्रे भयानके चैव विज्ञेयारभटी बुधैः. 4 B. बीभत्से करुणे चैव भारती संप्रकीर्तिताः. 5 B. C. repeat here VII. 118-119. 6 B. तु भूयः.

## त्रयोविंशोऽध्यायः

आहार्याभिनयं विप्राः प्रवक्ष्याम्यनुपूर्वशः ।
[1]सर्व एव प्रयोगोऽयं यतस्तस्मिन् प्रतिष्ठितः ॥१॥
आहार्याभिनयो नाम ज्ञेयो नेपथ्यजो विधिः ।
तत्र कार्यः प्रयत्नस्तु नाट्यस्य शुभमिच्छता[2] ॥२॥
नानावस्थाः प्रकृतयः [3]पूर्वं नेपथ्यसूचिताः ।
अङ्गादिभिरभिव्यक्तिमुपगच्छन्त्ययत्नतः ॥३॥
चतुर्विधं तु नेपथ्यं पुस्तोऽलङ्कार एव च ।
तथाङ्गरचना चैव ज्ञेयः सञ्जीव एव च ॥४॥
पुस्तस्तु त्रिविधो ज्ञेयो नानारूपप्रमाणतः ।
सन्धिमो व्याजिमश्चैव [4]चेष्टिमश्च प्रकीर्तित ॥५॥
किलिञ्जवस्त्रचर्माद्यैर्यद्रूपं क्रियते बुधैः ।
सन्धिमो नाम विज्ञेयो पुस्तो नाटकसंश्रयः ॥६॥
व्याजिमो नाम विज्ञेयो यन्त्रेण क्रियते तु यः ।
[5]चेष्ट्यते चैव यद्रूपं [6]चेष्टिमः स तु संज्ञितः ॥७॥
शैलयानविमानानि चर्मवर्मध्वजा [7][ना]गाः ।
यानि क्रियन्ते नाट्ये हि स पुस्त इति संज्ञितः ॥८॥
अलङ्कारस्तु विज्ञेयो माल्याभरणवाससाम् ।
नानाविधसमायोगोऽङ्गोपाङ्गविधि[कृ]तः[8] ॥९॥
[9]वेष्टितं विततं चैव संघात्यं [10]ग्रन्थिमं तथा ।
[11]प्रलम्बितं तथा चैव माल्यं पञ्चविधं स्मृतम् ॥१०॥

1-10 (C 1-11; B. XXI. 1-11) 1 C एवमेव. 2 B. reads this as 3; B C. add a couplet. 3 C. पूर्वनेपथ्यसूचिकाः, B. नेपथ्यसाधिताः. 4 B. वेष्टिमः. 5 B. वेष्ट्यते. 6 B. वेष्टिमः. 7 Mss. नगाः. 8 B. ॰विधिः स्मृतः. C. ॰विनिर्मितः. 9 B. वेष्टिमं. 10 K. तेपितं. 11 B. प्रालम्बितं.

चतुर्विधं तु विज्ञेयं देहस्याभरणं बुधैः ।
आवेध्यं बन्धनीयं च [1]प्रक्षेप्यारोप्यके तथा ॥११॥
आवेध्यं कुण्डलादीह [2]यत्स्यात् श्रवणभूषणम् ।
[3]श्रोणिसूत्राङ्गदै[स्तथा] बन्धनीयानि निर्दिशेत् ॥१२॥
प्रक्षेप्यं नूपुरं विद्याद्वस्त्राभरणमेव च ।
आरोप्यं हेमसूत्रादि हाराश्च विविधाश्रयाः[4] ॥१३॥
भूषणानां विकल्पं च पुरुषस्त्रीसमाश्रयम् ।
नानाविधं प्रवक्ष्यामि देशजातिसमुद्भवम् ॥१४॥
चूडामणिः समुकुटः शिरसो भूषणं स्मृतम् ।
कुण्डलं मोचकं [5]कीलः कर्णाभरणमिष्यते ॥१५॥
मुक्तावली हर्षकं च [6]ससूत्रं कण्ठभूषणम् ।
[7]कटकोऽङ्गुलिमुद्रा च स्यादङ्गुलिविभूषणम् ॥१६॥
[8]हस्तपी वलयं चैव बाहुनालीविभूषणम् ।
[9]रुचकश्चूलिका कार्या मणिबन्धविभूषणम् ॥१७॥
[10]केयूरमङ्गदं चैव कूर्परोपरिभूषणम् ।
त्रिसरश्चैव हारश्च भवेद्वक्षोविभूषणम् ॥१८॥
[11]व्यलम्बिमौक्तिकहारा माल्याद्या देहभूषणम् ।
[12]तलकं सूत्रकं चैव भवेत् कटिविभूषणम् ॥१९॥
अयं पुरुषनियोग कार्यस्त्वाभरणाश्रयः ।
देवानां पार्थिवानां च पुनर्वक्ष्यामि योषिताम् ॥२०॥

11-21 (C. 11-21 ; B.XXI. 11-21 ). 1 B. क्षेप्यमारोप्यमेव च. 2 C. तथा. 3 B. ०सूत्राङ्गदे मुक्ता०, C. श्रोणि सूत्राङ्गदैर्मेका. 4 B. puts 13b before 12b. 5 B. कीला. 6 B. सूत्रकं, Bp. ससूत्र॰. 7 B. वेतिका. (वेटिका, वटिका). 8 B. हस्तली (Bj. हस्तती, C हस्तवी). 9 C रुचिकोर्चिविका. 10 B. केयूरे अङ्गदे चैव कूर्परोपरिभूषणे. 11 C. व्यालम्बिमौक्तिकं. 12 C. तरलं, B. तलकं ( तनुकं, तलइं ).

¹शिखापाशः ²शिखाव्यालः ³पिण्डीपत्रं तथैव च ।
चूडामणिर्मकरिका ⁴मुक्ताजालं गवाक्षिकम्⁵ ॥२१॥
ललाटतिलकश्चैव नानाशिल्पप्रयोजितः ।
⁶भ्रूकक्षोपरिगुच्छश्च कुसुमानुकृतिर्भवेत् ॥२२॥
शिरसो भूषणं चैव विचित्रं ⁷शीर्षजालकम् ।
⁸कण्डकं शिखिपत्रं च ⁹वेणीकञ्जं सदोरकम् ॥२३॥
कर्णिका कर्णवलयं तथा स्यात् पत्रकर्णिका ।
¹⁰कुण्डलं कर्णमुद्रा च कर्णोत्कीलक एव च ॥२४॥
¹¹नानारत्नविचित्राणि ¹²दन्तपत्राणि चैव हि ।
कर्णयोर्भूषणं कार्यं कर्णपूरस्तथैव च ॥२५॥
तिलकाः ¹³पत्रलेखा च भवेद्गण्डविभूषणम् ।
¹⁴त्रिवेणी चैव विज्ञेयं भवेद्वक्षोविभूषणम् ॥२६॥
नेत्रयोरञ्जनं ¹⁵कार्यमधरस्य च रञ्जनम् ।
दन्तानां विविधा रागाश्चतुर्णां ¹⁶शुक्लता तथा ॥२७॥
¹⁷रागान्तरविकल्पोऽथ शोभ[नया]चिरोज्ज्वलः¹⁸ ।
मुग्धानां सुन्दरीणां च ¹⁹मुक्ताभाः [सि]तशोभनाः ॥२८॥
सुरक्ता वापि दन्ताः स्युः पद्मपल्लवरञ्जनाः ।
²⁰अश्मरागोद्योतितः स्यादधरः पल्लवप्रभः ॥२९॥
विलासश्च भवेत्तासां सविभ्रान्तनिरीक्षितम् ।
मुक्तावली व्यालपङ्क्तिर्मञ्जरी रत्नमालिका ॥३०॥

21-30 (C. 22-31 ; B XXI. 22-31 ). 1 B. शिखापाशं 2 C. शिखाजाल. 3 C. पिण्डपात्रं. 4 B मुक्ताजाल०. 5 C. गवाक्षकं. 6 B. भ्रूगुच्छोपरि. 7 B शीर्षत्रोलक 8 C. कुण्डलं 9 C. वेणीकञ्जसरोचकम् , B. वेणीगुच्छं सदोरकम्. 10 C. आवेष्टित. 11 C. नानाचित्र०. 12 C. रत्नपत्राणि. 13 C. पत्ररेखा. 14 B. त्रिवणी 15 B. ज्ञेयं 16 B शुक्लवापि वा. 17 C. ०विकल्पाथ. 18 Mss. शोभनेना०. 19 B. मुक्ताभासित०, C. मुक्ताभाः मित०. 20 B. अश्मरागाद् द्योतितः

रत्नावली [1]च सूत्रं च ज्ञेयं कण्ठविभूषणम् ।
द्विसरस्त्रिसरश्चैव चतुःसरकमेव च ॥३१॥
तथा शृङ्खलिका चैव भवेत्कण्ठविभूषणम् ।
नानाशिल्पकृताश्चैव हारा वक्षोविभूषणम् ॥३२॥
मणिजालावनद्धं च भवेत् [2]पृष्ठविभूषणम् ।
अङ्गदं वलयं चैव बाहुमूलविभूषणम्[3] ॥३३॥
[4]खर्जुरकं [5]सोच्छितिकं बाहुनालीविभूषणम् ।
[6]कलापो कटकं शंखो हस्तपत्रं [7]सपूरकम् ॥३४॥
मुद्राङ्गुलीयकं च स्यादङ्गुलीनां विभूषणम् ।
[8]काञ्ची मौक्तिकजालाढ्या [9]तलकं मेखलं तथा ॥३५॥
रशना च कलापश्च भवेच्छ्रोणीविभूषणम् ।
एकयष्टिर्भवेत् काञ्ची मेखला त्वष्टयष्टिका ॥३६॥
रशना षोडश ज्ञेया कलापः पञ्चविंशतिः ।
द्वात्रिंशच्च चतुःषष्टिः शतमष्टोत्तरं तथा ॥३७॥
मुक्ताहारा भवन्त्येते देवपार्थिवयोषिताम् ।
नूपुरः किङ्किणीकं च [10]घण्टिकाजालमेव च ॥३८॥
[11]सङ्घोपकटकं चैव गुल्फोपरि विभूषणम् ।
जङ्घयोः पादपत्रं स्यादङ्गुलीष्वङ्गुलीयकम् ॥३९॥
[12]अङ्गुष्ठे तिलकं चैव पादयोस्तु विभूषणम् ।
[13]तथैवालक्तरागश्च नानाभक्तिनिवेशितः ॥४०॥

31-40 (C. 32-41a; B XXI. 32-41). 1 B. सूत्रकं च. 2 C. स्तनविभूषणम्, M. पृष्ठ०. 3 B. puts this hem. before 32a. 4 B. खर्जूरकं. 5 B. सोच्छितिकं, C. स्वेच्छितोक्थ. 6 C. कटकं कलशाखा च. 7 C. सपूरकं. 8 B. मुक्ताजालाढ्यतलकं मेखला काञ्चिकापि वा. 9 B, तलकं. 10 B. घण्टिका रत्नजालकम् C. रत्नजालकमेव च. 11 B. सघोपे कटके 12 B. अङ्गुष्ठतिलकाश्चैव. 13 B. तथालक्तकरागाश्च.

अशोकपल्लवच्छायः स्यात् स्वाभाविक एव वा ।
एतद्विभूषणं नार्या आकेशादानखादपि ॥४१॥
यथाभावरसावस्थं विज्ञायैवं प्रयोजयेत् ।
आगमश्च प्रमाणं च रूपनिर्वर्णनं तथा ॥४२॥
[1]विश्वकर्मोद्भवं कार्यं [2]बुध्या चापि प्रयोजयेत् ।
न हि शक्यं सुवर्णेन मुक्ताभिर्मणिभिस्तथा ॥४३॥
स्वाधीनं [3]चेप्सया चैव कर्तुमङ्गस्य भूषणम् ।
[4]विभागतोऽभिप्रयुक्तमङ्गशोभाकरं भवेत् ॥४४॥
यथास्थानान्तरगतं भूषणं रत्नसंयुतम् ।
न तु नाट्यप्रयोगेषु कर्तव्यं भूषणं बहु ॥४५॥
खेदं जनयते तद्धि सन्यायतविचेष्टनात् ।
[5]गुर्वाभरणसन्नो हि चेष्टां न कुरुते पुनः ॥४६॥
गुरुभारावसन्नस्य स्वेदो मूर्च्छा प्रजायते ।
[6]तस्मान्न सम्यक् च कृतं सौवर्णं भूषणं भवेत् ॥४७॥
[7]जतुपूर्णाल्परत्नं तु न खेदजननं भवेत् ।
स्वेच्छया भूषणविधिर्दिव्यानामुपदिश्यते ।
यत्नभावाद्विनिष्पन्ना मानुषाणां विभूषणम्[8] ॥४८॥
भूषणैश्चापि वेषैस्तु नानावस्थासमाश्रयैः ।
दिव्याङ्गनानां कर्तव्या विभक्तिः स्वस्वभूमिजा ॥४९॥
विद्याधरीणां यक्षीणाप्सरोनागयोषिताम् ।
ऋषिदैवतकन्यानां वेषैर्नानात्वमिष्यते ॥५०॥
तथा च सिद्धगन्धर्वराक्षसासुरयोषिताम् ।
दिव्यानां नरनारीणां [9]मानुषीणां तथैव च ॥५१॥

41-51 (C. 41b-52; B XXI. 42-56a). 1 B. विश्वकर्ममतात्कार्यं, C. कार्या. 2 B. बुद्ध्यापि प्रयोजयेत्. 3 B. इति रच्यैव. 4 C. विभावतो. 5 B. गुरुभावाव॰. 6 B. तस्मात्तनुलचकृत. 7 B. रत्नवज्जतुवद्ध वा. 8 B. repeats variant of 10, and adds two couplets. 9 B. तथा चैव शिखण्डक.

[1]शिखापुटशिखण्डं तु मुक्ताभूयिष्ठभूषणम् ।
विद्याधरीणां कर्तव्यः शुद्धो वेषपरिच्छदः ॥५२॥
यक्षिण्यप्सरसां चैव कार्यं रत्नैर्विभूषणम् ।
[2]समस्तासां भवेद्वेषो यक्षीणां केवलं शिखा ॥५३॥
दिव्यवत् संप्रकर्तव्यं नागीनां तु विभूषणम् ।
मुक्तामणिलताप्रायं [3]फणस्तासां तु केवलम् ॥५४॥
कार्यं तु मुनिकन्यानामेकवेणीधरं शिरः ।
न चापि भूषणं कार्यं [4]तासामत्यर्थतो भवेत् ॥५५॥
मुक्तामरकतप्रायं मण्डनं सिद्धयोषिताम् ।
तासां चैव तु कर्तव्यं पीतवस्त्रपरिच्छदम् ॥५६॥
पद्मरागमणिप्रायं गन्धर्वीणां विभूषणम् ।
वीणाहस्ता च कर्तव्याः कौसुम्भवसनास्तथा ॥५७॥
इन्द्रनीलैस्तु कर्तव्यं राक्षसीनां विभूषणम् ।
सिता दंष्ट्रा च कर्तव्या कृष्णवस्त्रपरिच्छदः ॥५८॥
वैदूर्यमुक्ताभरणाः कर्तव्याः सुरयोषितः ।
शुकपिच्छनिभैर्वस्त्रैः कार्यस्तासां परिच्छदः ॥५९॥
पुष्परागैश्च मणिभिः क्वचिद्वैदूर्यभूषितः ।
दिव्यवानरनारीणां कार्यो नीलपरिच्छदः ॥६०॥
एवं शृङ्गारिणः कार्या वेषा दिव्याङ्गनाश्रयाः ।
अवस्थान्तरमासाद्य शुद्धाः कार्याः पुनस्तथा ॥६१॥
मानुषीणां तु कर्तव्या नानादेशसमुद्भवाः ।
[5]वेषास्त्वाभरणोपेतास्तांश्च सम्यङ् निबोधत ॥६२॥
अवन्तियुवतीनां तु शिरः सालककुन्तलम् ।
गौडीनामलकप्रायं सशिखापाशवेणिकम् ॥६३॥

52-63 (C. 52-64; B.XXI. 55b-68a). 1 C. ॰शिखण्डा तु. 2 C. यस्त्वासां तु. 3 C. फलं, B. फणास्तासां...केवला. 4 B तासां वेषो वनाश्रितः. 5 B. वेषाभरणसंयोगान् गदतस्तान्.

आभीरयुवतीनां तु द्विवेणीधरमेव च ।
[1]शिरःपरिगमः कार्यो नीलप्रायमथाम्बरम् ॥६४॥
तथा पूर्वोत्तरस्त्रीणां [2]समुन्नद्धशिखण्डकम् ।
[3]आकेशं छादनं तासां वेषकर्मणि कीर्तितम् ॥६५॥
तथा च दक्षिणस्त्रीणां कार्यमुल्लेख्यसंश्रितम् ।
[4]कुम्भीपदकसंयुक्तं तथावर्तललाटिकम्[5] ॥६६॥
[6]देशजातिविशेषेण [7]शेषानामपि कारयेत् ।
वेषं तथा चाभरणं क्षुरकर्म परिच्छदम्[8] ॥६७॥
[9]अदेशयुक्तो वेषो हि न शोभां जनयिष्यति ।
मेखलोरसि [10]बद्धा तु हास्यायैवोपजायते ॥६८॥
तथा प्रोषितकान्ता या व्यसनाभिहताश्च याः ।
वेषः स्यान्मलिनस्तासामेकवेणीधरं शिरः ॥६९॥
विप्रलम्भे हि नार्यास्तु शुद्धो वेषो भवेदिह ।
[11]नात्याभरणसंयुक्तो न चापि मृजयान्वितः ॥७०॥
एवं स्त्रीणां [12]भवेद्वेषो देशावस्थासमुद्भवः ।
पुरुषाणां पुनश्चैव वेषान् वक्ष्यामि तत्त्वतः ॥७१॥
तत्राङ्गरचना पूर्वं कर्तव्या नाट्ययोक्तृभिः ।
अतःपरं प्रयोक्तव्या वेषा देशसमुद्भवाः ॥७२॥
सितो नीलश्च पीतश्च चतुर्थो रक्त एव च[13] ।
एते स्वभावजा वर्णा यैः कार्यं त्वङ्गवर्तनम् ॥७३॥
संयोगजा पुनश्चान्ये उपवर्णा भवन्ति हि[14] ।
तानहं संप्रवक्ष्यामि यथा कार्या प्रयोक्तृभिः ॥७४॥

64-74 (C. 65-73; B.XXI. 68b-80a). 1 C. परिगमप्रायां. 2 C. समुद्वृत०. 3 B. आकेशाच्छादनं. 4 B. कुम्भीबन्धक०. 5 BC add गणिकानां तु कर्तव्यमिच्छाविच्छित्तिमण्डनम्. 6 B. देशजातिविधानेन. 7 C. देशानाम्. 8 B. adds a hem. 9 C. अदेशजो हि वेषस्तु. 10 C. बन्धे च. 11 C. नानाभरण. 12 C. प्रयोक्तव्या. 13 C. om. this couplet. 14 *ibid.*

सितनीलसमायोगात् कारण्डव इति स्मृतः ।
[1]सितपीतसमायोगात् पाण्डुवर्णः प्रकीर्तितः ॥७५॥
सितरक्तसमायोगात् पद्मवर्ण इति स्मृत. ।
पीतनीलसमायोगाद्धरितो नाम जायते ॥७६॥
नीलरक्तसमायोगात् कषायो नाम जायते ।
रक्तपीतसमायोगाद् गौर इत्यभिधीयते ॥७७॥
एते संयोगजा वर्णा ह्युपवर्णास्तथापरे ।
त्रिचतुर्वर्णसंयुक्ता बहव. परिकीर्तिताः ॥७८॥
बलस्थो यो भवेद्वर्णस्तस्य भागो भवेत्ततः ।
दुर्बलस्य च भागो द्वौ [2]नीलं मुक्त्वा प्रदापयेत् ॥७९॥
नीलस्यैको भवेद्भागश्चत्वारोऽन्ये तु वर्णके ।
बलवान् सर्ववर्णानां नील एव प्रकीर्तितः ॥८०॥
एव वर्णविधिं ज्ञात्वा [3]नानासंयोगसम्भवम् ।
[4]ततस्तु वर्तना कार्या नानारूपसमाश्रया ॥८१॥
[5]वर्तनाच्छादितं रूपं स्ववेषपरिवर्जितम् ।
[6]नाट्यधर्मप्रवृत्तेन ज्ञेयं तत् प्रकृतिस्थितम् ॥८२॥
[7]स्ववर्णमात्मनश्छा[द्य] [8]वर्णकैर्वेषसंश्रयैः ।
[9]आकृतिस्तस्य कर्तव्या [10]यस्य [11]प्रकृतिरास्थिता ॥८३॥
यथा [12]जन्तुः स्वभावं स्वं परित्यज्यान्यदेहजम् ।
[13]परभावं प्रकुरुते भूतदेहसमाश्रयम् ॥८४॥

75-84 (C. 74-83a ; B.XXI. 80b-90a). 1 C. सितनील०. 2 C. नीलमुक्तं प्रसादयेत्. 3 B. ०संयोगसंश्रयम्. 4 B. तत· कुर्याद्यथायोग्यमङ्गानां वर्तनं बुधै·. 5 B. वर्तनाच्छादनं. 6 B. ०धर्मप्रवृत्त तु. 7 C. स्ववर्णमात्मनश्चान्यं, B. स्ववर्णमात्मनश्छायं. 8 C. वर्णजैः. 9 C. प्रकृतिर्वाऽस्य. 10 C. तस्य· 11 C. प्रकृतिमास्थिता. 12 C. नरः. 13 C. पराभवं, B. तत्स्वभावं हि भजते देहान्तरमुपाश्रितः.

वर्णकैश्चैव वेषैश्च च्छादितः पुरुषस्तथा ।
[1]परभावं प्रकुरुते यस्य [2]वेषं समाश्रितः ॥८५॥
देवदानवगन्धर्वयक्षराक्षसपन्नगाः ।
[3]ते प्राणिन इति प्रोक्ता जीवबन्धाश्च ये त्विह[4] ॥८६॥
शैलप्रासादयन्त्राणि चर्मवर्मध्वजास्तथा ।
नानाप्रहरणाद्याश्च तेऽप्राणिन इति स्मृताः ॥८७॥
अथवा कारणोपेता भवन्त्येते शरीरिणः ।
वेषभाषाश्रयोपेता नाट्यधर्ममवेक्ष्य तु ॥८८॥
वर्णानां तु विधिं ज्ञात्वा वयः प्रकृतिमेव च ।
कुर्यादङ्गस्य रचनां देशजातिवयःश्रिताम् ॥८९॥
देवा गौरास्तु कर्तव्या यक्षाश्चाप्सरसस्तथा ।
[5]रुद्रार्कद्रुहिणस्कन्दास्तपनीयसमप्रभाः ॥९०॥
सोमो बृहस्पतिः [6][श]क्रो [7]वरुणस्तारकागणः ।
समुद्रो हिमवान् गङ्गा श्वेता [8]कार्यास्तु वर्णतः ॥९१॥
* रक्तमङ्गारकं विद्यात् पीतौ बुधहुताशनौ ।
नारायणो नरश्चैव [9]श्यामो नागश्च वासुकिः ॥९२॥
दैत्याश्च दानवाश्चैव राक्षसा गुह्यका नगाः ।
पिशाचा [10]यम आकाशं श्यामवर्णास्तु वर्णतः ॥९३॥
नानावर्णाः स्मृता यक्षा गन्धर्वा भूतपन्नगाः ।
विद्याधराः सपितरो वानराश्च तथैव हि[11] ॥९४॥

85-94 (C. 83b-94a; B.XXI. 90b-100a). 1 C. परप्रभावं कुरुते. 2 C. वेषमभ्याश्रयम्. 3 B. प्राणिसंज्ञाः स्मृता ह्येते जीवबन्धाश्च येऽपरे. 4 B. C. add one couplet. 5 C. रुद्राःस्कन्द्रुहिण॰. 6 Mss. शुक्रो. 7 Bj. वरुणोऽथ शिवस्तथा, Bn. वरुणोऽथेन्द्र एव च 8 B. हि स्युर्बलस्तथा. 9 B. श्यामवर्णोऽथ 10 B. जलमाकाशमसितानि. 11 B. om. this couplet.

[1]भवन्ति षट्सु द्वीपेषु [2]ये नरा वर्णतस्तु ते ।
कर्तव्या नाट्यतत्त्वज्ञैर्निष्टप्तकनकप्रभाः ॥९५॥
जम्बुद्वीपस्य वर्षेषु नानावर्णाश्रया नराः ।
[3]उत्तरांस्तु कुरूंस्त्यक्त्वा ते चापि कनकप्रभाः ॥९६॥
[4]भद्राश्वे पुरुषाः श्वेताः कर्तव्या वर्णतो बुधैः ।
[5]केतुमाले नरा नीला गौराः शेषेषु कीर्तिताः ॥९७॥
नानावर्णाः स्मृता भूता [6]वामना विकृताननाः ।
[7]वराहमेषमहिषमृगवक्त्रास्तथैव च ॥९८॥
पुनश्च भारते वर्षे तांस्तान् वर्णान् निबोधत ।
राजानः पद्मवर्णाः स्युः श्यामा गौरास्तथैव च ॥९९॥
ये चापि सुखिनो मर्त्या गौराः कार्यास्तु ते बुधैः ।
[8]कुकर्मिणो ग्रहग्रस्ता व्याधितास्तपसि स्थिताः ॥१००॥
[9]आयस्तकर्मिणश्चैव ह्यसिताश्च कुजातयः ।
ऋषयश्चैव कर्तव्या नित्यं तु बदरप्रभाः ॥१०१॥
तपःस्थिताश्च ऋषयो नित्यमेवासिता बुधैः ।
कारणव्यपदेशेन तथा चात्मेच्छया पुनः ॥१०२॥
[10]वर्णस्त्वन्यः प्रयोक्तव्यो देशजातिवयःश्रित ।
देशं कर्म च जातिं च पृथिव्युद्देशमेव च ॥१०३॥
विज्ञाय वर्तनां कुर्यात् पुरुषाणां प्रयोगवित् ।
किरातबर्बरान्ध्राश्च [11]द्रमिलाः काशिकोसलाः ॥१०४॥

95-104 (C. 94b-102a, B.XXI. 100b-110a). 1 C. वसन्ति सप्तद्वीपेषु. 2 B. पुरुषाश्चैव वर्णत. 3 B.bh उत्तराः कुरवो ये च. 4 B. भद्राश्वपुरुषा, C. भद्राश्च वपुषा, Bn. भद्राश्वे. 5 C. केतुमालास्तथाश्वेता. 6 B. गन्धर्वा यक्षपन्नगा. 7 B. विद्याधरास्तथा चैव पितरस्तु समा नरा:. Bj-b. read this 8 C. om 102b-103a 9 K. आयस्तकर्मिणः. 10 B. वर्णस्तत्र प्रकर्तव्यो. 11 B. द्रविडाः.

पुलिन्दा दाक्षिणात्याश्च प्रायेण त्वसिता स्मृताः ।
शकाश्च यवनाश्चैव [1]पह्नवा वाह्लिकादयः ॥१०५॥
प्रायेण गौरा· कर्तव्या उत्तरां ये श्रिता दिशम् ।
पाञ्चालाः [2]शूरसेनाश्च [3]तथा चैवौड्रमागधाः ॥१०६॥
अङ्गा वङ्गा कलिङ्गास्तु श्यामाः कार्यास्तु वर्णतः ।
ब्राह्मणाः क्षत्रियाश्चैव [4]गौरा· कार्याः सदैव हि ॥१०७॥
वैश्याः शूद्रास्तथा चैव श्यामाः कार्यास्तु वर्णतः ।
एवं कृत्वा यथान्यायं मुखाङ्गोपाङ्गवर्तनम् ॥१०८॥
श्मश्रुकर्म प्रयुञ्जीत [5]देशकर्मक्रियानुगम् ।
[6]शुद्धं श्यामं विचित्रं च तथा रोमशमेव च ॥१०९॥
चतुर्विधं भवेच्छ्मश्रु नानावस्थान्तराश्रयम् ।
शुद्धं तु लिङ्गिनां कार्यं तथामात्यपुरोधसाम् ॥११०॥
मध्यस्था ये च पुरुषा ये च दीक्षां समाश्रिताः ।
दिव्या ये पुरुषाः केचित् सिद्धविद्याधरादयः ॥१११॥
[7]पार्थिवाश्च कुमाराश्च ये च राजोपजीविनः ।
शृङ्गारिणश्च ये मर्त्या यौवनोन्मादिनश्च ये ।११२॥
तेषां विचित्रं कर्तव्यं श्मश्रु नाट्यप्रयोक्तृभिः ।
अनिस्तीर्णप्रतिज्ञानां दुःखितानां तपस्विनाम् ॥११३॥
व्यसनाभिहतानां च श्यामं श्मश्रु भवेत्तदा ।
ऋषीणां तापसानां च ये च दीर्घव्रता नरा ॥११४॥

105-114 (C. 102b-112a; B. XXI 110b-120a). 1 C. पल्लवा वह्लिकादयः, Bb. वह्निका वाहिकास्तथा, B. पह्नवा वाह्लिकाश्च ये. 2 B. शौरसेनाश्च. 3 B. माहिषाश्चोड्र०. 4 C. रक्ता 5 B. देशकालवयो०. 6 C. शुक्लं. 7 C. नृपतीनां कुमाराणा.

[1]तथा च वैरवद्धानां रोमशस्तु विधीयते ।
एवं नानाप्रकारं तु श्मश्रुकर्म प्रयोजयेत् ॥११५॥
अत ऊर्ध्वं प्रवक्ष्यामि वेषान्नानाप्रयोगजान् ।
* आच्छादनं बहुविधं [2]नानापत्तनसम्भवम् ॥११६॥
* ज्ञेयं तत् त्रिप्रकारं तु शुद्धं रक्तं विचित्रकम्[3] ।
शुद्धो विचित्रो मलिनस्त्रिविधो वेष उच्यते ॥११७॥
तेषां [4]विभागं व्याख्यास्ये यथाकार्यं प्रयोक्तृभिः ।
देवाभिगमने चैव माङ्गल्ये नियमस्थिते ॥११८॥
तिथिनक्षत्रयोगे च विवाहकरणे तथा ।
धर्मप्रवृत्तं यत्कार्यं स्त्रीणां च पुरुषस्य वा ॥११९॥
[5]वेषस्तेषां भवेच्छुद्धो ये च [6]शायलिका नराः ।
देवदानवयक्षाणां गन्धर्वोरगरक्षसाम् ॥१२०॥
नृपाणां [7]कर्कशानां च चित्रो वेषो भवेत्तदा ।
[8]वृद्धानां ब्राह्मणानां च श्रेष्ठ्यमात्यपुरोधसाम् ॥१२१॥
[9]वणिजां काञ्चुकीयानां तथा चैव तपस्विनाम् ।
विप्रक्षत्रियवैश्यानां स्थानीया ये च मानवाः ॥१२२॥
शुद्धो वस्त्रविधिस्तेषां कर्तव्यो नाट्यसंश्रयः ।
उन्मत्तानां प्रमत्तानां जनानामध्वगामिनाम् ॥१२३॥
व्यसनोपगतानां च मलिनो वेष इष्यते ।
[10]शुक्लरक्तविचित्राणि वासांस्यूर्ध्वाम्बराणि च ॥१२४॥

115-124 (C. 112b-122 ; B XXI. 120b-129a). 1 Bp. तथा च वैरबद्धानां, B. चीरबद्धाना C. सिद्धविद्याधराणा. 2 B. (51b) नानापत्तन, C. नानावर्तन. 3 See B 51b-52a. 4 B. नियोगं. 5 C. वेषस्तत्र. 6 C. शापनिका, B. शायनिका. 7 Bp. कानुराना. 8 C. om this hem. 9 C. कञ्चुकीनाममात्याना श्रेष्टीना पुररोधसाम् । सिद्धविद्याधराणा च .वरिष्ठशास्त्रविदामपि. 10 C. om. this hem.

योजयेत्तात्त्वतत्त्वज्ञो वेषयोः शुद्धचित्रयोः ।
कुर्याद्वेषं तु मलिने मलिनं तु विचक्षणः[1] ॥१२५॥
मुनिनिर्ग्रन्थशाक्येषु [2]यतिपाशुपतेषु च ।
[3]वृत्तानुगस्तु कर्तव्यो वेषो [4]लोकानुभावतः ॥१२६॥
[5]चीरवल्कलचर्माणि तापसानां तु कारयेत् ।
[6]परिव्राण्मुनिशाक्यानां वासः काषायमिष्यते ॥१२७॥
नानाचित्राणि [7]वासांसि कुर्यात् पाशुपतेष्वथ ।
[8]कुलातयश्च ये प्रोक्तास्तेषां चापि यथोचितम् ॥१२८॥
अन्तःपुरस्य रक्षार्थं विनियुक्ता हि ये नराः ।
काषायकञ्चुकपटाः कार्यास्त्वेऽपि यथाविधि ॥१२९॥
अवस्थान्तरमासाद्य [9]स्त्रीणां वेषो भवेत्तथा ।
वेषः साङ्ग्रामिकश्चैव शूराणां संप्रकीर्तितः ॥१३०॥
विचित्रशस्त्रकवचो [10]बद्धतूणो धनुर्धरः ।
चित्रो वेषस्तु कर्तव्यो नृपाणां नित्यमेव च ॥१३१॥
केवलस्तु भवेच्छुद्धो नक्षत्रोत्पातमङ्गले ।
एवमेव भवेद्वेषो [11]देशजातिवयोऽनुगः ॥१३२॥
उत्तमाधममध्यानां स्त्रीणां नृणामथापि च ।
एवं वस्त्रविधिः कार्यः प्रयोगे नाटकाश्रये ॥१३३॥
नानावस्थां समासाद्य शुभाशुभकृतस्तथा ।
तथा प्रतिशिरश्चापि कर्तव्यं नाटकाश्रयम् ॥१३४॥
देवानां मानुषाणां च देशजातिवयःश्रितम् ।
पार्श्वागता मस्तकिनस्तथा चैव किरीटिनः ॥१३५॥

125-135 (C. 123-133a, B XXI. 129b-140a). 1 C. om. this couplet. 2 C. त्रिदण्डीश्रोत्रियेषु०. 3 B. व्रतानुग०. 4 Bd. लोकानुभावत., C. ०लङ्कारभावत 5 C. om. this hem. 6 C. ०मुनिमुख्येषु तापसेषु तथैव च। काषायवसनो वेष कार्यस्त्वर्थवशानुगः. 7 C. कार्याणि. 8 C. कुलजाश्चैव. 9 B. नृणा. 10 C. बद्धत्राणो. 11 B. वयोजातिगुणान्वित.

[1]त्रिविधा मुकुटा ज्ञेया दिव्यपार्थिवसंश्रयाः ।
देवगन्धर्वयक्षाणां पन्नगानां सरक्षसाम् ॥१३६॥
कर्तव्या नैकविहिता मुकुटा [2]पार्श्वमौलिनः ।
उत्तमा ये च दिव्यानां तेषां कार्या किरीटिनः ॥१३७॥
मध्यमा मौलिनश्चैव कनिष्ठा [3]पार्श्वमौलिनः ।
नराधिपानां कर्तव्या[4]स्तथा मस्तकिनो बुधैः ॥१३८॥
विद्याधराणां सिद्धानां चारणानां तथैव च ।
[5]ग्रन्थिमत्केशमुकुटः कर्तव्यस्तु प्रयोक्तृभिः ॥१३९॥
रक्षोदानवदानव दैत्यानां [6]पिङ्गकेशेक्षणानि हि ।
[7]हरिश्मश्रूणि च तथा [8]मुकुटास्यानि कारयेत् ॥१४०॥
[9]उत्तमाश्चापि ये तत्र कार्यास्ते पार्श्वमौलिन ।
[10]कस्मात्तु मुकुटाः श्लिष्टाः[11] प्रयोगे दिव्यपार्थिवे ॥१४१॥
केशानां छेदनं दृष्ट[12] वेदवादे यथाश्रुति ।
भद्रीकृतस्य या यत्ने शिरसश्छादनेऽस्तया ॥१४२॥
केशानां [13]नातिदीर्घत्वात् स्मृतं मुकुटधारणम् ।
अमात्यानां कञ्चुकिनां तथा श्रेष्ठिपुरोधसाम् ॥१४३॥
[14]वेष्टनाबद्धपट्टानि प्रतिशीर्षाणि कारयेत् ।
सेनापते पुनश्चापि युवराजस्य चैव हि ॥१४४॥
[15]योजयेदर्धमुकुटं महामात्र [स्य च तथा ] ।
पिशाचोन्मत्तभूतानां साधकानां तपस्विनाम् ॥१४५॥

136-145 ( C. 133b-135, 143, 136-140, 144a ; B.XXI. 140b-150a ), 1 B त्रिविधोमकुटो ज्ञेयो K. त्रिविधा मुकुटा. C. om 137-138. 2 K. पार्पमौलिन., B. पार्श्वमौलयः. 3 BC. शीर्षमौलिनः. 4 B. मस्तके मकुटा बुधैः. 5 C. ग्रन्थितः. 6 C. पिंककेशाङ्कतानि 7 B हरिच्छ्मश्रूणि. 8 C. मुखशीर्षाणि. 9 C. उदात्ताश्चापि 10 C. तस्मात्तु , 11 B. सृष्टाः 12 C. नेष्ट. 13 B. अप्यदीर्घत्वात्. 14 C. वेष्टनाबद्ध-पट्टादि. 15 C. मस्तकेष्वर्धमुकुट प्रयोगे सम्प्रयोजयेत् , B. योजयेदर्धमुकुटं महामात्राश्च ये नरा .

अनिस्तीर्णप्रतिज्ञानां लम्बकेशं तु शीर्षकम् ।
शाक्यश्रोत्रियनिर्ग्रन्थपरिव्राड्दीक्षितेषु च ॥१४६॥
शिरो मुण्डं तु कर्तव्यं यज्ञदीक्षान्वितेषु च ।
तथा [1]वृत्तानुषङ्गेण शेषाणां लिङ्गिनां शिरः ॥१४७॥
मुण्डं वा कुञ्चितं वापि लम्बकेशमथापि वा ।
[2]धूर्तानां चापि कर्तव्यं ये च [3]राज्युपजीविनः ॥१४८॥
ये च शृङ्गारिणस्तेषां शिरः कुञ्चितमूर्धजम् ।
[4]बालानामपि कर्तव्यं त्रिशिखण्डविभूषितम् ॥१४९॥
[4]जटामुकुटबद्धं च मुनीनां तु भवेच्छिरः ।
चेटानामपि कर्तव्यं त्रिशिखं मुण्डमेव वा ॥१५०॥
विदूषकस्य [5]खलतिः स्यात् काकपदमेव वा ।
[6]शेषाणामर्थयोगेन देशजातिसमाश्रितम् ॥१५१॥
शिरः प्रयोक्तृभिः कार्यं नानावस्थान्तराश्रयम् ।

एवं [7]नानाप्रकारैस्तु बुद्ध्वा [8]चैषां विभज्य च ॥१५२॥
[9]भूषणैर्वर्णकैर्वस्त्रैर्माल्यैश्चैव यथाविधि ।
[10]अवस्थानुकृतिः साध्या प्रयोगरससम्भवा ॥१५३॥
स्त्रीणां वा पुरुषाणां वाप्यवस्थां प्राप्य तादृशीम् ।
सर्वे भावाश्च दिव्यानां कार्या मानुषसंश्रयाः ॥१५४॥

146-154 (C. 144b-150; B.XXI. 150b-159a). 1 B. व्रतानुगं वड़. 2 C. वधूनां. 3 C. राजोपजीविनः. 4 C. om. 149b-150a. 5 C. कर्तव्यं खल्लि काकपदं तथा. 6 C. om. 152b-153a. 7 C. नानाप्रकारेण, B. नानाप्रकारैस्तु, 8 B. वेषान् प्रकल्पयेत्. 9 C. अतस्तैर्भूषणैश्चित्रैर्वर्णैर्माल्यैरथापि. 10 C. अवस्थान्य कृतिः B. पूर्वं तु प्रकृतिं स्थाप्य प्रयोगगुणसंभवाम्; we with Bd.

तेषां चानिमिषत्वादि नैव कार्यं प्रयोक्तृभिः[1] ।
इह भावरसाश्चैव दृष्टिभिः संप्रतिष्ठिताः ॥१५५॥
दृष्ट्वैव स्थापितो ह्यर्थः पश्चादङ्गैर्विभाव्यते[1] ।
एवं ज्ञेयाऽङ्गरचना नानाप्रकृतिसम्भवा ॥१५६॥
सञ्जीव इति यः प्रोक्तस्तस्य वक्ष्यामि लक्षणम् ।
यः प्राणिनां प्रवेशो वै [2]स सञ्जीव इति स्मृतः ॥१५७॥
चतुष्पदोऽथ द्विपदस्तथाचैवापद. स्मृतः ।
उरगा ह्यपदा ज्ञेया द्विपदाः खगमानुषाः ॥१५८॥
[3]ग्राम्यारण्याश्च पशवो विज्ञेयास्ते चतुष्पदाः ।
[4]ये ते तु [5]युद्धसंफेटे त्ववरोधे तथैव च ॥१५९॥
नानाप्रहरणोपेता. प्रयोज्या नाटके बुधैः ।
आयुधानि च [6]कार्याणि [7]तज्ज्ञैः सम्यक् प्रमाणतः ॥१६०॥
तान्यहं [8]संप्रवक्ष्यामि [9]यथायुक्ति प्रमाणत ।
भिण्डिर्द्वादशताल स्याद् दश कुन्तो भवेदथ ॥१६१॥
अष्टौ शतघ्नी शूलश्च तोमरः शक्तिरेव च ।
अष्टतालं धनुर्ज्ञेयमायामोऽस्य[10] [11]द्विहस्तकः ॥१६२॥
शरो गदा च वज्रं च चतुस्तालो भवेदथ ।
अङ्गुलानि त्वसिः [12]कार्यश्चत्वारिंशत्प्रमाणतः ॥१६३॥
द्वादशाङ्गुलकं चर्म ततोऽर्धं प्रास उच्यते ।
प्रासवत् [13]पट्टिसं विद्याद्दण्ड चैव हि विंशतिः ॥१६४॥

155-164 (C. 151-159a; B XXI. 157-169a). 1 C. om. 156-157a. 2 B. सजीव इति संज्ञितः. 3 B. ग्राम्या आरण्याः पशवो. 4 C. एते. 5 C. युद्धसम्भेदो त्ववरोधैः, B. युद्धसंफेटैस्त्ववरोधै॰. 6 C. वर्माणि. 7 B. C पुरुषाणा Bd. तज्ज्ञै. सम्यक्. 8 B. वर्तयिष्यामि. 9 B. यथापुस्त॰. 10 C. आयामस्तुः. 11 C. द्विहस्ततः. 12 C. कार्यो. 13 B. पट्टसं.

[1]कम्पणं च भवेद्विंशत्यङ्गुलैः परिमाणतः ।
षोडशाङ्गुलिविस्तीर्णं चर्म कार्यं द्विहस्ततः[2] ॥१६५॥
षोडशाङ्गुलिविस्तीर्णं [3]सवाल्यं सप्तघण्टिकम् ।
त्रिंशदङ्गुलमानेन कर्तव्यं खेटकं बुधैः ॥१६६॥
जर्जरो दण्डकाष्ठं च तथैव प्रतिशीर्षकम् ।
छत्रं च चामरं चैव ध्वजो भृङ्गार एव च ॥१६७॥
यत्किञ्चिन्मानुषे लोके द्रव्यं पुंसां [4]प्रयोगजम् ।
[5]तत्सर्वं तूपकरणं [6]नाट्येऽस्मिन् संचिचीयते ॥१६८॥
यद्यस्य विषयप्राप्तं [7]तेनोह्यं तस्य लक्षणम् ।
जर्जरे [8]दण्डकाष्ठे च संप्रवक्ष्यामि लक्षणम् ॥१६९॥
श्वेतभूम्यां तु [9]ये जाताः पुष्यनक्षत्रजास्तथा[10] ।
[11]माहेन्द्रा तु ध्वजा प्रोक्ता लक्षणैर्विश्वकर्मणा ॥१७०॥
[12]तेषामन्यतमं कार्यं जर्जरं दारुकर्मतः ।
अथवा [13]वृक्षजातस्य प्ररोहो वाऽपि जर्जरः ॥१७१॥
वेणुरेव भवेच्छ्रेष्ठस्तस्य वक्ष्यामि लक्षणम् ।
[14]श्वेतभूम्यां च यो जातः पुष्यनक्षत्रजस्तथा ॥१७२॥
[15]संग्राह्यो विधिना वेणुर्जर्जरार्थं प्रयत्नतः ।
स्थूलग्रन्थिर्न कर्तव्यो न शाखी न च कीटवान् ॥१७३॥

165-173 (C 159b-168a, B.XXI 169b-178a) 1 Bp. कम्पण N. कम्पनं, C. क्रणय च, B विंशति· कणयश्चैव अङ्गुलानि प्रमाणतः. 2 B. om. this hem. 3 B. सबल, N सपाल्लं, C. सवाल्यं. 4 B. प्रयोजकम्. 5 B यच्चोपकरणं. 6 B. नाट्ये तत्सप्रकीर्तितम्, C. नान्यस्मिन्. 7 C. तेनोक्त. 8 C. दन्तकाष्ठे 9 B. C. यो जातः पुष्यनक्षत्रजस्तथा 10 B. om. this hem. 11 C. माहेन्द्रे तु ध्वजे कार्यं लक्षणं 12 C. अन्यतमे 13 B. वृक्षयोनिः स्यात्. 14 C.om. 172b-173a.

[1]प्रमाणमङ्गुलानां तु शतमष्टोत्तरं भवेत् ।
पञ्चपर्वा चतुर्ग्रन्थिस्तालमात्रस्तथैव च ॥१७४॥
न [2]कृमिक्षतपर्वा च निहतन्त्वन्यवेणुभिः ।
[3]अक्तं तु मधुसर्पिर्भ्यां माल्यधूपपुरस्कृतम् ॥१७५॥
उपास्य विधिवद्वेणुं गृह्णीयाज्जर्जरं प्रति ।
यो विधिर्यः क्रमश्चैव माहेन्द्रे [4]तु ध्वजे स्मृतः ॥१७६॥
स जर्जरस्य कर्तव्यः [5]पुण्यवेणुसमाश्रयः ।
भवेद्वै दीर्घपर्वा तु [6]तनुपर्वा तथैव च ॥१७७॥
[7]पर्वाग्रमण्डलश्चैव [8]पुण्यवेणुः प्रकीर्तितः ।
विधिरेष मया प्रोक्तो जर्जरस्य तु लक्षणे ॥१७८॥
अत ऊर्ध्वं प्रवक्ष्यामि दण्डकाष्ठस्य लक्षणम् ।
[9]कपित्थविल्वंशेभ्यो दण्डकाष्ठं भवेत्सदा ॥१७९॥
[10]वक्रं चैव हि तत्कार्यं त्रिभागे लक्षणान्वितम् ।
कीटैर्नोपहतं यच्च व्याधिना न च पीडितम् ॥१८०॥
[11]मन्दशाखं भवेद्यच्च दण्डकाष्ठं च तद्भवेत् ।
यस्त्वेभिर्लक्षणैर्हीनं दण्डकाष्ठं सजर्जरम् ॥१८१॥
कारयेत् स त्वपचयं महान्तं प्राप्नुयाद् ध्रुवम् ।
[12]तथा शीर्षविधानार्थं [13]पटी कार्या [14]तु मानतः ॥१८२॥
स्वप्रमाणविनिर्दिष्टा द्वात्रिंशाद्याङ्गुलानि वा ।
[15]विल्वकल्केन कर्तव्या पटी [16]चीरसमाश्रया ॥१८३॥

174-183 (C. 167-177a; B.XXI. 177-187a). 1 C. प्रमाणतोऽङ्गुलाना. 2 C. क्रिमित्त 3 B. मधुमर्पिसर्पपाक्तं 4 C. यो विधि. स्मृतः. 5 B. पुण्यवेणु०. 6 B. तनुपतः. 7 B. पर्वाग्रतरङ्गुलः C. पठानुमरएटलं. 8 B. पुण्यवेणुः. 9 C. कपित्थविल्यंवंशो वा. 10 C चक्रं. 11 C मन्दशालं. 12 B. अथ शीर्षं विभागार्थं. 13 B घटी. 14 B. प्रयत्नतः. 15 B. विल्वमध्येन. 16 B. सिर.

* स्निग्धेन विल्वकल्केन द्रवेण च [1]समागता ।
* मसना वा तुषैर्वापि [2]प्रतिशीर्षाणि कारयेत् ॥१८४॥
* संछाद्यं [3]तु ततो वस्त्रैर्विल्वदिग्धैर्घनाश्रयै [4] ।
विल्वकल्केन चीरं तु [5]दिग्ध्वा संयोजयेत् [6]पटीम् ॥१८५॥
न स्थूलां [7]न च तां तन्वीं न मृद्वीं चैव कारयेत् ।
[8]शुष्कायास्तु ततस्तस्यामनिलातपयोगतः ॥१८६॥
छेद्यं बुधस्तु कुर्वीत विधिदृष्टेन कर्मणा ।
सुतीक्ष्णेन तु शस्त्रेण अर्धार्धं प्रविभज्य च ॥१८७॥
स्वप्रमाणविनिर्दिष्टं [9]ललाटाकृतिकोणकम् ।
[10]अर्धाङ्गुलं ललाटं तु छेद्यं कार्यं षडङ्गुलम् ॥१८८॥
[11]अध्यर्धमङ्गुलं छेद्यं [12]कट्योस्त्र्यङ्गुलं भवेत् ।
कटान्ते [13]कर्णनालस्य [14]छेद्यं ह्यर्धिकमङ्गुलम् ॥१८९॥
त्र्यङ्गुलं [15]कर्णविस्तारं [16]तथास्यं छेद्यमेव ।
[17]ततश्चैवावटुः कार्या [18]सुषमा द्वादशाङ्गुला ॥१९०॥
[19]पटीछेद्यकृतं ह्येतद्विधानं विहितं मया ।
[20]तस्योपरि ततः कार्या मुकुटा [21]विविधाश्रयाः ॥१९१॥
नानारत्नप्रतिच्छन्ना बहुरूपोपशोभिनाः ।
[22]तन्त्रोपकरणानीह [23]नाट्ययुक्तिकृतानि च ॥१९२॥

184–192 ( C. 177b–186a; B.XXI. 187b–196a ). 1 B. समन्विताः. 2 B. प्रतिशीर्षकम्. 3 C. कृतश्चै. 4 B. ०घटाश्रयैः. 5 C दिग्धाङ्गं योजयेत्. 6 B घटीम्. 7 B. नानवा तन्वीं दीर्घां चैव न, C. न तनुं चैव. 8 B. तस्यामातपशुष्काया सुशुष्कायामथापि वा. 9 B. ललाटकृतकोणकम्, C. ०कोणनम्. 10 B. अर्धाङ्गुलं ललाटं, C. अर्धाङ्गुलललाटं. 11 C. अर्धाऽर्धमङ्गुल०, B. अर्धार्धमङ्गुलं. 12 B. कट्योर्दीर्घाङ्गुलं. 13 B. कर्णनालस्य. 14 C. छेद्यन्त्वधिकमङ्गुलम्. 15 B. C. कर्णविवरं. 16 B. तथा स्याच्छेद्यमेव. 17 C ततश्च वावटुः. 18 C. ससमा, B. सुसमा. 19 B. षष्ठ्या ह्येतसदाच्छेद्यं. 20 B. तस्यो- परिगताः. 21 B. बहुविलसजाः. 22 B. तथोप०. 23 B. नाट्ययुक्ति०.

बहुप्रकारयुक्तानि कुर्वीत प्रकृतिं प्रति।
यत्किञ्चिदस्मिन् लोके तु [1]सचराचरसंहिते ॥१९३॥
विहितं कर्म शिल्पं वा तत्पूपकरणं स्मृतम्।
यद्यस्य विषयं [2]प्राप्तं [3]स तस्मिंस्त्वधिगच्छति ॥१९४॥
[4]नान्यतः पुरुषाणां हि [5]नाट्योपकरणाश्रयम्।
यद्येनोत्पादितं कर्म शिल्पयोगः क्रियापि वा ॥१९५॥
तस्य तेन कृता सृष्टिः प्रमाणं लक्षणं तथा।
या [6]कार्ष्णायसभूयिष्ठा कृता [7]सृष्टिर्महात्मना ॥१९६॥
[8]न सास्माकं नाट्ययोगे कस्मात् खेदावहा हि सा।
यद्द्रव्यं जीवलोके तु नानालक्षणलक्षितम् ॥१९७॥
तस्यानुकृतिसंस्थानं नाट्योपकरणं भवेत्।
प्रासादगृहयानानि [9]नानाप्रहरणानि च ॥१९८॥
[10]न शक्यानि तथा कर्तुं यथोक्तानीह लक्षणैः।
लोकधर्मी [11]भवेत्त्वन्या नाट्यधर्मी तथापरा ॥१९९॥
स्वभावो लोकधर्मी तु [12]विभावो नाट्यमेव हि।
[13]आयसं तु न कर्तव्यं नगसारमयं न च ॥२००॥
नाट्योपकरणं [14]तज्ज्ञैर्गुरुत्वात् खेदकृद्धि तत्।
[15]जतुकाष्ठचर्मवस्त्रभाण्डवेणुदलैस्तथा ॥२०१॥

199-201 (C. 185b-195a, B XXI. 195b-205a). 1 C. सचराचरसहिते, B चराचरसमन्विते. 2 C प्राप्यं 3 B. तत्तदेवाभिगच्छति. 4 B. नास्त्यन्त॰, C. नान्यतः. 5 C. नान्योप......श्रयम्, B ॰करणाश्रये. 6 B. काष्ठयन्त्रभूयिष्ठा. 7 C. सृष्टिमहत्तरा. 8 C. नास्माकं सम्मता नाट्ये गुरुत्वात् खेददा हि सा 9 C. नाट्योपकरणानि. 10 B. न शक्यं तानि वै. 11 C. भवेत्त्वन्या. 12 C. नाट्यधर्मा विकारत. 13 B. आयसं न तु कर्तव्यं न तु सारमय. 14 B गुरुखेदकर भवेत्. 15 C. जतु काष्ठं चर्मवस्त्र प्रभावेणु॰. B काष्ठचर्मसु वस्त्रेषु जतुवेणुदलेषु च.

नाट्योपकरणानीह लघुकर्माणि कारयेत् ।
[1]वर्मचर्मध्वजाः शैलाः प्रासादाः [2]शिखरास्तथा ॥२०२॥
हयवारणयानानि विमानानि गृहाणि च[1] ।
पूर्वं वेणुदलैः कृत्वा [3]कृतीर्भावसमाश्रयाः ॥२०३॥
ततः सुरङ्गैराच्छाद्य वस्त्रैः सारूप्यमानयेत् ।
अथवा यदि वस्त्राणां [4]तद्विधानामसम्भवः ॥२०४॥
[5]तालीयैर्वा किलिञ्जैर्वा श्लक्ष्णैर्वस्त्रैः क्रिया भवेत् ।
तथा प्रहरणानि स्युस्तृणवेणुदलादिभिः ॥२०५॥
जतुभाण्डक्रियाभिश्च नानारूपाणि [6]कारयेत् ।
[7]प्रतिपादं प्रतिशिरः [8]प्रतिहस्तं प्रतित्वचम् ॥२०६॥
[9]तृणजैः किलिञ्जैर्भाण्डैः [10]सरूपाणीह कारयेत् ।
यद्यस्य [11]सदृशं रूपं सारूप्यगुणसम्भवम् ॥२०७॥
मृण्मयं [12]तत्र कृत्स्नं तु [13]नानारूपं तु कारयेत् ।
भाण्डवस्त्रमधूच्छिष्टैः लाक्षयाभ्रदलेन च ॥२०८॥
[14]नगास्तु विविधाः कार्याः [15]चर्मवर्मध्वजास्तथा ।
[16]नाना[प्रदेश]जातानि फलानि [17]कुसुमानि च ॥२०९॥
[18]विविधानि च भाण्डानि लाक्षया चेह कारयेत् ।
भाण्डवस्त्रमधूच्छिष्टैः [19]ताम्रपत्रैस्तथैव च ॥२१०॥

202-210 (C. 195b-202a; B XXI. 205b-214a). 1 C. om. 203b-205a. 2 B.K. देवतागृहाः (गृहाः) 3 K. कृतभाव॰. 4 B. असान्निध्यं भवेदिह. 5 C. तालीयजैः कीलजैर्वा. 6 B. नाटके. 7 C. प्रतिपादौ. 8 C. प्रतिहस्तौ. 9 C. तृणजैः कीलजैर्वा. B. तृणैः किलिञ्ज॰. 10 B. सारूप्याणि. 11 C. यादृशं. 12 B. तत्तु. 13 C. नानारूपास्तु. 14 B. नागा॰. 15 B. ध्वजमीरानविस्वजैः. 16 B. C. नानाकुसुम॰. 17 B. विविधानि. 18 B. भाण्ड-वस्त्रैमधूच्छिष्टैः. 19 C. ताम्रवर्णै॰.

[1]सम्यक् च नीलीरागेण [2]सस्यदाकेन चैव हि ।
रञ्जितेनाभ्रपत्रेण [3]मणीश्चैवात्र कारयेत् ॥२११॥
[4]उपाश्रयमथाऽप्येषां शुल्बवङ्गेन कारयेत् ।
विविधा मुकुटा दिव्या पूर्वं ये गदिता मया ॥२१२॥
तेऽभ्रपत्रोज्ज्वलाः कार्या [5]मणिव्यालोकशोभिताः ।
न शास्त्रप्रभवं कर्म तेषां हि समुदाहृतम् ॥२१३॥
[6]आचार्यबुद्ध्या [7]कर्तव्यमूहापोहप्रयोजितम् ।
एवं मर्त्यक्रियायोगो भविष्यन् [8]कथितं मया ॥२१४॥
[9]कस्मादल्पबलत्वं हि मानुषेषु भविष्यति ।
[10]मर्त्यानामल्पशक्तीनां [11]न चातीवाङ्गचेष्टितम् ॥२१५॥
नेष्टाः सुवर्णरत्नैस्तु मुकुटा भूषणानि वा ।
युद्धे नियुद्धे नृत्ते वा [12][धृ]ष्टिव्यापारकर्मणि ॥२१६॥
गुरुभारावसन्नस्य स्वेदो मूर्च्छाऽपि जायते ।
[13]स्वेदमूर्च्छाक्लमार्तस्य प्रयोगस्तु विनश्यति ॥२१७॥
प्राणात्ययः कदाचित्तु भवेद्व्यायतचेष्टनात्[14] ।
तस्मात्ताम्रमयैः [15]पत्रैरभ्रकैः रञ्जितैरपि ॥२१८॥
[16]रक्ताच्छनीलहरिणा अभ्रपत्रेण वेष्टितम् ।
[17]भाण्डैरथ मधूच्छिष्टैः कार्याण्याभरणानि तु ॥२१९॥

211-214 (C. 202-204, B.XXI. 214-216). 1 C. ताम्रवर्णं॰. 2 C. तत्साम्यं नीलरागेण अभ्रपत्रेण चैव हि. we with Bbh. 3 C. भूषाश्चैवात्र. 4 C. उपाश्रयस्तथाप्येषा शुल्बभ्रष्टैर्न 5 B. मणिव्यालोपशोभिता , C. माणिक्यालोकशोभिताः. 6 C. विचार्य. 7 C. कर्तव्यमन्यापोह॰. 8 B. कल्पितो 9 C. यस्मात्. 10 B. अपि नो शक्नया. 11 C. न भवेदङ्गचेष्टितम् , Bj. न चातीवाङ्ग॰. B. विभावा सर्वकाञ्चनाः 12 B. वृष्टिव्यापार, C. दृष्टिव्यापार. 13 C. ॰मूर्च्छाश्रमार्तस्य. 14 B. ॰चेष्टया. 15 C. पत्रैर्मुकुटानीह कारयेत्. 16 C रक्तस्थनीलहारेण, N. रक्तच्छनीलहरिणा । 17 B. भेरुडै॰.

एवं लोकोपचारेण स्वबुद्धिविभवेन वा ।
नाट्योपकरणानीह बुधः सम्यक् प्रयोजयेत् ॥२२०॥
[1]मोक्तव्यं नायुधं [2]रङ्गे न च्छेद्यं न च ताडनम् ।
प्रादेशमात्रं गृह्णीयात् संज्ञार्थं शस्त्रमेव हि ॥२२१॥
[3]शिक्षायोगेन नाट्येऽस्मिन् विद्यामायाकृतेन वा ।
शस्त्रमोक्षस्तु कर्तव्यो रङ्गमध्ये प्रयोक्तृभिः ॥२२२॥
नोक्तानि च मया यानि लोकग्राह्याणि तान्यपि ।
आहार्याभिनयो ह्येव मया प्रोक्तः समासतः ।
अत ऊर्ध्वं प्रवक्ष्यामि सामान्याभिनयं प्रति ॥२२३॥

इति भारतीये नाट्यशास्त्रे आहार्याभिनयो नाम
त्रयोविंशोऽध्यायः ॥

220-223 (C. 211b-215; B.XXI. 223-227). 1 B. न भेद्यं नैव च छेद्यं न प्रहर्तव्यमेव वा. 2 B. रङ्गे प्रहरणैः कार्यं संज्ञामात्रं तु कारयेत्. 3 B. अथवा योगशिक्षाभिर्विद्यामाया०.

## चतुर्विंशोऽध्यायः

सामान्याभिनयो नाम ज्ञेयो वागङ्गसत्त्वजः ।
[1]सत्त्वे कार्यः प्रयत्नस्तु नाट्यं सत्त्वे प्रतिष्ठितम् ॥१॥
सत्त्वातिरिक्तोऽभिनयो ज्येष्ठ इत्यभिधीयते ।
समसत्त्वो भवेन्मध्य सत्त्वहीनोऽधमः स्मृतः ॥२॥
अव्यक्तरूपं सत्त्वं हि [2]विज्ञेयं भावसंश्रयम् ।
यथास्थानरसोपेतं रोमाञ्चास्रादिभिर्गुणैः ॥३॥
अलङ्कारास्तु नाट्यज्ञैर्ज्ञेया [3]भावसमाश्रयाः ।
यौवनेऽभ्यधिकाः स्त्रीणां विकारा वक्त्रगात्रजाः ॥४॥
आदौ त्रयोऽङ्गजास्तेषां[4] दश स्वाभाविकाः परे ।
अयत्नजास्तथा सप्त [5]प्रोक्ता भावोपबृंहिताः ॥५॥
देहात्मकं भवेत् सत्त्वं सत्त्वाद् भावः समुत्थितः ।
भावात् समुत्थितो हावो हावाद्धेला समुत्थिता[6] ॥६॥
भावो हावश्च हेला च परस्परसमुत्थिताः ।
[7]सत्त्वभेदा भवन्त्येते [8]शरीरे प्रकृतिस्थिता[9] ॥७॥
वागङ्गमुखरागैश्च सत्त्वेनाभिनयेन च ।
कवेरन्तर्गतं भावं भावयन् भाव उच्यते ॥८॥
[10]भावस्यातिकृत सत्त्वं व्यतिरिक्तं [11]स्वयोनिषु ।
[12]नैकावस्थान्तरगतं [13]भावं तमिह निर्दिशेत् ॥९॥
तत्राक्षिभ्रूविकाराढ्यः शृङ्गाराकारसूचकः ।
सग्रीवारेचको ज्ञेयो [14]हावः स्थितसमुत्थितः[15] ॥१०॥

1-10 (C. 1-10; B.XXII. 1-10). 1 B. तत्र. 2 C. हि ज्ञेयं भावरसाश्रयम्. 3 B. भावरसाश्रया, Bh. भावसमाश्रयाः, C. नाट्यरसाश्रयाः. 4 C. प्रोक्ता. 5 C. रसभावोपबृंहिता. 6 C. transposes 6 and 7. 7 B. सत्त्वभेदे. 8 C. शरीर॰. 9 See 6 above. 10 C. भावातिरिक्तं सत्त्व हि. 11 C. मयोनिषु. 12 B. ॰न्तरकृतं. 13 C. हावं. 14 C. भाव. 15 C. चित्तसमुत्थितः.

[1]यो वै हावः स एवैषा शृङ्गाररससंश्रया ।
समाख्याता बुधैर्हेला ललिताभिनयात्मिका ॥११॥
लीला विलासो विच्छित्तिर्विभ्रमः[2] किलकिञ्चितम्[3] ।
मोट्टायितं कुट्टमितं बिब्बोको ललितं तथा ॥१२॥
विहृतं चेति विज्ञेया दश स्त्रीणां स्वभावजाः ।
[4]अलङ्कारास्तथैतेषां लक्षणं शृणुत द्विजाः ॥१३॥
वागङ्गालङ्कारैः [5]श्लिष्टैः प्रीतिप्रयोजितैर्मधुरैः ।
इष्टजनस्यानुकृतिर्लीला ज्ञेया प्रयोगज्ञैः ॥१४॥
स्थानासनगमनानां हस्तभ्रूनेत्रकर्मणां चैव ।
उत्पद्यते विशेषो यः श्लिष्टः स तु विलासः स्यात् ॥१५॥
माल्याच्छादनभूषणविलेपनानामनादरन्यासः ।
[6]स्वल्पोऽप्यधिकां शोभां जनयति [7]या सा तु विच्छित्तिः ॥१६॥
विविधानामर्थानां [8]वागङ्गाहार्यसत्त्वयुक्तानाम् ।
मदरागहर्षजनितो व्यत्यासो विभ्रमो [9]नाम ॥१७॥
स्मितरुदितहसित[10]भयरोषमोहदुःखश्रमाभिपङ्गाणाम् ।
सङ्करकरणं हर्षादसकृत् [11]किलकिञ्चितं ज्ञेयम् ॥१८॥
इष्टजनस्य कथायां लीलाहेलादिदर्शनेनापि ।
[12]तद्भावभावनाकृतं मोट्टायितमित्यभिख्यातम् ॥१९॥
[13]केशस्तनाधरादिग्रहणेऽप्यतिहर्षसम्भ्रमोत्पन्नम् ।
कुट्टमितं विज्ञेयं सुखमपि दुःखोपचारेण ॥२०॥
इष्टानां भावानां प्राप्तावभिमानगर्वसम्भूत ।
स्त्रीणामनादरकृतो बिब्बोको नाम विज्ञेयः ॥२१॥

11-21 (C. 11-21 ; B.XXII. 11-21). 1 C. य एव भावः, B. स एवैषा शृङ्गाररससंभवा. 2 C विक्रम. 3 B. किलिकिञ्चितम्. 4 B. पुनरेषां स्वरूपाणि प्रवक्ष्यामि पृथक् पृथक्. 5 B. शिष्टै 6 B. स्वल्पोऽपि परां. 7 B यस्मात्तु 8 B. ०सत्त्वयोगानाम्. 9 B. ज्ञेयः. 10 B भयहर्षगर्वदुःखश्रमाभिलापाणाम्. 11 B. किलि०. 12 B. ०भावनाकृतमुक्तं मोट्टायित नाम 13 B ०ग्रहणादतिहर्ष०.

करचरणाङ्गन्यासः सभ्रूनेत्रौष्ठसंप्रयुक्तस्तु ।
सुकुमारविधानेन स्त्रीभिरितीदं स्मृतं ललितम्[1] ॥२२॥
प्राप्तानामपि [2]वचसां क्रियते यदभाषणं ह्रिया स्त्रीभिः ।
व्याजात् स्वभावतो [3]वाप्येतत् समुदाहृतं विहृतम्[4] ॥२३॥
शोभा कान्तिश्च दीप्तिश्च तथा माधुर्यमेव च ।
धैर्यं प्रागल्भ्यमौदार्यमित्येते स्युरयत्नजाः ॥२४॥
रूपयौवनलावण्यरूपभोगोपबृंहितैः ।
अलङ्करणमङ्गानां [5]यत् सा शोभेति भण्यते ॥२५॥
विज्ञेया च तथा कान्तिः [6]शोभेवापूर्णमन्मथा ।
कान्तिरेवातिविस्तीर्णा दीप्तिरित्यभिधीयते ॥२६॥
सर्वावस्थाविशेषेषु दीप्तेषु ललितेषु च ।
अनुल्बणत्वं चेष्टाया माधुर्यमिति कीर्तितम् ॥२७॥
चापलेनानुपहता सर्वार्थेष्वविकत्थना ।
स्वाभाविकी चित्तवृत्तिर्धैर्यमित्यभिधीयते ॥२८॥
प्रयोगनिःसाध्वसता प्रागल्भ्यं समुदाहृतम् ।
औदार्यं प्रश्रयः प्रोक्तः सर्वावस्थानुगो बुधैः ॥२९॥
[7]सुकुमारा भवन्त्येते प्रयोगे ललितात्मके ।
विलासललिते हित्वा [8]दीप्ता ह्येते भवन्ति हि ॥३०॥
शोभा विलासो माधुर्यं स्थैर्यं गाम्भीर्यमेव च ।
ललितौदार्यतेजांसि सत्त्वभेदास्तु पौरुषाः ॥३१॥
दाक्ष्यं शौर्यमथोत्साहो नीचार्थेषु जुगुप्सनम् ।
उत्तमैश्च गुणैः स्पर्धा [9]यत्र शोभेति सा स्मृता ॥३२॥

22-32 (C. 22-32; B.XXII 21-34) 1 B. 22 reads this in anustup. 2 C. वचनं. 3 B वाप्येवद्. 4 B 23 reads this in anustup. 5 B. शोभेति परिकीर्तिता. 6 C. शोभेर्वा. 7 B. सुकुमारे. 8 B. दीप्ते-ऽप्येते. 9 B. यतः.

[1]स्थिरसञ्चारिणी दृष्टिर्गतिर्गोवृषभाञ्चिता ।
[2]स्मितपूर्वं तथा वाचो विलास इति कीर्तितः ॥३३॥
अभ्यासात् करणानां तु श्लिष्टत्वं यत्र जायते ।
महत्स्वपि विकारेषु तन्माधुर्यमिति स्मृतम् ॥३४॥
धर्मार्थकामसंयुक्ताच्छुभाशुभसमुत्थितात् ।
व्यवसायादचलनं स्थैर्यमित्यभिधीयते ॥३५॥
यस्य प्रभावादाकारा [3]रोषहर्षभयादिषु ।
भावेषु [4]नोपलभ्यन्ते गाम्भीर्यमिति शंसितम् ॥३६॥
अबुद्धिपूर्वकं यत्तु [5]सुकुमारस्वभावजम् ।
शृङ्गाराकारचेष्टत्वं ललितं तत् प्रकीर्तितम् ॥३७॥
दानमभ्युपपत्तिश्च तथा च प्रियभाषणम् ।
स्वजने वा परे वापि तदौदार्यमिति स्मृतम् ॥३८॥
अधिक्षेपावमानादेः प्रयुक्तस्य परेण यत् ।
प्राणात्ययेऽप्यसहनं तत्तेजः समुदाहृतम् ॥३९॥
सत्त्वजोऽभिनयः पूर्वं मया प्रोक्तो द्विजोत्तमाः ।
शारीरं चाप्यभिनयं व्याख्यास्याम्यनुपूर्वशः ॥४०॥
षडात्मकस्तु शारीरो वाक्यं सूचाङ्कुरस्तथा ।
शाखा नाट्यायितं चैव निवृत्त्यङ्कुर एव च ॥४१॥
नानारसार्थयुक्तैर्वृत्तनिबद्धैः [6]पदैः स चूर्णकृतैः ।
[7]प्राकृतसंस्कृतपाठो वाक्याभिनयो बुधैर्ज्ञेयः ॥४२॥
वाक्यार्थो वाक्यं वा सत्त्वाङ्गैः सूच्यते यदा पूर्वम् ।
पश्चाद्वाक्याभिनयः [8]सा सूचा सूरिभिर्ज्ञेया ॥४३॥
[9]हृदयस्थो निर्वचनैरङ्गाभिनयः कृतो निपुणसाध्यः ।
[10]सूचेवोत्पत्तिकृतो विज्ञेयस्त्वङ्कुराभिनयः ॥४४॥

33-44 (C.33-44; B.XXII. 35-46). 1 B. धीर०. 2 C स्मृत०. 3 B. हर्षक्रोध०. 4 B. नोपलक्ष्यन्ते. 5 B. निर्विकार. 6 B. कृतः सचूर्णपदैः, C. सचूर्णकृतैः. 7 C. ०पाठ्यो. 8 B. सूचेत्यभिसञ्ज्ञिता सा तु. 9 B. हृदयस्थो 10 B. सूचेवोत्पत्ति-

यस्तु शिरोमुखजङ्घोरुपाणिपादैर्यथाक्रमं क्रियते ।
¹शाखादर्शितमार्गः शाखाभिनयो ²बुधैर्ज्ञेय ॥४५॥
नाट्यायितमुपचारैर्यत्क्रियतेऽभिनयसूचना नाट्ये ।
कालप्रकर्षहेतोः प्रवेशने सद्ममं यावत् ॥४६॥
स्थाने ध्रुवास्वभिनयोः यः क्रियते हर्षशोपशोकाद्यैः ।
³भावरससंप्रयुक्तो ज्ञेयो नाट्यायितं तच्च ॥४७॥
⁴यस्त्वन्योक्तं वाक्यं सूचाभिनयेन योजयेदन्यः ।
⁵तत्सम्बन्धार्थकृतं निवृत्तमेवाङ्कुरं विद्यात् ॥४८॥
⁶एते मार्गास्तु निर्दिष्टा यथाभावरसान्विताः ।
काव्यवस्तुषु निर्दिष्टा द्वादशाभिनयात्मका ॥४९॥
आलापश्च प्रलापश्च विलापोऽन्यस्तथैव च ।
अनुलापोऽथ संलापो ह्यपलापस्तथैव च ॥५०॥
सन्देशश्चातिदेशश्च निर्देशश्च तथैव च ।
⁷उपदेशोऽपदेशश्च च व्यपदेशस्तथैव च ॥५१॥
आभाषणे तु यद्वाक्यमालापो नाम स स्मृतः ।
अनर्थकं वचो यच्च प्रलापः स तु संज्ञितः ॥५२॥
करुणप्रभवो यस्तु विलाप इति स स्मृतः ।
बहुशोऽभिहितं वाक्यमनुलापः प्रकीर्तितः ॥५३॥
उक्तिप्रत्युक्तिसंयुक्त संलाप इति स स्मृत ।
⁸पूर्वोक्तस्यान्यथाभावो ह्यपलाप इति स्मृतः ॥५४॥
तदिदं वचनं ब्रूहीत्येष सन्देश इष्यते ।
अतिदेशस्त्वयोक्तं तन्मयोक्तमिति स स्मृतः ॥५५॥

45-55 (C. 45-55); B.XXII. 47-57) 1 B. शाखादर्शन. 2 B. म विज्ञेयः. 3 B. भावरससंप्रयुक्तः 4 B. यत्रा. 5 B. तत्सम्बन्धार्थ कर्थ भावनिष्कृत्यङ्कुरः सोऽयं. 6 B. एतेषां तु भवेत् मार्ग. etc 7 C. व्यपदेशोशदेशो च अपदेश०. 8 B अन्यथावादो०.

स [1]एषोऽहं ब्रवीमिति निर्देशः स तु संज्ञितः।
व्याजान्तरेण कथनं व्यपदेशो भवेत्तु सः ॥५६॥
इदं कुरु गृहाणेदमुपदेश इति स्मृतः।
अन्यार्थकथनं यत्तु सोऽपदेश इति स्मृतः[2] ॥५७॥
एते मार्गा हि विज्ञेया [3]वाक्याभिनययोजकाः।
सप्तप्रकारमेतेषां पुनर्वक्ष्यामि लक्षणम् ॥५८॥
प्रत्यक्षश्च परोक्षश्च तथा कालकृतास्त्रयः।
आत्मस्थश्च परस्थश्च प्रकाराः सप्त चैव तु ॥५९॥
एष [5]ब्रवीति नाहं भो वदामिति च यद्वचः।
प्रत्यक्षश्च परस्थश्च वर्तमानश्च तद्भवेत् ॥६०॥
अहं करोमि गच्छामि वदामि वचनं तव।
आत्मस्थो वर्तमानश्च प्रत्यक्षश्चैव स स्मृतः ॥६१॥
करिष्यामि गमिष्यामि वदिष्यामिति यद्वच।
आत्मस्थश्च परोक्षश्च भविष्यत्काल एव च ॥६२॥
हता जिताश्च भग्नाश्च मया सर्वे द्विषद्गणाः।
आत्मस्थश्च परस्थश्च वृत्तकालस्तु स स्मृतः ॥६३॥
त्वया हता जिताश्चेति यो वदेन्नाट्यकर्मणि।
परोक्षश्च परस्थश्च वृत्तकालस्तथैव च ॥६४॥
एष [6]ब्रवीति कुरुते गच्छतीत्यादि यद्वचः।
परस्थो वर्तमानश्च प्रत्यक्षश्च भवेत्तु या ॥६५॥
स गच्छति करोतीति वचनं यदुदाहृतम्।
परस्थो वर्तमानश्च परोक्षश्चैव तद् भवेत् ॥६६॥
करिष्यन्ति गमिष्यन्ति वदिष्यन्तीति यद्वचः।
परस्थश्च भविष्यश्च परोक्षश्चैव तद् भवेद् ॥६७॥

56-67 (C. 56-63; XXII. 58-69). 1 C. एकोऽहं. 2 C. om. this hem. 3 B. सर्वाभिनय. 4 C. om. 65-67. 5 B. ब्रवीमि. 6 Mss. ब्रवीमि.

ममाद्यैव च सम्पाद्यं तत्कार्यं भवता सह ।
आत्मस्थश्च परस्थश्च वर्तमानश्च स स्तनः[1] ॥६८॥
[2]हस्तमन्तरितं कृत्वा यद्वदेन्नाट्यकर्मणि ।
आत्मस्थं हृदयस्थं च परोक्षं चैव तन्मतम् ॥६९॥
परेषामात्मनश्चैव कालस्यैव विशेषणात् ।
[3]सतप्रकारस्यास्यैव भेदा ज्ञेया अनेकधाः ॥७०॥
एते [4]प्रयोक्तृभिर्ज्ञेया मार्गा ह्यभिनये स्मृताः ।
[5]एभिरेव विनिष्पन्नो विविधोऽभिनयो मतः ॥७१॥
[6]शिरोवदनपादोरुजङ्घोदरकटीकृत ।
[7]समः कर्मविभागो यः सामान्याभिनयस्तु सः ॥७२॥
ललितैर्हस्तसञ्चारैस्तथा मृद्वङ्गचेष्टितैः ।
अभिनेयस्तु नाट्यज्ञै रसभावसमन्वितैः ॥७३॥
अनुद्धतमसंभ्रान्तमनाविद्धाङ्गचेष्टितम्[8] ।
[9]लयतालकलापातप्रमाणनियतात्मकम्[10] ॥७४॥
[11]सुविभक्तपदालापमनिष्ठुरमनाकुलम्[12] ।
यदीदृशं भवेन्नाट्यं ज्ञेयमाभ्यन्तरं तु तत् ॥७५॥
एतदेव विपर्यस्तं स्वच्छन्दगतिचेष्टितम् ।
[13]अनिबद्धं गीतवाद्यैर्नाट्यं बाह्यमिति स्मृतम् ॥७६॥
लक्षणाभ्यन्तरत्वाद्धि तदाभ्यन्तरमिष्यते ।
शास्त्रबाह्यं भवेद्यस्तु तद्बाह्यमिति संज्ञितम् ॥७७॥

68-77 ( C. 64-76 ; B.XXII. 70-78 ). 1 B. om. this couplet. 2 B. अन्तरत॰. 3 B. सप्तप्रकारस्यास्यैव. 4 B. प्रयोगा विशेषा मार्गाभिनययोजिताः. 5. B. एतेष्विह. 6 B. शिरोहस्तकटी कटीवक्षो जङ्घोरुकरपादेषु च तु. 7 C. समकर्म॰. 8 C. ॰चेष्टितैः. 9 C. कलापादि॰. 10 B. ॰यतात्मकम्. 11 C. सुविभक्तकथालाप॰. 12 B. ॰निष्ठुरमनाहलम्. 13 B. अनिबद्धगीतवाद्यं.

अनेन लक्ष्यते यस्माद् प्रयोगः कर्म चैव हि ।
तस्माल्लक्षणमेतद्धि नाट्ये[1]ऽस्मिन्न् संप्रजितम् ॥७८॥
[2]अनाचार्योषिता ये च ये च शास्त्रबहिष्कृताः ।
बाह्यं ते तु [3]प्रयोक्ष्यन्ते [4]क्रियामन्यैः प्रयोजिताम् ॥७९॥
शब्दं स्पर्शं च रूपं च रसं गन्धं तथैव च ।
[5]इन्द्रियाणीन्द्रियार्थैश्च भावैरभिनयेद् बुधः ॥८०॥
कृत्वा साचीकृतां दृष्टिं शिरः [6]पार्श्वानतं तथा ।
तर्जनीं कर्णदेशे तु शब्दं त्वभिनयेद् बुधः ॥८१॥
किञ्चिदाकुञ्चिते नेत्रे [7]भ्रुवोरुत्क्षेपणेन च ।
[8]तथांसगण्डयोः स्पर्शात् स्पर्शमेवं विनिर्दिशेत् ॥८२॥
कृत्वा [9]पताकौ मूर्धिस्थौ किञ्चित् प्रचलिताङ्गुलिः[10] ।
निर्वर्णयन्त्या दृष्ट्या तु रूपं त्वभिनयेद् बुधः ॥८३॥
किञ्चिदाकुञ्चिते नेत्रे कृत्वोत्फुल्लां च नासिकाम् ।
[11]एकोच्छ्वासेन दृष्टेष्टौ रसगन्धौ विनिर्दिशेत् ॥८४॥
[12]पञ्चानामिन्द्रियाणां च भावा ह्येतेऽनुभावजाः[13] ।
त्वक्चक्षुर्घ्राणजिह्वानां श्रोत्रस्य च तथैव च ॥८५॥
[14]इन्द्रियार्थश्च मनसा भाव्यते ह्यनुभावित ।
न वेत्ति ह्यमनाः किञ्चिद्विषयं [15]पञ्चहेतुकम् ॥८६॥
मनसस्त्रिविधो भावो विज्ञेयोऽभिनयं प्रति ।
इष्टोऽनिष्टस्तथा चैव मध्यस्थश्च तथैव च ॥८७॥

78-87 (C. 74-83; B.XXII. 79-88). 1 C. तस्मिन्नियोजितम्. 2 C. अनाचार्योदिता. 3 B. प्रयुषते. 4 C. क्रियामन्त्रैः प्रयोजितम्. B) क्रिया-मन्येः प्रयोजिताम्. B• अज्ञात्वाचार्यकां क्रियाम्. 5 C. इन्द्रियैरिन्द्रिया॰, B. इन्द्रियार्थान्द्रियार्थैश्च. 6 B. पार्श्वनतं. 7 B. कृत्वा भ्रूक्षेपमेव. 8 C. तथाङ्ग॰. 9 B. पताकौ मूर्धस्थौ, C. पताके मूर्ध्निस्थे. 10 B. ॰प्रचलितानन. 11 C. एकोल्लासेन हृष्टेष्टौ, B. एकोच्छ्वासेन चैष्टौ तु. 12 ॰मिन्द्रियार्थाना. 13 B. ॰नुभाविनः. 14 B. इन्द्रियार्थाः समनसो भवन्ति अनुभाविन॰. 15 B पञ्चधागतम्.

[1]प्रह्लादनेन गात्रस्य तथा पुलकितेन च ।
[2]आननप्रक्रियाभिश्च सर्वमिष्टं निरूपयेत् ॥८८॥
इष्टे शब्दे यथा रूपे स्पर्शे गन्धे रसेऽपि वा ।
इन्द्रियैर्मनसा प्राप्तैः सौमुख्यं संप्रदर्शयेत् ॥८९॥
परावृत्तेन शिरसाऽप्रदानेन च चक्षुषः ।
[3]नेत्रनासाञ्चिततया ह्यनिष्टमभिनिर्दिशेत् ॥९०॥
[4]न चातिमात्रहृष्टस्तु न चात्यन्तजुगुप्सया ।
मध्यस्थेनैव भावेन मध्यस्थमभिनिर्दिशेत् ॥९१॥
तेनेदं तस्य वापीदं स [5]एव प्रकरोति वा ।
परोक्षाभिनयो यस्तु मध्यस्थ इति स स्मृतः ॥९२॥
आत्मानुभावी योऽर्थः स्यात् स आत्मस्थ इति स्मृतः
[6]परस्य वर्णनीयश्च परस्थ[7] स तु संज्ञितः ॥९३॥
प्रायेण सर्वभावानां कामान्निष्पत्तिरिष्यते ।
स चेच्छागुणसम्पन्नो बहुधा [8]काम इष्यते ॥९४॥
धर्मकामोऽर्थकामश्च मोक्षकामस्तथैव च ।
[8]स्त्रीपुंसयोस्तु योगो यः स तु कामः इति स्मृतः ॥९५॥
[9]सर्वस्यैव हि लोकस्य सुखदुःखनिबर्हणः ।
भूयिष्ठं दृश्यते कामः सुखदो दुःखदेष्वपि[10] ॥९६॥
यः स्त्रीपुरुषसंयोगो रतिसंयोगकारकः ।
स शृङ्गार इति ज्ञेय उपचारकृतः [11]सुखः ॥९७॥
इह प्रायेण लोकोऽयं [12]सुखमिच्छति नित्यशः ।
सुखस्य च स्त्रियो मूलं नानाशीलाश्च ताः पुनः ॥९८॥

88-98 (C. 84-93; B.XXII. 89 99). 1 C. गात्र प्रह्लादनेनेह. 2 B. वदनस्य विकासेन. 3 B. नेत्रनासाविकर्षणैः C. नेत्रनासाश्रिततया. 4 B. नातिहृष्टेन मनसा. 5 B. एव. 6 B परार्थवर्णना यत्र 7 B. परिकल्पितः. 8 C. स्त्रीपुंसयोस्तु संयोगो य कामः स तु मस्मृत 9 C. om. this couplet. 10 B. स सुख वतमनेष्वपि. 11 M. सुखः, B.C. शुभ. 12 C. शुभ॰.

देवतासुरगन्धर्वरक्षोनागपतत्त्रिणाम् ।
पिशाचयक्षव्यालानां नरवानरहस्तिनाम् ॥९९॥
मृगमीनोष्ट्रमकरखरसूकरवाजिनाम् ।
[1]महिषाज-[श्व-]गवा-[श्च] तुल्यशीलाः स्त्रियः स्मृता ॥१००॥
[2]स्निग्धा चाङ्गैरपाङ्गैश्च [3]स्थिरा मन्दनिमेषिणी ।
अरोगा दीप्त्युपेता च [4]दानसत्यार्जवान्विता ॥१०१॥
अल्पस्वेदा समरता स्वल्पभुक् [5]सुरभिप्रिया ।
[6]गान्धर्ववाद्याभिरता हृद्या देवाङ्गना स्मृता ॥१०२॥
अधर्मशाठ्याभिरता स्थिरक्रोधाऽतिनिष्ठुरा ।
मद्यमांसप्रिया नित्यं कोपना चातिमानिनी ॥१०३॥
चपला चातिलुब्धा च परुषा कलहप्रिया ।
ईर्ष्याशीला चलस्नेहा चासुरं शीलमाश्रिता ॥१०४॥
[7]अनेकारामभोग्या च नखदन्तैः सुपुष्पितैः ।
[8]स्मिताभिभाषिणी तन्वी [9]मन्दचारा रतिप्रिया ॥१०५॥
गीते वाद्ये च नृत्ते च निलं हृष्टा मृजावती ।
[10]गान्धर्वशीला विज्ञेया स्निग्धत्वक्केशलोचना ॥१०६॥
[11]वृहद्दृघायतसर्वाङ्गी रक्तविस्तीर्णलोचना ।
खररोमा [12]दिवास्वप्ननिर्वृतात्युच्चभाषिणी ॥१०७॥
नखदन्तक्षतकरी क्रोधेर्ष्याकलहप्रिया ।
निशाविहारशीला च राक्षसं सत्त्वमाश्रिता ॥१०८॥
तीक्ष्णनासाग्ररदना सुतनुस्ताम्रलोचना ।
नीलोत्पलसवर्णा च [13]स्वप्नोद्वेगाऽतिकोपना ॥१०९॥

99-109 (C. 96-104 ; B XXII. 100-110). 1 BC महिषाजगवाशीला. Bd महिषाश्व. 2 B. स्निग्धै॰. 3 C. स्थिरमन्द॰. 4 B. दानसत्त्वा॰. दानशक्त्या. 5 B. सुरतप्रिया. 6 B. गन्धपुष्परता. 7 B. क्रीडापरा चारुनेत्रा. 8 B. स्त्री च स्थिरभाषी. 9 B. मन्दाभल्पा. 10 B. गान्धर्वसत्त्वा 11 C. वृहदायत॰. 12 B. दिवास्वप्ननिरत॰, C. ॰स्वप्ननिभृता॰. 13 Bd. स्वप्नोद्वेगा, B. स्वप्नशीला, C. स्वप्नोद्वेगा.

तिर्यग्गतिश्चलारम्भा [1]बहुभ्यासातिमानिनी ।
[2]गन्धमाल्यासवरता नागसत्त्वाङ्गना स्मृता ॥११०॥
अत्यन्तव्यावृतास्या च तीक्ष्णशीला सरित्प्रिया ।
सुरासवक्षीररता बह्वपत्या फलप्रिया ॥१११॥
नित्यं श्वसनशीला च सदोद्यानवनप्रिया ।
[3]चपला बहुवाक् शीघ्रा शाकुनं सत्त्वमाश्रिता ॥११२॥
[4]ऊनाधिकाङ्गुलिकरा [5]रात्रौ निष्कुटचारिणी ।
बालोद्वेजनशीला च पिशुना क्लिष्टभाषिणी[6] ॥११३॥
[7]सुरतेषूज्झिताचारा रोमशाङ्गी महास्वना ।
पिशाचसत्त्वा विज्ञेया [8]मद्यमांसासवप्रिया ॥११४॥
स्तम्भस्वेदनाङ्गी च स्थिरशय्यासनप्रिया ।
मेधाविनी [9]तु मृद्वङ्गी मद्यगन्धामिषप्रिया ॥११५॥
[10]चिरदृष्टे तु हर्षं च कृतज्ञत्वादुपैति या ।
अदीर्घशायिनी चैव ज्ञेया यक्षान्वयाङ्गना ॥११६॥
तुल्यमानावमाना या परुषत्वक् खरस्वना ।
शठाऽनृतोद्धतकथा व्यालसत्त्वाथ पिङ्गदृक् ॥११७॥
आर्जवाभिरता नित्यं [11]दक्षा क्षान्तिगुणान्विता ।
विभक्ताङ्गी कृतज्ञा च [12]गुरुदेवार्चने रता ॥११८॥
धर्मकामार्थनित्या च अहङ्कारविवर्जिता ।
सुहृत्प्रिया सुशीला च मानुषं सत्त्वमाश्रिता ॥११९॥

110-119 (C. 105-111; B.XXII. 111-120). 1 C. बहुलस्वामिनन्दिनी. 2 C. गन्धमाल्यादिनिरता 3 C. om. this hem. 4 B. ऊनाधिकाङ्गुलिकरा. 5 K. रतौ 6 C. om. this couplet. 7 Bḍ. सुरतेष्वूज्झिताचारा, B सुरते कुत्सिताचारा. 8 B. मद्यमांसबलि, Bd मद्यमांसाशन. 9 Bḍ. तु मृद्वङ्गी, K. मयहीना, B. बुद्धिमती. 10 B. चिरदृष्टेषु. 11 C. दयालज्जगुणान्विता. 12 B. गुरुदेवद्विजप्रिया.

[1]संहतास्यतनुर्धृष्टा पिङ्गरोमा फलप्रिया ।
प्रगल्भा चपला तीक्ष्णा वृक्षारामवनप्रिया ॥१२०॥
स्वल्पमप्युपकारं तु नित्यं या बहु मन्यते ।
प्रसह्य रतिशीला च वानरं सत्त्वमाश्रिता ॥१२१॥
महाहनुललाटा च [2]मांसलोपचयान्विता ।
पिङ्गाक्षी रोमशाङ्गी च गन्धमाल्यासवप्रिया ॥१२२॥
कोपना [3]स्थिरसत्त्वा च जलोद्यानवनप्रिया ।
मधुराभिरता चैव हस्तिसत्त्वा [4]रतिप्रिया ॥१२३॥
स्वल्पोदरी [5]भग्ननासा तनुजङ्घा वनप्रिया ।
[6]रक्तविस्तीर्णनयना चपला शीघ्रगामिनी ॥१२४॥
[7]दिवात्रासपरा भीरुर्गीतवाद्यरतिप्रिया ।
[8]कोपनाऽस्थिरसत्त्वा च मृगसत्त्वाङ्गना स्मृता ॥१२५॥
दीर्घपीनोन्नतोरस्का [9]चपला निर्निमेषिणी ।
बहुभृत्या बहुसुता मत्स्यसत्त्वा जलप्रिया ॥१२६॥
लम्बोष्ठी स्वेदबहुला किञ्चिद्विकटगामिनी ।
कृशोदरी फुल्लफललवणाम्लकटुप्रिया ॥१२७॥
[10]उद्बद्धकटिपार्श्वा च खरनिष्ठुरभाषिणी ।
[11]अभ्युन्नतपरग्रीवा उष्ट्रसत्त्वाऽस्त्रीप्रिया ॥१२८॥
स्थूलशीर्षा [12]स्थिरग्रीवा दारितास्या महास्वना ।
क्षेया मकरसत्त्वा च क्रूरा मत्स्यगुणैर्युता ॥१२९॥
स्थूलजिह्वोग्रदशना [13]रूक्षत्वक्कटुभाषिणी ।
रतियुद्धकरी [14]धृष्टा नखदन्तक्षतप्रिया ॥१३०॥

120-130 (C. 112-122; B.XXII. 121-131). 1 B. °तनुर्हृष्टा. 2 B. शरीरोपचयान्विता. 3 B. स्थिरचित्ता 4 B. प्रकीर्तिता. 5 B. भग्ननासा. 6 B. चलविस्तीर्ण°. 7 C. परित्रास°. 8 B निवासस्थिरचित्ता. 9 B. चला नातिनिर्निमेषिणी. 10 B. उद्बन्ध. 11 अभ्युन्नतकटोग्रीवा. 12 B. अस्थिरग्रीवा. 13 C. °ह्वोष्टरसना. 14 C. हृष्टा.

सपत्नीद्वेषिणी [1]दक्षाऽचपलाऽशीघ्रगामिनी ।
सरोषा बह्वपत्या च खरसत्त्वा प्रकीर्तिता ॥१३१॥
दीर्घपृष्ठोदरमुखी रोमशाङ्गी बलान्विता ।
सुसंक्षिप्तललाटा च कन्दमूलफलप्रिया ॥१३२॥
[2]कृष्णा दन्तोत्कटमुखी [3]पीवरोदरशिरोरुहा ।
हीनाचारा बह्वपत्या सौकरं सत्त्वमाश्रिता ॥१३३॥
स्थिरा विभक्तपार्श्वोरुकटिपृष्ठशिरोधरा ।
सुभगा दानशीला च ऋजुस्थूलशिरोरुहा ॥१३४॥
[4]कृशा चपलचित्ता च तीक्ष्णवाक् शीघ्रगामिनी ।
कामक्रोधपरा चैव हयसत्त्वाङ्गना स्मृता ॥१३५॥
स्थूलपृष्ठास्थिदशना तनुपार्श्वोदरा स्थिरा ।
[5]हरिरोमाञ्चिता रौद्रा लोकद्विष्टा रतिप्रिया ॥१३६॥
किञ्चिदुन्नतवक्त्रा च जलक्रीडावनप्रिया ।
बृहल्ललाटा सुश्रोणी माहिषं सत्त्वमाश्रिता ॥१३७॥
कृशा तनुभुजोरस्का [6]निःस्थ्येतरलोचना ।
संक्षिप्तपाणिपादा च सूक्ष्मरोमसमाचिता ॥१३८॥
भयशीला [7]जलोद्विग्ना बह्वपत्या वनप्रिया ।
चञ्चला शीघ्रगमना छागशीलाङ्गना स्मृता ॥१३९॥
[8]उद्बुद्धगात्रनयना विजृम्भणपरायणा ।
दीर्घाल्पवदना स्वल्पपाणिपादविभूषणा ॥१४०॥
उच्चैःस्वना स्वल्पनिद्रा क्रोधना [9]बहुभाषिणी ।
हीनाचारा कृतज्ञा च [10]सा श्वशीला प्रकीर्तिता ॥१४१॥
पृथुपीनोन्नतश्रोणी तनुजङ्घा सुहृत्प्रिया ।
संक्षिप्तपाणिपादा च दृढारम्भा प्रजाहिता ॥१४२॥

131-142 (C. 123-134 ; B XXII. 132-143) 1 BC. दक्षा चपला शीघ्र०. 2 C. कृष्णदन्तो०. 3 B. ह्रस्वोदरशिरो०. 4 C गूढा 5 C. खररोमा०. 6 B निःस्थ्यस्थिर, C विस्थ्येतर० 7 C. जलोन्मत्ता. 8 B. उद्धुन्धगात्र०. 9 B. सुकृतप्रिया. 10 C. साऽश्वशीला.

पितृदेवार्चनरता [1]नित्यशौचा गुरुप्रिया ।
स्थिरा परिक्लेशसहा गवां सत्त्व समाश्रिता ॥१४३॥
[2]नानाशीलाः स्त्रियो ज्ञेयाः स्वं स्वं सत्त्वं समाश्रिता· ।
विज्ञाय च यथासत्त्वम् [3]उपसर्पेत्तु ता बुधः ॥१४४॥
उपचारो यथासत्त्वं स्त्रीणामल्पोऽपि हर्षदः ।
महानप्यन्यथायुक्तो नैव तुष्टिकरो भवेत् ॥१४५॥
[4]यथासम्प्रार्थितावाप्त्या रतिः समुपजायते ।
स्त्रीपुंसयोश्च रत्यर्थमुपचारो विधीयते ॥१४६॥
धर्मार्थं हि तपश्चर्या सुखार्थं धर्म इष्यते ।
सुखस्य मूलं प्रमदास्तासु सम्भोग इष्यते ॥१४७॥
[5]कामोपचारो द्विविधो नाट्यधर्मे विधीयते ।
बाह्यश्चाभ्यन्तरश्चैव नारीपुरुषसम्भवः[6] ॥१४८॥
आभ्यन्तरः पार्थिवानां स च कार्यस्तु नाटके ।
बाह्यो [7]वेश्यागतश्चैव स तु प्रकरणे भवेत् ॥१४९॥
तत्र राजोपभोगं तु व्याख्यास्याम्यनुपूर्वशः ।
उपचारविधिं सम्यक् कामतन्त्रसमुत्थितम् ॥१५०॥
[8]त्रिविधा प्रकृतिः स्त्रीणां नानासत्त्वसमुद्भवा ।
बाह्या चाभ्यन्तरा चैव स्याद्बाह्याभ्यन्तराऽपरा ॥१५१॥
कुलीनाभ्यन्तरा ज्ञेया बाह्या वेश्याङ्गना स्मृता ।
कृतशौचा च या नारी सा बाह्याभ्यन्तरा स्मृता ॥१५२॥
अन्तःपुरोपचारे तु कुलजा कन्यकापि वा[9] ।
नहि [10]राजोपचारे तु बाह्यस्त्रीभोग इष्यते ॥१५३॥

143-153 (C. 135-145; B XXII. 144-154) 1 B. सत्त्व॰ 2 C om. this hem. 3 B उपसेवेत ता पुन. 4 C. यथा सम्प्राथिताया वाप्यरतिः. 5 B. कामोपभोग. 6 B. ॰पुरुषसंश्रय॰. 7 B. वेश्यागत॰. 8 C. विविधा. 9 C adds after this नहि राजोपचारेषु कुलजा कन्यकापि वा. 10 C. राजोपचारेषु

आभ्यन्तरो भवेद्बाह्यो [1]बाह्यो बाह्यजनस्य वा ।
दिव्यवेश्याङ्गनानां हि [2]राह्यो भवति सङ्गमः ॥१५४॥
[3]कुलजाकामितं यच्च तज्ज्ञेयं कन्यकास्वपि ।
या चापि वेश्या साप्यत्र यथैव कुलजास्तथा ॥१५५॥
इह कामसमुत्पत्तिर्नानाबीजसमुद्भवा[4] ।
स्त्रीणां वा पुरुषाणां वा उत्तमाधममध्यमा ॥१५६॥
श्रवणाद्दर्शनाद्रूपादङ्गलीलाविचेष्टितैः ।
मधुरैः सम्प्रलापैश्च कामः समुपजायते ॥१५७॥
[5]रूपगुणादिसमेतं कलादिविज्ञानयौवनोपेतम् ।
दृष्ट्वा पुरुषविशेषं नारी मदनातुरा भवति' ॥१५८॥
ततः कामयमानानां नृणां स्त्रीणामथापि च ।
कामभावेङ्गितानीह तज्ज्ञः समुपलक्षयेत् ॥१५९॥
ललिता चलपक्ष्मा च सास्रा मुकुलितेक्षणा ।
स्रस्तोत्तरपुटा चैव कान्त्या दृष्टिर्भवेदिह ॥१६०॥
[6]फुल्लितान्ता सलालित्यसस्मितैर्व्याञ्जितैः सदा ।
दृष्टिः सा ललिता नाम स्त्रीणामर्ध[7]विलोकने' ॥१६१॥
ईषत्संरक्तगण्डश्च स्वेदबिन्दुविचित्रितः ।
प्रस्पन्दमानरोमाञ्चो मुखरागस्तु कामजः ॥१६२॥
काम्येनाङ्गविकारेण सकटाक्षनिरीक्षितैः ।
तथाभरणसंस्पर्शात् कर्णकण्डूयनादपि ॥१६३॥
अङ्गुष्ठाग्रेण लिखनात् स्तननाभिप्रदर्शनात् ।
नखनिस्तोदनाच्चापि केशसंयमनादपि ॥१६४॥

154-164 (C. 146-156; B.XXII. 155-165). 1 C. बाह्ये. 2 B. राह्य, C राह्य. 3 C. कुलजाना मतं. 4 B. ॰नानाभावसमुत्थिता. 5 C. has this after 159 6 Bg. फुल्लितान्ता. B. वलितान्ता. C. पलितान्ता. 7 B. अर्धावलोकने.

वेद्यामेवंविधैर्भावैर्लक्षयेन्मदनातुराम् ।
कुलजायास्तथा चैव 'विज्ञेयानीङ्गितानि वै ॥१६५॥
प्रहसन्तीव नेत्राभ्यां सततं च निरीक्षते ।
स्मयते च निगूढं च वाक्यञ्चाधोमुखी वदेत् ॥१६६॥
स्मितोत्तरा मन्दवाक्या स्वेदाकारनिगूहना ।
प्रस्पन्दिताधरा चैव चकिता च कुलाङ्गना ॥१६७॥
एवंविधैः कामलिङ्गैरप्राप्तसुरतोत्सवा ।
'दशावस्थागतं कामं नानाभावैः प्रकाशयेत् ॥१६८॥
प्रथमे त्वभिलाषः स्याद् द्वितीये चिन्तनं भवेत् ।
अनुस्मृतिस्तृतीये तु चतुर्थे गुणकीर्तनम् ॥१६९॥
उद्वेगः पञ्चमे प्रोक्तो विलापः षष्ठ उच्यते ।
उन्मादः सप्तमे ज्ञेयो भवेद् व्याधिस्तथाष्टमे ॥१७०॥
नवमे जडता प्रोक्ता दशमे मरणं भवेत् ।
स्त्रीपुंसयोरेष विधिर्लक्षणं च निबोधत ॥१७१॥
व्यवसायात् समारब्धः सङ्कल्पेच्छासमुद्भवः ।
समागमोपायकृतः सोऽभिलाषः प्रकीर्तितः ॥१७२॥
निर्याति विशति च मुहुः करोति चाकारमेव मदनस्य ।
तिष्ठति च दर्शनपथे 'प्रथमस्थाने स्थिता कामे ॥१७३॥
केनोपायेन 'संप्राप्तिः कथं वा संभवेन्मम ।
दूतीनिवेदितैर्वाक्यैरिति' चिन्तां विनिर्दिशेत् ॥१७४॥
'आकेकराक्षिविप्रेक्षितानि वलयरशनापरामर्शः ।
'नीवीनाभ्यूरूणां स्पर्शः कार्यो द्वितीये तु ॥१७५॥
मुहुर्मुहुर्निःश्वसितैर्मनोरथविचिन्तनैः ।
प्रद्वेषस्त्वन्यकार्याणामनुस्मृतिरुदाहृता ॥१७६॥

165-176 ( C. 157-167 B.XXII. 166-177 ) 1 B. प्रवक्ष्यामीङ्गितानि तु. 2 B. दशास्थानगतं. 3 C. प्रथमस्थानस्थिते. 4 C. सम्प्राप्ति 5 B. भावैरिति. 6 B. आकेकरार्थ॰ 7 B. नीवीनाभ्या सं॰.

[1]नैवासने न शयने धृतिमुपलभते स्वकर्मणि [2]विहस्ता ।
[3]तच्चिन्तोपगतत्वात्तृतीयमेवं प्रयुञ्जीत ॥१७७॥
अङ्गप्रत्यङ्गलीलाभिर्वाग्विचेष्टाहसितेक्षितैः ।
नास्त्यन्यः सदृशस्तेनेत्येतत्स्याद् गुणकीर्तनम् ॥१७८॥
[4]गुणकीर्तनोल्लसनैरश्रुस्वेदापमार्जनैश्चापि ।
दूत्यविरहविस्रंभैरभिनययोगश्चतुर्थे तु ॥१७९॥
आसने शयने वापि न तुष्यति न [5]हृष्यति ।
नित्यमेवोत्सुका यस्मादुद्वेगस्थानमेव तत्[6] ॥१८०॥
[7]चिन्तानिःश्वासस्वेदैश्च हृद्दाहाभिनयेन च ।
तदेव कुर्यादत्यन्तमुद्वेगाभिनयेन च ॥१८१॥
[8]इहास्थित इहासीन इह चोपगतो मया ।
इति तैस्तैर्विलपितैर्विलापं संप्रयोजयेत् ॥१८२॥
उद्विग्नात्यर्थमौत्सुक्यादरत्या[9] च विलापिनी ।
ततस्ततश्च भ्रमति विलापस्थानमाश्रिता ॥१८३॥
[10]तत्संश्रितां कथां युङ्क्ते सर्वावस्थागतापि हि ।
[11]प्रद्वेष्टि चापरान्पुंसो यतोन्मादः स उच्यते ॥१८४॥
तिष्ठत्यनिमिषदृष्टिर्दीर्घं निःश्वसिति गच्छति ध्यानम् ।
रोदिति विहारकाले नाट्यमिदं स्यात्तथोन्मादे ॥१८५॥
[12]समदनार्थसंभोगैः काम्यैः [13]सं[प्रो]क्षणैरपि ।
[14]सर्वैरवशीकरणाद्व्याधिः समुपजायते ॥१८६॥
मुह्यति हृदयं क्वापि प्रयाति शिरसश्च वेदना तीव्रा ।
न धृतिं चाप्युपलभते ह्यष्टममेवं प्रयुञ्जीत ॥१८७॥

177-187 (C.XXXI 76-81 ; B.XXII. 178-188). 1 Chowkhamba ed. XXIV. 168-268a is a copy from the first KM ed. 2 C. विहीना. 3 C. तच्चित्तोपहत. 4 B. ०कीर्तनोल्लुकसनै.. 5 B. तिष्ठति. 6 B. ०स्थानमाश्रिता. 7 B. ०निःश्वासखेदेन. 8 B. इह स्थित. 9 B. ०दश्रुला. 10 C. तदसंश्रयकथायुक्ता. 11 C. पुंसः प्रद्वेषिता चैव स्याद्, B. पुंसः प्रद्वेष्टि चाप्यन्यान्. 12 B. सामदानार्थ. 13 C. संप्रेषणै, B. सप्रेषणैः. 14 B. सर्वनिराकृतैः पश्चाद्.

पृष्टा न किंचिद्ब्रूते न शृणोति न पश्यति ।
'तूष्णीं' हाकष्टभाषा च नष्टचित्ता जडा स्मृता ॥१८८॥
अकाण्डे दत्तहुंहुंकारा तथा प्रशिथिलाङ्गिका ।
श्वासग्रस्तानना चैव जडताभिनये भवेत् ॥१८९॥
सर्वैः कृतैः प्रतीकारैर्यदि नास्ति समागमः ।
कामाग्निना प्रदीप्ताया जायते मरणं ततः ॥१९०॥
एवं स्थानानि कार्याणि कामतन्त्रं समीक्ष्य तु ।
अप्राप्तौ यानि कामस्य वर्जयित्वा तु नैधनम् ॥१९१॥
विविधैः पुरुषोऽप्येवं [2]विप्रलम्भसमुद्भवैः ।
भावैरेतानि कामस्य नानारूपाणि [3]योजयेत् ॥१९२॥
एवं [4]कामयमानानां स्त्रीणां नृणामथापि वा ।
सामान्यगुणयोगेन युञ्जीताभिनयं बुधः ॥१९३॥
[5]चिन्तानिःश्वासखेदेन [6]देहस्यायासनेन च ।
[7]तथानुगमनाच्चापि तथैवाप्यनिरीक्षणात् ॥१९४॥
आकाशवीक्षणाच्चापि तथा दीनप्रभाषणात् ।
स्पर्शनान्मोटनाच्चापि तथा [8]चोपाश्रयाश्रयात् ॥१९५॥
एभिर्नानाश्रयोत्पन्नैर्विप्रलम्भसमुद्भवैः ।
कामस्थानानि सर्वाणि भूयिष्ठं संप्रयोजयेत् ॥१९६॥
[9]वासो भूषणगन्धांश्च गृहाण्युपवनानि च ।
कामाग्निना दह्यमानः शीतलानि निषेवते ॥१९७॥
[10]प्रदह्यमानकामार्तो बहुस्थानसमर्दितः[11] ।
[12]प्रेषयेत्कामदूतीं तु स्वावस्थादर्शनं प्रति ॥१९८॥

188–198 (C.XXXI. 87-97 ; B.XXII. 189-199). 1 B. तुष्णीका ह्याकष्टवाक्या. 2 C विप्रलम्भानुपूर्वकैः. 3 B. काम्य. 4 C. भावयमानाना. 5 C. चिन्तानिःश्वासदुःखेन, K. चिन्तातितापखेदेन. 6 B. हृदाह्वाभिनयेन. 7 K. अनुगुणनायापि, 8 Bd. चोपाश्रया, B. सापाश्रया, C चोपाश्रया. 9 B स्रजो. 10 C. प्रसह्यमानः, BK. प्रदह्यमान.. 11 K. समन्वितः 12 K. कामदूतीं.

संदेशं चैव दूत्यास्तु प्रदद्यान्मदनाश्रयम्।
[1]तस्येयं समवस्थेति कथयेद्विनयेन सा ॥१९९॥
[2]अथावेदितभावार्थो रत्युपायं[3] विचिन्तयेत्।
अयं विधिर्विधानज्ञैः कार्यः प्रच्छन्नकामिते ॥२००॥
विधिं राजोपचारस्य पुनर्वक्ष्यामि तत्त्वतः।
अभ्यन्तरगतं सम्यक् [4]कामतन्त्रसमुत्थितम् ॥२०१॥
सुखदुःखरतान्भावान्नानाशीलसमुत्थितान्।
यान्यान्प्रकुरुते राजा तांस्तांल्लोकोऽनुवर्तते ॥२०२॥
न दुर्लभाः [5]नृपानां तु [6]स्त्रियो ह्याज्ञाकृ[तो ग]णाः।
दाक्षिण्यात्तु समुद्भूतः कामो रतिकरो भवेत् ॥२०३॥
बहुमानेन देवीनां वल्लभानां भयेन च।
प्रच्छन्नकामितं [7]राज्ञः कार्यं परिजनं प्रति ॥२०४॥
यद्यप्यस्ति [8]नृपाणां तु कामतन्त्रमनेकधा।
प्रच्छन्नकामितं यत्तु तद्धै रतिकरं भवेत् ॥२०५॥
यद्वामाभिनिवेशित्वं यतश्चैव निवार्यते।
दुर्लभत्व च यन्नार्यां [9]कामिनः सा रतिः परा ॥ ०६॥
राज्ञामन्तःपुरजने दिवासम्भोग इष्यते।
[10]वासोपचारो यश्चैव स रात्रौ परिकीर्तितः ॥२०७॥
परिपाल्यां फलार्थे वा नवे प्रसव एव वा।
दुःखे चैव प्रमोदे च षडेते वासकाः स्मृताः ॥२०८॥
उचिते वासके स्त्रीणामृतुकालेऽपि वा नृपैः।
[11]द्वेष्यानामथवेष्टानां कर्तव्यमुपसर्पणम् ॥२०९॥

199-208 (C XXXI. 98-108, B.XXII. 200-210). 1 C. इयं तस्या व्यवस्थेति निवेद्य प्रश्रयादिभिः 2 B. अथावेदितभावार्थो, 3 B. रत्युपायं. Bbb. रम्युपायं. 4 C. कामतन्त्रैः. 5 B. पार्थिवाना 6 B. स्त्र्यर्थमाज्ञाकृता गुणाः, C. स्त्रियो ह्याज्ञा०. 7 B. राज्ञा. 8 B नरेन्द्राणा 9 B. सा कामस्य परा रतिः. 10 C. वाह्योपचारो. 11 B प्रेष्याणामपेक्षेटाना.

तत्र वासकसज्जा वा विरहोत्कण्ठितापि वा ।
स्वाधीनभर्तृका वापि कलहान्तरितापि वा ॥२१०॥
खण्डिता विप्रलब्धा वा तथा प्रोषितभर्तृका ।
तथाभिसारिका चैव इत्यष्टौ नायिकाः स्मृताः ॥२११॥
उचिते वासके या तु रतिसम्भोगलालसा ।
मण्डनं कुरुते हृष्टा सा वै वासकसज्जिका ॥२१२॥
अनेककार्यव्यासङ्गाद्यस्या नागच्छति प्रियः ।
[1]अनागमनदुःखार्ता विरहोत्कण्ठिता तु सा ॥२१३॥
सुरतातिरसैर्बद्धो यस्याः [2]पार्श्वगतः प्रियः ।
[3]सामोदगुणसंयुक्ता भवेत्स्वाधीनभर्तृका ॥२१४॥
ईर्ष्याकलहनिष्क्रान्तो यस्या नागच्छति प्रियः ।
[4]अमर्षवशसंप्राप्ता कलहान्तरिता भवेत् ॥२१५॥
व्यासङ्गादुचिते यस्याः वासके नागतः प्रियः ।
[5]तदनागमनार्ता तु खण्डितेत्यभिधीयते ॥२१६॥
[6]तत्नाद्भूतां प्रियः प्राप्य दत्वा सङ्केतमेव वा ।
नागतः कारणेनेह विप्रलब्धा तु सा मता ॥२१७॥
[7]गुरुकार्यान्तरवशाद्यस्या विप्रोषितः प्रियः ।
सा रूढालककेशान्ता भवेत्प्रोषितभर्तृका ॥२१८॥
हित्वा लज्जां[9] तु या श्लिष्टा मदेन मदनेन वा ।
अभिसारयते कान्तं सा भवेदभिसारिका ॥२१९॥
आस्ववस्थासु विज्ञेया नायिका [10]नाटकाश्रयाः ।
एतासां ये च वक्ष्यामि [11]यथा योज्यं प्रयोक्तृभिः ॥२२०॥

210-220 (C.XXXI. 109-119 ; B XXII. 211-221). 1 B. तदनागमन°. 2 BC. पार्श्वे तु नायकः. 3 B. सान्द्रामोदगुणप्राप्ता. 4 B. सामर्षवशसंप्राप्ता. 5 K. तदनागमनार्ता, B. तदानागमदुःखार्ता, C तत्तानगम°. 6 B. यस्या दूती प्रियं प्रेष्य. 7 B. नानाकार्याणि सन्धाय, C. नानाकार्यार्थसम्पन्नै. 9 C. समाहृता. 10 B. नाटकाश्रया. 11 B. कामतन्त्रमनेकधा.

चिन्तानिःश्वासखेदैश्च हृद्दाहाभिनयेन च।
सखीनां संप्रलापैश्च आत्मावस्थावलोकनैः ॥२२१॥
ग्लानिदैन्याश्रुपातैश्च रोषस्यागमनेन च।
निर्भूषणाङ्गी विमृजा दुःखेन रुदितेन च ॥२२२॥
खण्डिता विप्रलब्धा वा कलहान्तरितापि या।
तथा प्रोषितकान्ता च भावैरेवं प्रयोजयेत् ॥२२३॥
विचित्रोज्ज्वलवेषा च प्रमोदोद्द्योतिताननना।
उदीर्णशोभातिशया कार्या स्वाधीनभर्तृका ॥२२४॥
वेश्यायाः कुलजाया वा प्रेष्याया वाथवा नृपैः।
एभिर्भावविशेषैस्तु कर्तव्यमभिसारणम् ॥२२५॥
समदा मृदुचेष्टा च तथा परिजनावृता।
नानाभरणचित्राङ्गी गच्छेद्वेश्याङ्गना शनैः ॥२२६॥
संलीना स्वेषुगात्रेषु त्रस्ता [2]विप्रेक्षिताननना।
अवगुण्ठनसंवीता गच्छेच्च कुलजाङ्गना ॥२२७॥
मदस्खलितसंलापा विभ्रमोत्फुल्ललोचना।
[1]आविद्धगतिसंचारा [1]गच्छेत्प्रेष्या समुद्धतम् ॥२२८॥
[3]स्यादयं शयितो व्यक्तं पश्येत्सुप्तं प्रियं यदा।
[4]अनेन तूपचारेण तस्य कुर्यात् प्रबोधनम् ॥२२९॥
अलंकारेण कुलजा वेश्या गन्धैस्तु शीतलैः।
प्रेष्या तु वस्त्रव्यजनैर्बोधयेच्छयितं प्रियम्[5] ॥२३०॥
[6]कुलाङ्गनावेश्यादीनां प्रोक्तः[7] कामाश्रयो विधि।
सर्वावस्थानुभाव्यं तु यत्नाद्भवति नाटकम् ॥२३१॥

221-231 (C.XXXI. 120-125, C.XXII. 214-224; B.XXII. 222-232). 1 C. समागदितसञ्चारा. 2 K. विप्रेक्षिताननना, B. विनमिताननना. 3 K. स्यादयं शयितो (=शयितो), B. गत्वा सा चेयदा तत्र. 4 K. प्रिया यथोत्थापयति तथा वक्ष्याम्यहं पुन 5 B. कुर्वीत प्रतिबोधनम्. 6 B. कुलाङ्गनान्यनेवार्य. 7 B. नोक्त..

नवकामप्रवृत्ताया क्रुद्धाया वा समागमे ।
सापदेशैरुपायैस्तु वासकं [1]संप्रयोजयेत् ॥२३२॥
नानालङ्कारवस्त्राणि गन्धमाल्यानि चैव हि ।
[2]नित्यं सुपान्युदात्तानि[3] सेवेत मदनान्विता ॥२३३॥
न तथा भवति [4]विशेषो मदनवशः कामिनीमलभमानः ।
द्विगुणोपजातहर्षो भवति यथा सङ्गतः प्रियया ॥२३४॥
विलासभावेङ्गितवाक्यलीलाविशेषमाधुर्यगुणोपपन्नः[5] ।
परस्परप्रेमनिरीक्षितेन समागमः कामकृतस्तु कार्यः ॥२३५॥
[6]नार्याप्यथ विशेषेण प्रमोदरससम्भवः ।
वासोपचारः कर्तव्यो नायकागमनं प्रति ॥२३६॥
[7]गन्धमाल्यं गृहीत्वा तु चूर्णवासस्तथैव च ।
[8]स्थापयेन्नायककृते कुर्याच्चात्मप्रसाधनम् ॥२३७॥
वासोपचारे नात्यर्थं भूषणग्रहणं भवेत् ।
रशनानूपुरप्रायं स्वनवच्च प्रशस्यते ॥२३८॥
[9]न मञ्जग्रहणं रङ्गे न स्नानं नानुलेपनम् ।
नाञ्जनं नाङ्गरागं च न च केशोपसङ्ग्रहम्[10] ॥२३९॥
[11]नापावृता नैकवस्त्रा न रागमधरस्य तु ।
उत्तमा मध्यमा वापि [12]प्रकुर्यात् प्रमदा क्वचित् ॥२४०॥

232-240 (C.XXXI. 127-135 ; B.XXII. 233-241). 1 K. संप्रकल्पयेत्, C. प्रतियोजयेत्. 2 B. प्रियायोजितभुक्तानि. 3 B. निषेवेत मुदान्वितः. 4 B. मनुष्यो. 5 B. माधुर्यविस्तारगुणोपपन्नः. 6 B. तत्र प्रवृत्ते मदने उपचारसमुद्भवे. 7 B. गन्धमाल्ये. 8 स्थापयेन्नायककृते etc. B. आदर्शो लीलया ग्राह्यश्छन्दतो वा पुनः पुनः, C. आदर्शः संग्रहीतव्यो कृतार्थोऽपि पुन पुनः. 9 B. नाम्बरग्रहणं. 10 K. कोशोपसग्रहम् , B. केशसंयमनं तथा, C. स्तनकेशग्रहो तथा. 11 B. नाप्रावृता. 12 B. कुर्वीत.

अधमानां [1]भवदेवं विधिः प्रकृतिसम्भवः ।
[2]तासामपि ह्यसम्यं यत्र तत्कार्यं प्रयोक्तृभिः ॥२४१॥
[3]प्रमदाभिर्नरैर्वापि नानाभावैस्तु नाटके ।
भूषणग्रहणं कार्यं पुष्पाणां ग्रहणं तथा ॥२४२॥
[4]निर्युक्तमण्डना किञ्चित्प्रतीक्षेत प्रियागमम्[4] ।
[5]वीक्ष्यमाणा पथं प्रिया शृणुयान्नालिकाध्वनिम् ॥२४३॥
श्रुत्वा तु [6]नालिकाघोषं नायकागमविक्लवा ।
[7]वेपन्ती सन्नहृदया तोरणाभिमुखी व्रजेत् ॥२४४॥
[8]वामेन तोरणं गृह्य कवाटं दक्षिणेन तु ।
[9]हस्तेन संमुखीभूय [10]उदीक्षेत प्रियागमम् ॥२४५॥
शङ्कां चिन्तां भयं चैव कुर्यात्कारणसंस्थितम्[11] ।
अदृष्ट्वा रमणं नारी विषण्णा तु क्षणं भवेत् ॥२४६॥
दीर्घं चैव विनिःश्वस्य [12]अस्रञ्चैव निपातयेत् ।
सन्नं च हृदयं कृत्वा [13]विसृजेदङ्गमासने ॥२४७॥
व्याक्षेपाद्विमृशेच्चापि नायकागमनं प्रति ।
तैस्तैर्विचारणैश्चापि शुभाशुभसमुत्थितैः[14] ॥२४८॥

241-248 (C XXXI. 136-144; B.XXII. 242-250). 1 B. भवेदेष सर्व एव विधि सदा. 2 BC. कारणान्तरनामाय वलादपि (C. तासानपि) न कारयेत्. 3 B.C. प्रेष्यादीना च (C. वेश्यादीना तु) नारीणा नराणा वापि (C. अपि) नाटके. 4 B. गृहीतमण्डना. B.C. लीलया मण्डितं वेषं कुर्यात्न विरुध्यते, विधिवद्वासकं कुर्यात्कामिना नायकागमे (C. वासोपचारं कृत्वैव नादिका नायकागमम्). 5 K's. reading, B. प्रतीक्षमाणा च ततो नालिकाशब्दनादितैव, C. शृणुयान्नालिका-घोषं तत्प्रतीक्षासमन्विता. 6 B. नालिकाशब्दं. K. ०नादं. 7 B. विषण्णा वेपमाना च. 8 C. वामेन तोरणं गृह्य, B. तोरणं वामहस्तेन. 9 K's reading, C. हस्तेनाघोमुखी. B. गृहीत्वा तोरणाश्रिता. 10 K's reading, C. प्रतीक्षते, B. संप्रतीक्षते. 11 B. तोरणाश्रिता, K. तोरणसंश्रितम्. 12 B. नयनाम्बु, C आसन्नैव. 13 C. विमुञ्चेद्. 14 C. समन्वितैः.

गुरुकार्येण मित्रैर्वा [1]मन्त्रिणां राज्यचिन्तया ।
अनुबद्धः प्रियः किन्तु [2]धृतो वल्लभयापि वा ॥२४९॥
[3]आकारं दर्शयेदेवं शुभाशुभसमुत्थितान् ।
निमित्तैरात्मसंस्थैस्तु स्फुरितैः स्पन्दितैस्तथा ॥२५०॥
शोभनेषु च कार्येषु निमित्तं वामतः स्त्रियाः ।
अनिष्टेषु तु कार्येषु निमित्त दक्षिण भवेत् ॥२५१॥
सव्यं नेत्रं ललाटं च [4]भ्रूर्घ्योष्ठं तथैव च ।
ऊरुबाहुस्तनश्चैव स्फुरेद्यदि समागमः ॥२५२॥
अतोऽन्यथा स्पन्दमाने [5]दुरितं दक्षिणे भवेत् ।
दर्शने दुर्निमित्तस्य मोहं गच्छेत्क्षणं ततः ॥२५३॥
[6]अप्राप्तेऽथैव कर्तव्यं प्रिये गण्डार्पितं करम् ।
भूषणे चाप्यवशानं रोदनं च समाचरेत् ॥२५४॥
[7]ततश्च शोभनं [8]पश्यन्निमित्तं वै प्रियागमे ।
सूच्यो नायिकयासन्नो गन्धाघ्राणेन नायकः ॥२५५॥
दृष्ट्वा चोत्थाय हृष्टाङ्गी [9]प्रत्युद्गच्छेद्धि नायकम् ।
यदि स्यादपराद्धस्तु [10]ततस्तैस्तैरुपक्रमैः ॥२५६॥
उपालम्भकृतैर्वाक्यैरभिभाष्यस्तु[11] नायकः ।
मानापमानसम्मोहैरवहित्थैर्यथाक्रमम्[12] ॥२५७॥

249-257 (C.XXXI. 145-157; B.XXII. 251-261a). 1 B. मन्त्रिणा. 2 B. धृतो. 3 B. उत्पातानिर्दिशेच्चापि. 4 B भ्रूनासोष्ठ. 5 B दुर्निमित्तं, Bbh. दुरुक्तं, Bc. दुरित, C अनिष्टं. 6 K. अप्राप्तेऽथैव कर्तव्यं B. C. अनागमे नायकस्य 7 B अथचेच्छोभनं तत्स्यात् निमित्त नायकागमे 8 K पश्यन्. 9 B. प्रत्युद्गच्छेद्यथाक्रमम् and B.C. add after this तत कान्त निरीक्षेत प्रहर्षोत्फुल्ललोचना । सखिस्कन्धार्पितकरा कृत्वा स्थानकमायतम् । दर्शयेत तत कान्तं सचिह्नं सर सव्रणम्, but K. om. them. 10 B. कृत० 11 B. उपालभ्य०. 12 B. ०भयकमैः.

[1]वचनस्य समुत्पत्तिः स्त्रीणा [2]ग[र्हो]त्कृता भवेत् ।
[3]विश्रम्भस्नेहरागेषु संदेहे प्रणये तथा ॥२५८॥
[4]परितोषे [5]संघर्षे च दाक्षिण्याक्षेपविस्मये[6] ।
[7]धर्मार्थकामयोगेषु प्रच्छन्नवचनेषु च ॥२५९॥
हास्ये कुतूहले चैव सम्भ्रमे व्यसने तथा ।
[8]हास्योपस्मातसम्प्राप्तौ दोषोपक्षेपनिह्नवे ॥२६०॥
अनाभाष्योऽपि सम्भाष्यः प्रिय एभिस्तु कारणैः ।
[9]यत्र स्नेहो भयं तत्र यत्रेर्ष्या तत्र मन्मथः[10] ॥२६१॥
चतस्रो योनयस्तस्या[11] कीर्त्यमाना निबोधत ।
वैमनस्यं व्यलीकं च विप्रियं मन्युरेव च ॥२६२॥
एतेषां [11]संप्रवक्ष्यामि लक्षणानि यथाक्रमम् ।
[12]निद्राखेदालसगति सचिह्नं सरसव्रणम् ।
एवंविधं प्रियं दृष्ट्वा वैमनस्यं भवेत्स्त्रिया[11] ॥२६३॥
तीनासूयितवदना रोषाद् बहुशः [13]प्रकम्पमानोष्ठी ।
साध्विति सुष्ठ्विति वाक्यैः शोभनमित्यभिनयं युञ्ज्यात् ॥२६४॥
[14]बहुशोऽवधीर्यमाणोऽपि [3]यत्नलिङ्गेव दृश्यते ।
[15]संघर्षाच्च मात्सर्याद्व्यलीकं तु भवेत्स्त्रियाः ॥२६५॥
कृत्वोरसि वामकरं दक्षिणहस्तं [16]तथा विधुन्वाना ।
चरणविनिष्टम्भेनास्मिन्कुर्वीत साभिनयम्[17] ॥२६६॥

258-266 (C.XXXI. 251-260 ; B.XXII. 261b-270). 1 C. om. 258-259a. 2 K. गाथाकृता. B. ईर्ष्याकृता. 3 See 1 above. 4 ibid. 5 Ag. संघर्षे, B. घर्षे. C. हर्षे. 6 B. विभ्रमे, K. पातने. Ag. विस्मये. 7 C. अवहित्य स्नेहेषु. 8 B. read 260b as धीपुंसयो. ओपहृते पृथग्मिथे तथापि वा. 9 B. यत्र स्नेहो भवेत्तत्र हीर्ष्या. 10 मदनतन्मेवा. C. मदनस्ततः. 11 C समुत्पत्ति मनोगं च निबोधत. 12 B. निद्रा॰. 13 K. प्रकम्पमानोष्टी, C. प्रवेपमानाक्षी. 14 B. बहुधा वार्यमाणोऽपि. 3 C. यन्तलेव हि दिशति. 15 B. संघर्षमत्सरा तत्र, C. संहर्षाच्चात. 16 K. तथा. 17 B.C कार्योऽभिनयो व्यलीके तु, we with K.

जीवन्त्यां त्वयि जीवामि दासोऽहं त्वं च मे प्रिया ।
उक्त्वैवं योऽन्यथा कुर्यात्तद्विप्रियमिति स्त्रियाः ॥२६७॥
दूतीलेखप्रतिवचनभेदनैः क्रोधहसितरुदितैश्च ।
विप्रियकरणेऽभिनयः सशिरःकम्पः प्रयोक्तव्यः ॥२६८॥
प्रतिपक्षसकाशात्तु यः सौभाग्यविकत्थनः ।
उपसर्पेत्सचिह्नश्च मन्युस्तत्र भवेत्स्त्रियाः ॥२६९॥
वलयपरिवर्तनेन च [1]सशिथिलमुपक्षेपणेन रसनयोः ।
मन्युस्त्वभिनेतव्यः सदाङ्कितं [2]चास्रमोक्षेऽस्य ॥२७०॥
दृष्ट्वा स्थितं प्रियतमं सशङ्कितं सापराधमतिलज्जम् ।
ईर्ष्यावचनसमुत्थैः खेदयितव्यो ह्युपालम्भैः ॥२७१॥
[3]न च निष्ठुरमतिभाष्या न चाप्यतिकोपनस्तु [4]परिभाष्यः ।
बाष्पोन्मिश्रैर्वचनैरात्मोपन्याससंयुक्तैः ॥२७२॥
[5]मध्याङ्गुल्यङ्गुष्ठाग्रविच्युतवामपाणिना ह्युरःस्थेन ।
उद्वर्तितनेत्रतया तथा प्रततवीक्षणाच्चापि ॥२७३॥
कटिहस्तनिविष्टतया विच्छिन्नतया [6]तथाङ्गकैः करणात् ।
[7]मूर्धभ्रमणनिकुञ्चितनिपातसंश्लेषणाच्चापि ॥२७४॥
अवहित्थवीक्षणाद्वा अङ्गुलिभङ्गैश्च तर्जनैर्ललितैः ।
एभिर्भावविशेषैरस्याभिनयः प्रयोक्तव्यः ॥२७५॥
शोभसे साधुदृष्टोऽसि गच्छ त्वं किं विलम्बसे ।
मा मां स्प्राक्षीः प्रियां याहि तव या हृदि संस्थिता ॥२७६॥
गच्छेत्युक्त्वा परावृत्य [8]विनिवृत्तान्तरेण तु ।
[9]केनचिद्वचनार्थेन प्रहर्षं योजयेत्पुनः ॥२७७॥

267-277 (C XXXI. 263-169; XXIV. 268b-271; B. XXII. 268-274) 1 B. सुशिथिल°. 2 B.C. बाष्पपूर्णाक्षयाः, K. चास्र मोक्षे. 3 C. om. 272 4 Bbh. परिभाष्य, B. परिहास, K. परिहार्य. 5 B. मध्याङ्गुल्याङ्गुष्ठ प्रविच्युतात्. 6 B. तथा श्लेः करणात्. 7 C. भ्रमणनिकुञ्चितनखादि. B. निहञ्चित निपातयोश्लेषणाच्चापि 8 B. विनिवृत्तान्तरेण. 9 C. केनचिद्भ्रमनार्थेन.

रभसग्रहणाच्चापि वस्त्रे हस्तेऽथ मूर्धनि ।
कार्यं [1]प्रसादनं नार्या ह्यपराधं समीक्ष्य तु ॥२७८॥
हस्ते वस्त्रेऽथ केशान्ते नार्याप्यथ गृहीतया ।
[2]कान्तमेवापसर्पन्त्या कर्तव्यं मोक्षणं शनैः ॥२७९॥
गृहीतयाऽथ केशान्ते हस्ते वस्त्रेऽथवा पुनः ।
[3]यथा मिथो न पश्येद्धि स्पर्शो ग्राह्यस्तथा स्त्रिया ॥२८०॥
पादाग्रस्थितया नार्या [4]तथैवाकुञ्चिताङ्गया ।
अभ्यक्रान्तेन कर्तव्यं केशानां मोक्षणं शनैः ॥२८१॥
अमुच्यमाने केशान्ते नार्या सस्वेदलेशया ।
हुं हुं मुञ्चापसर्पेति वाच्यः स्पर्शालसाङ्गया ॥२८२॥
गच्छेति रोषवाक्येन गत्वा [5]प्रतिनिवृत्य च ।
केनचिद्वचनार्थेन [6]चालापं योजयेत् पुमान् ॥२८३॥
[7]विधूननञ्च हस्तस्य हुङ्कारं स्त्री प्रयोजयेत् ।
स चावधूनने कार्यः शपथैर्व्याज[8] एव च ॥२८४॥
अक्ष्णोः संवरणं कार्यं पृष्ठतश्चोपगूहनम् ।
नार्यास्त्वपहृते वस्त्रे [9]नीवीच्छादनमेव वा ॥२८५॥
[10]तावत्खेदयितव्यस्तु यावत्पादगतो[11] भवेत् ।
ततश्चरणयोः पाते कुर्याद् दूतीनिरीक्षणम् ॥२८६॥
[12]उत्थाप्यालिङ्गयेदेनं नायिका नायकं ततः ।
[13]रतिभोग[हृ]ता दृष्ट्वा शयनाभिमुखी व्रजेत् ॥२८७॥

278-287 ( C.XXIV. 271-281, B.XXII. 282-291 ). 1 C. प्रशमनं. 2 Bbh. अपसर्पन्त्या, BC. ॰वोपसर्पन्त्या. 3 B. हुं मवेत्युपसर्पन्त्या वाच्य स्पर्शालसंप्रिय, 4 B. किञ्चित् कुट्टमितोत्कटम्. 5 C. प्रतिनिवर्त्य. 6 B वाच्यं यासत्सि नेति च 7 B. विधूननेन हस्तेन. 8 B व्याज, C. वाच्य. 9 B. दीपप्रच्छादन. 10 C. तावत् स्वेदयितव्यस्तु. 11 C. पादहतो 12 C. सधाप्यालिङ्गयेद्. 13 रतिभोगहृता दृष्ट्वा, B. रतिभोगगता दृष्ट्वा.

एतद्गीतविधानेन सुकुमारेण योजयेत् ।
यदा शृङ्गारसंयुक्तो रतिसंयोगकारणम् ॥२८८॥
यदा चाकाशपुरुषं परस्थवचनाश्रयम् ।
भवेत् [1]कार्यं तथा होव कर्तव्योऽभिनयः स्त्रिया ॥२८९॥
यदन्तःपुरसम्बन्धं [2]कार्यं भवति नाटके ।
शृङ्गाररससंयुक्तं तत्राप्येव विधिर्भवेत् ॥२९०॥
न कार्यं शयनं रङ्गे नाट्यधर्मं विजानता ।
केनचिद्वचनार्थेन अङ्कच्छेदो विधीयते ॥२९१॥
यदा स्वपेदर्थवशादेकाकी सहितोऽपि वा ।
चुम्बनालिङ्गनं चैव तथा गुह्यं च यद्भवेत् ॥२९२॥
[3]दन्तच्छेद्यं नखक्षतं नीवीस्रंसनमेव च ।
स्तनाधरविमर्दं च रङ्गमध्ये न कारयेत् ॥२९३॥
भोजनं सलिलक्रीडां तथा लज्जाकरं तु यत् ।
एवंविधं भवेद्यत् तत्तद्रङ्गे न कारयेत् ॥२९४॥
पितृपुत्रस्नुषाश्वश्रूदृश्यं यस्मात्तु नाटकम् ।
तस्मादेतानि सर्वाणि वर्जनीयानि यत्नतः ॥२९५॥
वाक्यैः सातिशयैः श्रव्यैर्मधुरैर्नातिनिष्ठुरैः ।
हितोपदेशजननैस्तज्ज्ञैः कार्यं तु नाटकम्[4] ॥२९६॥
समागमेऽथ नारीणां वाच्यानि मदनाश्रये ।
प्रियेषु वचनानीह यानि तानि निबोधत ॥२९७॥
प्रियः कान्तो विनीतश्च नाथः स्वाम्यथ जीवितम् ।
[5]नन्दनश्चेत्यभिप्रीते वचनानि भवन्ति हि ॥२९८॥
दुःशीलोऽथ दुराचारः शठो वामो [6]विरूपकः ।
निर्लज्जो निष्ठुरश्चेति प्रायः क्रोधेऽभिधीयते ॥२९९॥

288-299 (C.XXIV. 282-293 ; B XXII. 292-304a). 1 C. कार्यं. 2 C. कार्यं. 3 C. दत्तं नखक्षतं छेद्य , B दन्तच्छेद्यं नखच्छेद्य०. 4 B. adds after this एवमन्तः पुरकृत कार्यस्त्वभिनयो बुधै . 5 B. अभिप्रीते, C. अभिप्रेतो . 6 B. विकत्थनः.

यो विप्रियं न कुरुते न चायुक्तं प्रभाषते ।
तथार्जवसमाचारः प्रिय इत्युच्यते बुधैः ॥३००॥
अन्यनारीसमुद्भूतं चिह्नं यस्य न दृश्यते ।
अधरे वा शरीरे वा स कान्त इति भण्यते ॥३०१॥
[1]संक्रुद्धोऽपि हि यो नार्या [2]नोत्तरोत्तरभाषणम् ।
परुषं वा न वदति विनीतः सोऽभिधीयते ॥३०२॥
सामदानार्थसंभोगैस्तथा लालनपालनैः ।
नारीं संभजते यस्तु स नाथ इति संज्ञितः ॥३०३॥
हितैषी रक्षणे शक्तो न मानी न च मत्सरी ।
सर्वकार्येष्वसंमूढः यः स स्वामीति कीर्तितः ॥३०४॥
नारीप्सितैरभिप्रायैर्निपुणं शयनक्रियाम् ।
करोति यस्तु संभोगे जीवितः सोऽभिसंज्ञितः ॥३०५॥
कुलीनो [3]धृतिमान् दक्षो दक्षिणो वाग्विशारदः ।
श्लाघनीयः सखीमध्ये नन्दनो नाम संज्ञित ॥३०६॥
एते वचनविन्यासा [4]रतिप्रीतिकराः स्मृताः ।
तथा चाप्रीतिवाक्यानि गदतो मे निबोधत ॥३०७॥
निष्ठुरश्चासहिष्णुर्यो मानी धृष्टो विकत्थनः ।
[5]उत्तरोत्तरवादी च स दुःशील इति स्मृतः ॥३०८॥
ताडनं बन्धनं वापि यो[ऽ]विमृश्य समाचरेत् ।
तथा परुषवाक्यश्च दुराचारः स संज्ञितः ॥३०९॥
वाचैव मधुरो यस्तु कर्मणा नोपपादयेत् ।
[6]योषितं कश्चिदप्यर्थं स शठः परिकीर्तितः ॥३१०॥
वार्यते यत्र यत्रार्थे [7]तं तमेव करोति यः ।
[8]भवेदभिनिवेशी च स वाम इति संज्ञित ॥३११॥

300-311 ( C.XXIV. 294-305 ; B.XXII. 304b-316a ). 1 B. सक्रुद्धेऽपि. 2 B. नोत्तरं प्रतिपद्यते. 3 C नीतिमान्. 4 C. रतिस्मृति-. 5 B. अनवस्थितचित्तश्च. 6 B. योषित-. 7 B. तत्तदेव. 8 B. विपरीतनिवेशी.

सरसनणचिह्नो यः स्त्रीसौभाग्यविकत्थनः[1] ।
अतिमानी तथा स्तब्धः[2] स विभ्रम इति स्मृतः ॥३१२॥
वार्यमाणो दृढतरं यो नारीमभिसर्पति[2] ।
सचिह्नः सापराधश्च स 'निर्लज्ज[3] इति संज्ञितः ॥३१३॥
'[4]योऽपराद्धस्तु रभसा नारीं सेवितुमिच्छति ।
यमसादनबुद्धिश्च निष्ठुरः सोऽभिधीयते ॥३१४॥
एते वचनविन्यासाः प्रियाप्रियविभूषिताः[5] ।
[6]नानावस्थां समासाद्य वि[चार्य] तान् समाचरेत् ॥३१५॥
एष गीतविधाने तु '[7]सुकुमारो विधिर्भवेत् ।
शृङ्गाररससंभूतो रतिसंभोगखेदजः[8] । ३१६॥
[9]यच्चैवाकाशपुरुषं परस्यवचनाश्रयम्[9] ।
[10]शृङ्गार एवं वाच्यं स्यात्तत्राप्येष विधिर्भवेत् ॥३१७॥
[11]यद्वा पुरुषसंबन्धं कार्यं भवति नाटके ।
शृङ्गाररससंयुक्तं तत्राप्येष क्रमो भवेत्[11] ॥३१८॥
एवमन्तःपुरगतः प्रयोज्योऽभिनयो बुधैः ।
दिव्याङ्गनानां तु विधिं व्याख्यास्याम्यनुपूर्वशः ॥३१९॥
नित्यमेवोज्ज्वलो वेषो नित्यं प्रमुदितं मनः ।
नित्यमेव सुखः कालो [12]देवीनां ललिताश्रय ॥३२०॥
न चेर्ष्या नैव च क्रोधो नासूया न प्रसादनम् ।
दृश्यते दिव्यपुंसां हि शृङ्गारे योषितं प्रति ॥३२१॥

312-321 (C.XXIV. 306-313; B.XXII. 316b-326a). 1 B. विकत्थन॰. 2 B. दृतमर्पति. 3 C. विलज्ज. 4 C. सापराधस्तु. 5 B. विभाषिता॰. 6 B. मर्नकीर्तिभिषिताः कार्या बहवोऽन्योऽपि नाटके. 7 B. सुकुमारे. 8 B. ॰खेदनः. 9 C. om. 316b-317a. 10 C. शृङ्गाररसवाच्यः 11 C. om. 318. 12 B. देवता.

[1]यदा [2]मानुषसंयोगो दिव्यानां योषितां भवेत् ।
तदा [3]सर्वे प्रकर्तव्या ये भावा मानुषाश्रयाः ॥३२२॥
[4]शापाद् भ्रंशस्तु दिव्यानामङ्गनानां यदा भवेत् ।
कार्यो मानुषसंयोगस्तथा [5]चैवोपसर्पणम् ॥३२३॥
पुष्पैर्भूषणजैः शब्दैरदृश्यात्रापि या भवेत्[6] ।
पुनः सन्दर्शनं दत्वा क्षणादन्तर्हिता भवेत् ॥३२४॥
वस्त्राभरणमाल्यैस्तु [7]लेखसंप्रेषणैरपि ।
[8]ईदृशैरभ्युपगमैः [9]समुन्माद्यस्तु नायकः ॥३२५॥
उन्मादनात् समुत्पन्नः कामो रतिकरो भवेत् ।
स्वभावोपगतो यस्तु [10]नानावस्त्वर्थभावकः ॥३२६॥
ये भावा मानुषाणां तु यदङ्गं यच्च चेष्टितम् ।
तत्सर्वं मानुषं प्राप्य कार्या दिव्यैरपि द्विजाः ॥३२७॥
एवं राजोपचारो हि कर्तव्योऽभ्यन्तराश्रयः[11] ।
बाह्यमप्युपचारं तु व्याख्यास्याम्यथ वैशिके ॥३२८॥

इति भारतीये नाट्यशास्त्रे सामान्याभिनयो नाम
चतुर्विंशोऽध्यायः ।

322-328 (C.XXIV. 314-320; B.XXII. 327b-333a). 1 B. reads before this ये भावा मानुषाणा स्युर्यदङ्गं यच्च चेष्टितम् । सर्वं तदेव कर्तव्यं दिव्यैर्मानुषसङ्गमे. 2 B. मानुषसंभोगो. 3 B. सर्वो°. 4 BS शापभ्रंशात्तु ··तथा चापत्यलिप्सया. 5 B. श्रृङ्गाररससंश्रय°. 6 B. अदृश्यापि प्रनोभयेत्. 7 C. लेखसम्प्रेषणैरपि. 8 B. ईदृशैरुपचारैस्तु 9 C. समुन्मादस्तु नाटके. 10 C. नानारत्यार्थभावकः, B नानावस्त्वर्थभाविक°. 11 C. ह्यन्तराश्रयः.

विशेषयेत् कलाः सर्वाः यस्मात्तस्माद्वैशेषिकः[1]।
[2]वेशोपचारतो वापि वैशिकः परिकीर्तितः ॥१॥
यो हि सर्वकलोपेतः सर्वशिल्पविचक्षणः।
[3]स्त्रीचित्तग्राहकश्चैव वैशिकः स भवेत् पुमान् ॥२॥
गुणास्तस्य तु विज्ञेयाः स्वशरीरसमुद्भवाः।
आहार्याः सहजाश्चैव त्रयस्त्रिंशत्समासतः ॥३॥
शास्त्रविचित्छिल्पसंज्ञो रूपवान् प्रियदर्शनः।
विक्रान्तो धृतिमांश्चैव वयोवेषकुलान्वितः[4] ॥४॥
सुरभिर्मधुरस्त्यागी सहिष्णुरविकत्थनः।
अशङ्कितः प्रियाभाषी चतुरः सुभगः[5] शुचिः ॥५॥
कामोपचारकुशलो दक्षिणो देशकालवित्।
अदीनवाक्यः [6]स्मितवाक् वाग्मी दक्षः प्रियंवदः ॥६॥
[7]अलुब्धः संविभागी च श्रद्दधानो दृढव्रतः[8]।
गम्यासु चाप्यविस्रम्भी मानी चेति स वैशिकः ॥७॥
अनुरक्तः[9] शुचिर्दान्तो[10] दक्षिणः प्रतिपत्तिमान्।
[11]मर्वेचित्ताभियायी च [12]वयस्यस्तस्यवद् गुणाः[13] ॥८॥
विज्ञानगुणसम्पन्ना [14]कथनी लिङ्गिनी तथा।
* रङ्गोपजीवना चापि प्रतिपत्तिविचक्षणा[15] ॥९॥

*1-9* (C. *same*; B.XXIII. *same*). 1 Ag. वैशेषिका, B.C. ०तु वैशिकः. 2 B. वेशोपचारे साधुर्वा, C. वैश्योपाचार०. 3 B. स्त्रीचित्तग्रहणाभिज्ञो. 4 C. ०वेशगुणान्वितः. 5 B. शुभदः, By. शुभगः. 6 B. स्मितवान्. 7 B. अलुब्धः. 8 B. दृढस्मृतिः. 9 B. अनुयुक्तः. 10 B. शुचिर्दक्षो. 11 C. सर्वेच्छिद्राभिशायी. 12 B.C. वयस्य(स्या)स्तस्य. 13 B. तद्गुणाः. 14 B. कथिनी. 15 B. om. 9b.

प्रतिवेश्या सखी दासी कुमारी कारुशिल्पिका ।
धात्री पाषण्डिनी चैव [1]रूप्यस्त्रीक्षणिका तथा ॥१०॥
प्रोत्साहनेषु कुशला मधुरकथा दक्षिणा च कालज्ञा ।
[2]लडहा संवृतमन्त्रा दूतीत्येभिर्गुणैः कार्या ॥११॥
[3]तया प्रोत्साहनं कार्यं [4]नानादर्शितकारणम् ।
यथोक्तकथनं चैव तथा भावप्रदर्शनम् ॥१२॥
* [5]न जडं रूपवन्तं च नार्थवन्तं न चातुरम् ।
* दूतं वापि हि दूतीं वा बुधः कुर्यात् कदाचन ॥१३॥
कुलभोगधनाधिक्यं [6]कार्यं चैव विकत्थनम् ।
दूती [7]निवेदयेत्काममर्थानां चैव भाषणम् ॥१४॥
[8]नवकामप्रवृत्तायाः कुद्धाया [9]वा समागमः ।
[10]नानोपायैः प्रकर्तव्यो दूत्या हि पुरुषाश्रयः ॥१५॥
उत्सवे रात्रिसञ्चारे उद्याने [11]प्रातिवेश्मनि ।
धात्रीगृहे सखीगेहे तथा चैव निमन्त्रणे ॥१६॥
व्याधितव्यपदेशेन शून्यागारसमाश्रये[12] ।
एवं समागमः कार्यो नृणां प्रथमसङ्गमे ॥१७॥
एवं समागमं कृत्वा [13]नानोपायविधानजम् ।
अनुरक्तां विरक्तां वा [14]चिह्नैः समुपलक्षयेत् ॥१८॥
स्वभावभावातिशयैर्या नारी [15]मदनार्दिता ।
[16]करोत्यनिभृतं लीलां ज्ञेया सा मदनातुरा ॥१९॥

10-19 (C. 10, 12, 13-19; B. XXIII 11-19a). 1 B. तथा रङ्गोपजीविनी. 2 C. लसहा. 3 B. तयाप्यु॰. 4 C नानादर्शनकारणम्. 5 B. reads this as 12b-13a. 6 B. कुलाऽधिकविकत्थनम्. 7 B. काममर्थं चैवानुदर्शयेत्; C. कार्यमर्थानां चैव भाषणम्. 8 B. न चाकामप्रवृत्ताया. 9 B. वापि सङ्गमः. 10 B. नानुपाय.. 11 B. मित्रवेश्मनि. 12 B. निवेशने 13 B. सोपाय विधिपूर्वकम्. 14 B. लिङ्गाकारैस्तु 16 B. मदनातुरा. 16 B. करोति निभृता.

[1]गुणान् सखीनामाख्याति [2]सधनं प्रददाति च।
संपूजयति मित्राणि द्वेष्टि शत्रुजनं तथा' ॥२०॥
[3]समागमं प्रार्थयते [4]दृष्ट्वा हृष्यति चाधिकम्।
[5]तुष्यत्यस्य कथाभिस्तु सस्नेहश्च निरीक्षते ॥२१॥
सुप्ते च पश्चात् [6]स्वपिति चुम्बिता प्रतिचुम्बति।
उत्तिष्ठत्यपि पूर्वं च तथा क्लेशसहापि च ॥२२॥
[7]समा दुःखे सुखे च स्याद्यक्रोधमुपयाति च।
एवंविधैर्गुणैर्युक्ता याऽनुरक्ता तु सा भवेत् ॥२३॥
विरक्तायास्तु लिङ्गानि चुम्बितास्यं प्रमार्जति[8]।
अनिष्टां च कथां ब्रूते प्रियमुक्तापि कुप्यति ॥२४॥
प्रद्वेष्टि चास्य मित्राणि [9]तस्य शत्रुं प्रशंसति।
शेते पराङ्मुखी चैव शय्यायां पूर्वशायिनी ॥२५॥
सुमहत्युपचारेऽपि [10]न तुष्यति कथंचन।
न क्लेशं सहते चापि तथा कुप्यत्यकारणे ॥२६॥
* [11]न च चक्षुर्ददात्यस्य न चैनमभिनन्दति[11]।
[12]यस्यामेवं विकाराः स्युर्विरक्तां तां विनिर्दिशेत् ॥२७॥
[13]हृदयग्रहणानि स्युर्व्यापारस्य विचेष्टितम्।
अर्थप्रदर्शनं चैव [14]तथा सद्भावदर्शनम् ॥२८॥
[15]अर्थोपन्यास एव स्यादर्थदानं तथैव च।
[16]व्याजात्यागोऽथ निकटाद् भार्योपक्षेप एव च ॥२९॥

20-29 (C. 20-29; B.XXIII. 19b-28) 1 C गुणाः सखीनामाख्याति; B. सखीमध्ये गुणान् ब्रूते. 2 B. सदा 3 B गमागमे सखीनां या. 4 C. हृष्टा, B. दृष्ट्वा भवति. 5 C तुष्यन्त्यस्य. 6 C झटिति. 7 B. उत्सवेमुदिता या च व्यसने या च दु खिता. 8 B. नाभिचुम्बति. 9 B. भजतेऽरिजन तथा. 10 B. तोषमुपयाति च 11 B. om. 27a 12 B. या स्यादेव प्रकारा तु 13 B. हृदयग्रहणोपायमस्या व्यापार चेष्टितम्. 14 B. उपदान पुनर्भवेत्. 15 B. read 29a. differently 16 C. व्याधिताना परित्यागो.

दारिद्र्यात् व्याधितो दुःखात् पारुष्यादश्रुताच्चथा[1] ।
प्रवासगमनान्मानादतिलोभादतिक्रमात् ॥३०॥
[2]अतिवेलागमत्वाच्च तथा [3]विप्रियसेवनात् ।
एभिः स्त्री पुरुषो वापि कारणैस्तु विरज्यते ॥३१॥
भावग्राहीणि नारीणां कार्याणि मदनाश्रये ।
[4]य[तश्] च प्रीयते नारी प्राप्यते पुरुषैरथ ॥३२॥
लुब्धामर्थप्रदानेन कलाज्ञानेन पण्डिताम् ।
चतुरां [5]लडहत्वेन ह्यनुवृत्त्या तु मानिनीम् ॥३३॥
भूषणग्र[ा]हणाच्चापि [6]शृङ्गारमुखता भवेत् ।
पुरुषद्वेषिणीमिष्टकथायोगैरुपक्रमेत् [7]॥३४॥
उपक्रीडनकैर्बालां [8]भीतामाश्वासनेन च ।
गर्वितां नीचसेवाभिरुदात्तां शिल्पदर्शनैः ॥३५॥
सर्वासामेव नारीणां त्रिविधा प्रकृतिर्मता ।
उत्तमा मध्यमा नीचा वेश्यानां तु [9]स्वभावजा ॥३६॥
या विप्रियेऽपि [10]निष्ठुरं न वदत्यप्रियं प्रियम् ।
अदीर्घरोषा च तथा [11]कलासु च विचक्षणा ॥३७॥
काम्यते पुरुषैर्या तु कुलभोगधनादिकैः[12] ।
कुशला कामतन्त्रेषु दक्षिणा रूपशालिनी ॥३८॥
गृह्णाति कारणाद् रोषं गतेर्ष्या प्रब्रवीति च ।
कार्यकालविशेषज्ञा [13]सुभगा सा स्मृतोत्तमा ॥३९॥
पुंसः कामयते या तु पुरुषैर्या तु काम्यते ।
कामोपचारकुशला प्रतिपक्षाभ्यसूयिका ॥४०॥

30-40 (C. 30-40; B.XXIII. 29-39) 1 B. ०ष्याद्दुःश्रवात्तथा. 2 B. अतीवाभिगमाच्चापि. 3 B. विप्रियकारणात्. 4 C या न च प्रीयते, B. तुष्टिमेति यथा (यतो ?) नारी. 5 C. क्रीडनत्वेन. 6 B. शृङ्गारसुस्वरो, C. शृङ्गारसुखत्रो. 7 B. ०योगैरुपक्रमैः. 8 B. भीरुमा०. 9 C. निबोधत 10 B. निष्ठुरं. 11 C. कलाशिल्प०. 12 C. धनाधिकैः 13 B. सुरूपा

ईर्ष्यातुरा चानिभृता क्षणकोपाभिगर्विता[1] ।
क्षणप्रसादा या नारी सा नारी मध्यमा स्मृता ॥४१॥
अस्थाने कोपना या तु [2]दुःशीला चातिमानिनी ।
चपला परुषा चैव दीर्घरोषाऽधमा स्मृता ॥४२॥
सर्वासां नारीणां [3]यौवनलीलाश्चतस्रः स्युः ।
नेपथ्यरूपचेष्टागुणैस्तु[4] शृङ्गारमासाद्य ॥४३॥
[5]पीनोरुगण्डजघनाधरस्तनं कर्कशं रतिमनोज्ञम् ।
[6]सुरतं प्रति सोत्साहं प्रथमं तद्यौवनं ज्ञेयम् ॥४४॥
गात्रं [7]पूर्णावयवं पीनौ च पयोधरौ कृशं मध्यम् ।
कामस्य सारभूतं यौवनमेतद् द्वितीयं तु ॥४५॥
[8]सर्वश्रीसं[भृ]तं [9]रतिकरमुन्मादनं बहुगुणाढ्यम् ।
कामाप्यायितशोभं यौवनमेतत् तृतीयं तु ॥४६॥
नवयौवने व्यतीते तथा द्वितीये [10]तृतीयजे चापि ।
शृङ्गारशत्रुभूतं यौवनमेतच्चतुर्थं तु ॥४७॥
[11]अ[म्]लानगण्डजघनाधरस्तनशोभगात्रलावण्यम्[12] ।
[13]कामं प्रति नोत्साहं यौवनमेतच्चतुर्थं तु ॥४८॥
नात्यर्थं क्लेशसहा न कुप्यति न हृष्यति [14]प्रतिस्त्रीषु ।
[15]सौम्यगुणेष्वासक्ता [च] नारी नवयौवना ज्ञेया ॥४९॥
किञ्चित्करोति मानं किञ्चित्कोपं [16]च मत्सरं चैव ।
क्रोधे च भवति तूष्णीं यौवनमेतद् द्वितीयं तु ॥५०॥

41-50 (C. 41-50; B.XXIII. 40-49). 1 B. °पाविगर्विता. 2 B. दुष्शीलाति°. 3 B. यौवनभेदाः. 4 B. °गुणेन. 5 C. °स्तनकर्कशं. 6 B. शृङ्गार-स्तुत्साहं. 7 C. पीनवयवं. 8 By °श्रीसम्भृतं, B. °श्रीसंयुक्तं, C. °श्रीसंपूर्णं. 9 B. रतिकरणोत्पादनं रतिगुणाढ्यम्. 10 B. तृतीयके 11 BC. अम्लान. 12 B. किञ्चिद्गतलावण्यम. 13 B. कामं प्रति नोच्छ्वास, Bb. कामं प्रति सोत्साहं, C. कामे च निरुत्साहं. 14 B. क्षौम्यः. 15 B. सौख्यगुणेष्ववसक्ता. 16 C. समत्सरं च.

रतिसम्भोगे दक्षा [1]प्रतिपक्षासूयिनी [2]गुणाढ्या च ।
अनिभृतगर्वितचेष्टा नारी ज्ञेया तृतीये तु ॥५१॥
[3]पुरुषग्रहणसमर्था [4]कामाभिज्ञाप्यमत्सरोपेता ।
[5]अविरहमिच्छति नित्यं नारी ज्ञेया चतुर्थे तु ॥५२॥
[6]यौवनलम्भा ह्येते विज्ञेया नाटके तु चत्वारः ।
पुनरेव तु [7]पुरुषगुणान् [8]कामतन्त्रे प्रवक्ष्यामि ॥५३॥
चतुरोत्तमौ मध्यमस्तथाऽधमः संप्रवृत्तकश्चैव[9] ।
[10]स्त्रीणां प्रयोगविषये विज्ञेयाः पुरुषास्त्विमे पञ्च ॥५४॥
[11]समदुःखः क्लेशसहः प्रणयक्रोधप्रसादने कुशल[12] ।
[13]योऽर्थी नात्मच्छन्दो दक्षश्चतुरः स[13] बोद्धव्यः ॥५५॥
यो विप्रियं न कुरुते नार्या किञ्चिद्विरागसंज्ञातम्[14] ।
[15]अ[ा]ज्ञातहृदयेप्सितो ज्ञेयः [16]स्मृतिमान् स तु ज्येष्ठः ॥५६॥
मधुरस्त्यागी रागं [17]नयति च मदनस्य [18]नापि वशमेति ।
अवमानितश्च नार्या विरज्यते [19]स च भवेज्ज्येष्ठः ॥५७॥
सर्वार्थैर्मध्यस्थो भावग्रहणं करोति यो नार्याः ।
कञ्चिद्दोषं दृष्ट्वा विरज्यते मध्यमः पुरुषः ॥५८॥
काले दाता ह्यवमानितोऽपि न क्रोधमतितरामेति ।
दृष्ट्वा व्यलीकमात्रं विरज्यते मध्यमोऽयमपि ॥५९॥

51-59 (C. 51-59; B XXIII. 50-58). 1 C. प्रतिपन्ना. 2 B. रतिगुणाढ्या. 3 B. चित्तग्रहणसमर्था 4 B. कामाभिज्ञा त्वमत्सरोपेता. 5 B. अविरहितमिच्छति पुरुषं 6 B. यौवनभेदा. 7 B. पुरुषाणां च. 8 C. कामितन्त्रे. 9 B. च नीचः प्रवृत्तकश्चैव, C. अधमः संप्रदश्च, By अधमः संप्रवृत्तकः. 10 B. स्त्रीसप्रयोग॰. 11 समदुःखक्लेशसह॰. 12 C. रत्युपचारे निपुण. 13 C. च. 14 B. किञ्चिद्विरागसंज्ञातम्, B. धीरोदात्तः प्रियंवदो मानी. 15 C. ज्ञातहृदयवस्तो, B. अज्ञातेप्सितहृदयः. 16 B. धृतिमान् स तु ज्येष्ठः. 17 C. न याति, B. dh, नयति 18 B. चापि. 19 B. चोत्तम. स पुमान्

अवमानितोऽपि नार्या निर्लज्जतयोपसर्पति य एनाम्[1] ।
[2]अन्यतरं संक्रान्तामन्यस्नेहपरावृत्तभावश्च ॥६०॥
अभिन्यक्ते व्यलीके प्रत्यक्षं रज्यते दृढतरं यः ।
[3]मित्रैर्निवार्यमाणोऽपि सोऽधमो नाम विज्ञेयः ॥६१॥
अविगणितभयामर्षो [4]मूर्खः प्रकृतिप्रकृष्टभावश्च ।
एकान्तदृढग्राही [5]नि[र्व्या]जः कामतन्त्रेषु ॥६२॥
[6]रतिकलहसंप्रहारेष्वकर्कशः क्रीडनीयकः स्त्रीणाम् ।
एवंविधो विधिज्ञैर्विज्ञेय. संप्रवृत्तः स्यात्[7] ॥६३॥
नानाशीलाः स्त्रियो ज्ञेया [8]गूढार्थहृदयाश्च ताः ।
विज्ञाय च यथासत्त्वमुपसर्पेत्तु ता बुधः ॥६४॥
भावाभावौ विदित्वा च ततस्तैस्तैरुपक्रमैः ।
पुमानुपचरेन्नारीं कामतन्त्रं समीक्ष्य तु ॥२५॥
साम चैव प्रदानञ्च भेदो दण्डस्तथैव च ।
उपेक्षा चैव कर्तव्या नारीणां विषयं प्रति ॥६६॥
तवास्मि मम चैवासि त्वमहं ते त्वञ्च मे प्रिया ।
आत्मोपक्षेपणकृतं तत्सामेत्यभिधीयते ॥६७॥
काले[ऽ]काले प्रदातव्यं धनं विभवमात्रया ।
[9]यन्निमित्तान्तरं कृतं प्रदानं नाम तत्स्मृतम् ॥६८॥
भेदः स्यात्तत्प्रियस्येह सोपायं दोषदर्शनम् ।
बन्धनं ताडनं वापि दण्ड इत्यभिधीयते ॥६९॥
मध्यस्थां मानयेत्साम्ना लुब्धामर्थप्रदानतः ।
अन्यावबद्धभावां च भेदेन प्रतिपादयेत् ॥७०॥

60-70 (C. 60-70; B.XIII. 59-69). 1 B. अभ्युपेत्यविकृतास्य॰ 2 B. अन्यतरं संक्रान्तां, C. संक्रान्तान्तरम्॰. 3 B. ॰निवार्यमानो विज्ञेयो. 4 B. मूर्खप्रकृतिः प्रसह्यहासश्च. C. प्रकृतिप्रकृष्टभावश्च, Bd. प्रहृष्टभावश्च. 5 Mss. निर्व्रजः. 6 C. सम्प्रहारेषु कर्कशः. 7 B. संप्रवृत्तस्तु. 8 B. गूढार्थहृदयेप्सिताः 9 C. यन्निमित्तान्तरं कृतं.

दुष्टाचारे समारब्धे [1]त्वन्यभावे समुत्थिते ।
दण्डः पातयितव्यो हि मृदुबन्धनताडनैः[2] ॥७१॥
सामादीनां [3]प्रयोगे तु परिक्षीणे यथाक्रमम् ।
न [4]स्यायावशमापन्ना तामुपेक्षेत बुद्धिमान् ॥७२॥
मुखरागेण नेत्रैर्वा [5]विज्ञेयस्त्वङ्गचेष्टितैः ।
द्वेष्यो वापि प्रियो वापि मध्यस्थो वापि योषिताम् ॥७३॥
अर्थहेतोस्तु वेश्यानामप्रियो [6]वा यदि प्रियः ।
गम्यो हि पुरुषो नित्यं मुक्त्वा दिव्यनृपस्त्रियः ॥७४॥
द्वेष्यं तु प्रियमित्याहुः [7]प्रियमप्यप्रियं तथा ।
दुःशीलं च सुशीलं च निर्गुणं गुणवानिति ॥७५॥
प्रहसन्तीव नेत्राभ्यां यं दृष्ट्वोत्फुल्लतारका ।
[8]प्रसन्नमुखरागा च लक्ष्यते भावरूपणैः[9] ॥७६॥
उपचारफलत्वाच्च विप्रलम्भकृतेन च ।
तासु निष्पद्यते कामः काष्ठादग्निरिवोत्थितः ॥७७॥
योषितामुपचारोऽयं यथोक्तो वैशिकाश्रयः ।
कार्यः प्रकरणे चापि यथायोगं च नाटके ॥७८॥
एवं वेश्योपचारोऽयं तज्ज्ञैः कार्यो द्विजोत्तमाः ।
अत ऊर्ध्वं प्रवक्ष्यामि [10]चित्रस्याभिनयं प्रति ॥७९॥

इति भारतीये नाट्यशास्त्रे [11]बाह्योपचारो नाम
पञ्चविंशोऽध्यायः ॥

71-79 (C. 71-79; B XXIII. 70-80) 1 C. मध्यभावे. 2 B. adds here a couplet. 3 C प्रमादे (प्रदाने ?) 4 C. भवेद्वशगा या तु, Bn. भावाद्वशमापना. B. स्याया च समापन्ना. 5 B. विज्ञेयो भावचेष्टितैः. 6 B. प्रियो वा यदि वाप्रियः. 7 B. प्रिय प्रियतरं तथा. 8 B. प्रसन्नमुखरागाच्च. 9 B. adds here a couplet, which is an echo of 65 above. 10 B. प्रकृतीनां तु लक्षणम्. 11 B. om. बाह्योपचार नाम

# षड्विंशोऽध्यायः

[1]अङ्गाभिनयनस्येह यो विशेषः क्वचित् क्वचित् ।
अनुक्त उच्यते [2]चित्रः स चित्राभिनयः स्मृतः ॥१॥
उत्तानौ तु करौ कृत्वा [3]पताके स्वस्तिकं तथा ।
उद्वाहितेन शिरसा तथा चोर्ध्वनिरीक्षितैः ॥२॥
प्रभातं गगनं [4]रात्रिं प्रदोषं दिवसं तथा ।
ऋतून् [5]घनान् [5]वनान्तांश्च विस्तीर्णांश्च जलाशयान् ॥३॥
दिशो महान् सनक्षत्रान् किञ्चित् स्वस्थं च यद्भवेत् ।
तस्य त्वभिनयः कार्यो नानादृष्टिसमन्वितः ॥४॥
एभिरेव करैर्भूयस्तेनैव शिरसा पुनः ।
अधोनिरीक्षणेनैव भूमिस्थान् संप्रदर्शयेत् ॥५॥
स्पर्शस्य [6]ग्रहणं चैव [7]तयोल्लुकसनेन च ।
चन्द्रज्योत्स्नां सुखं वायुं रसगन्धौ विनिर्दिशेत् ॥६॥
वस्त्रावकुण्ठनात् सूर्यं [8]रजोधूमानलांस्तथा ।
भूमितापं तथा चोष्णं कुर्याच्छायाभिलाषत ॥७॥
ऊर्ध्वाकेकरदृष्टिस्तु मध्याह्ने सूर्यमादिशेत् ।
[9]उदयास्तमने] चैव [10]गम्भीरार्थैः प्रदर्शयेत् ॥८॥
यानि सौम्यार्थयुक्तानि सुखभावकृतानि च ।
[11]गात्रस्पर्शैः सरोमाञ्चैस्तेषामभिनयो भवेत् ॥९॥
यानि स्युस्तीक्ष्णरूपाणि तानि त्वभिनयेन्नरः ।
अङ्गस्पर्शैस्तयोद्वेगैस्तथा [12]मुखविकुण्ठनैः ॥१०॥

1-10 (C. *same* ; B XXV, *same*). 1 B. अङ्गाद्यभिनयस्यैव. 2 B. चित्रः ; C. यस्मात्. 3 B. स्वस्तिकौ पार्श्वसंस्थितौ. 4 B रात्रिः. 5 C. घनान्धकारांश्च. 6 B. ग्रहणे चैव. 7 C. तयोल्लुकसनेन च. 8 B. ०धूमानिलांस्तथा. 9 Ag. उदयास्तमयोः, B.C. उदयास्तगतं. 10 B. विस्मयार्थैः. 11 B. अंसंस्पर्शैः. 12 C. मुखविघूर्णनैः, B. मुखविकुण्ठनैः.

गम्भीरोदात्तसंयुक्तानेतानभिनयेद् बुधः ।
साटोपैश्च सगर्वैश्च गात्रैः सौष्ठवसंयुतैः ॥११॥
[1]यज्ञोपवीतदेशे तु कृत्वाराटौ करावुभौ ।
स्वस्तिकौ [2]विच्युतौ [3]हारस्रग्दामार्थान् निदर्शयेत् ॥१२॥
भ्रमणेन प्रदेशिन्या दृष्टेः परिगमेन च ।
[4]अलपल्लवपीडातः सर्वार्थग्रहणं भवेत् ॥१३॥
श्रव्यं श्रवणयोगेन दृश्यं दृष्टिविलोकनैः ।
आत्मस्थं वा परस्थं वा मध्यस्थं वा विनिर्दिशेत् ॥१४॥
विद्युदुल्का [5]घनरवो विस्फुलिङ्गार्चिषस्तथा ।
त्रस्ताङ्गाक्षिनिमेषैश्च तेऽभिनेया: प्रयोक्तृभिः ॥१५॥
उद्वेष्टितपरावृत्तौ करौ कृत्वा नतं शिरः ।
असंस्पर्शे त्वनिष्टे च [6]जिह्मदृष्टेन कारयेत् ॥१६॥
वायुमुष्णं [7]नभस्तेजो मुखप्रच्छादनेन च ।
रेणुतोयपतङ्गानां [8]भ्रमराणां च वारणम् ॥१७॥
कृत्वा स्वस्तिकसंस्थानौ पद्मकोशावधोमुखौ ।
सिंहर्क्षवानरव्याघ्रश्वापदांश्च निरूपयेत् ॥१८॥
स्वस्तिकौ त्रिपताकौ तु गुरूणां पादवन्दने ।
[9]स्वस्तिकौ कटकाख्यौ तु प्रतोदग्रहणे स्मृतौ ॥१९॥
एकं द्वे [10]त्रीणि चत्वारि पञ्च षट् सप्त चाष्ट वा ।
नव वा दश [11]वा चैव गणनाङ्गुलिभिर्भवेत् ॥२०॥
दशाख्याश्च शताख्याश्च सहस्राख्यास्तथैव च ।
पताकाभ्यां तु हस्ताभ्यामभिनेयाः प्रयोक्तृभिः ॥२१॥

12-16 (C. *same* ; B.XXV. *same*). 1 B. ॰देशस्थमरालं हासमादिशेत्. 2 C. विद्युतौ. 3 C. हस्तौ रत्नदामानि निर्दिशेत्. 4 B. अलपद्मकपीडायाः. 5 B. घनरवा॰. 6 C. चिह्न॰. 7 B. तमस्तेजः. 8 B. भ्रमरांश्च निवारयेत्. 9 B. खटकस्वस्तिकौ चापि. 10 B. द्वि. 11 C. दश वा चैव गणनाङ्गुलिर्भवेत्, B. वापि स्युर्गणनाङ्गुलिभिर्भवेत्.

दशास्यगणनायास्तु परतो या भवेदिह ।
वाक्यार्थेनैव [1]साध्या सा परोक्षाभिनयेन च ॥२२॥
[2]छत्रध्वजपताकाश्च निर्देश्या दण्डधारणैः ।
नानाप्रहरणं चैव निर्देश्यं धारणाश्रयम् ॥२३॥
एकचित्तोऽप्यधोदृष्टिः शिरः किञ्चिन्नतं भवेत् ।
सव्यहस्तश्च [3]सन्दंशः स्मृतौ ध्याने च निर्दिशेत् ॥२४॥
उद्वाहितं शिरः कृत्वा हंसपक्षौ प्रदक्षिणौ ।
[4]अपत्यरूपणे [5]कार्यमुच्छ्रये च प्रयोक्तृभिः[6] ॥२५॥
अरालं तु शिरःस्थाने [7]समुद्वाह्य तु वामतः ।
गते निवृत्ते ध्वस्ते च [8]श्रुते वाक्ये च योजयेत् ॥२६॥
सर्वेन्द्रियस्वस्थतया दिक्प्रसन्नतया तथा ।
[9]विचित्रभूतलालोकैः शरदं तु विनिर्दिशेत् ॥२७॥
गात्रसङ्कोचनेनापि सूर्याग्निपटसेवनात्[10] ।
हेमन्तस्त्वभिनेयः स्यात् पुरुषैर्मध्यमाधमैः[11] ॥२८॥
शिरोदन्तोष्ठकम्पेन गात्रसङ्कोचनेन च ।
कूजितैश्च ससीत्कारैरधमः शीतमादिशेत् ॥२९॥
अवस्थान्तरसंप्राप्तैरुत्तमैश्च कदाचन ।
शीताभिनयनं कार्यं दैवव्यसनसम्भवे ॥३०॥
[12]ऋतुजानां तु पुष्पाणां गन्धाघ्राणैस्तथैव च ।
रूक्षाच्च वायोः स्पर्शाच्च शिशिरं रूपयेद् बुधः ।३१॥

22-31 (C. *same* ; B XXV. 22-32). 1 B साध्यासौ. 2 C. चित्रध्वज. 3 C. सन्दंशस्मृतौ ध्यानेन, B सन्दंशः स्मृती ध्याने वितर्किते. 4 C. अपत्यरूपेण. 5 B. कार्यावुभयौ. 6 B. adds उद्वाहितं शिरः कृत्वा हंसवक्त्रं तथोर्ध्वगम् । प्रसादयच यं मार्गं दीर्घसत्त्वं च निर्दिशेत्. 7 C. समुद्वाद्यं. 8 B. श्रान्तवाक्ये. 9 B. विचित्रकुसुमालोकैः. 10 B. ॰पटुसेवनात्, C. ॰पटवेशनात् 11 C. ॰मध्यमोत्तमैः. 12 C. मधुदानान्ध, B. ऋतुजाना तु.

प्रमोदजननारम्भैरुपभोगैस्तथोत्सवैः[1] ।
वसन्तस्त्वभिनेतव्यो नानापुष्पप्रदर्शनात् ॥३२॥
स्वेदापमार्जनाच्चापि भूमितापैः सवीजनैः ।
उष्णाच्च वायोः स्पर्शाच्च ग्रीष्मं त्वभिनयेद् बुधः ॥३३॥
[2]कदम्बनिम्बकुटजैः शाद्वलैः सेन्द्रगोपकैः ।
[3]कदम्बकैर्मयूराणां प्रावृषं संनिरूपयेत् ॥३४॥
[4]मेघौघनादगम्भीरधाराप्रपतनैरपि[4] ।
विद्युन्निर्घातघोषैश्च वर्षरात्रं[5] विनिर्दिशत् ॥३५॥
यद्यच्च चिह्नं वेषो वा कर्म वा रूपमेव वा ।
ऋतुः स तेन निर्देश्य इष्टानिष्टार्थदर्शनात् ॥३६॥
एतानृतूनर्थवशात् प्रयुञ्जीत [6]यथारसम् ।
सुखितेषु [7]सुखोपेतान् [8]दुःखार्तौ [9]दुःखसंयुतान्[10] ॥३७॥
भावाभिनयनं कुर्यात् विभावानां निदर्शनैः ।
तथैव चानुभावानां भावात् सिद्धिः प्रकीर्तिना ॥३८॥
विभावेनाहृतं कार्यमनुभावेन [11]रूप्यते ।
[12]आत्मानुभवनं भावो विभावः परदर्शनम् ॥३९॥
गुरुर्मित्रं सखा स्निग्धः सम्बन्धी बन्धुरेव वा ।
आवेद्यते हि यः प्राप्तो विभावः स तु संज्ञित ॥४०॥
यस्तस्य [13]संभ्रमोत्थानमर्घासनपरिग्रहः ।
पूजनं क्रियते [14]वाचा सोऽनुभावः प्रकीर्तितः ॥४१॥

32-41 (C. *same* ; B.XXV. 33-33 ). 1 B. ॰भोगैः पृथग्विधैः. 2 B. ॰नीपकुटपैः. 3 N. केकाभिश्च, B. मेघवातैः सुखस्पर्शैः. 4 B. तदा for अपि. 5 B. वर्षारात्रं. 6 B. रसानुगान् 7 C. सुखोपेताम् 8 B. दुःखार्थान्. 9 B. दुःख-संयुताम्. 10 B. adds यो येन भावेनाविष्टः सुखदेनेतरेण वा । स तदाहितसंस्कारः सर्वं पश्यति तन्मयम्. 11 B. नीयते. 12 B. आत्मानुभवनं, C. आत्माभिनन्दनं. 13 C. सम्भ्रमोत्थान. 14 B. मधुरा.

एवमन्येष्वपि [1]तथा [2]नानाकार्यप्रदर्शनात् ।
विभावो वापि भावो वा विज्ञेयोऽर्थवशाद् बुधैः ॥४२॥
[3]यश्चापि प्रतिसन्देशो दूतस्येह [4]प्रतीयते ।
सोऽनुभाव इति ज्ञेयः प्रतिसन्देशदर्शितः ॥४३॥
एवं भावो विभावो वा अनुभावस्तथैव च[5] ।
पुरुषैरभिनेयः स्यात् प्रमदाभिस्तथापि वा ॥४४॥
स्वभावाभिनये स्थानं पुंसां कार्यं तु वैष्णवम् ।
आयतं चावहित्थं वा[6] स्त्रीणां कार्यप्रयोगतः ॥४५॥
प्रयोजनवशाच्चैव [7]स्थानान्यन्यानि योजयेत् ।
नानाभावाभिनयनैः प्रयोगैश्च पृथग्विधैः[8] ॥४६॥
धैर्यलीलाङ्गसम्पन्नं पुरुषाणां विचेष्टितम् ।
मृदुलीलाङ्गहारैश्च स्त्रीणां कार्यं तु चेष्टितम् ॥४७॥
करपादाङ्गसञ्चारः स्त्रीणां तु ललितो भवेत् ।
[9]सुधीरश्चोद्धतश्चैव पुरुषाणां [10]प्रकीर्तितः[11] ॥४८॥
नराणां प्रमदानां च [12]शब्दार्थाभिनयः पृथक् ।
[13]भावानुभावनं युक्तं व्याख्यास्याम्यनुपूर्वशः ॥४९॥
आलिङ्गनेन गात्राणां सस्मितेन च चक्षुषा ।
[14]यथोल्लुकसनाच्चापि हर्षं [15]संयोजयेद् बुधः ॥५०॥
क्षिप्रं [16]संजातरोमाञ्चा बाष्पेणावृतलोचना ।
कुर्वीत नर्तकी हर्षं प्रीत्या वाक्यैश्च सस्मितैः ॥५१॥

42-51 (C. 42-50; B.XXV. 44-54[2]). 1 B. ज्ञेयो, 2 C. नानाकार्यस्वदर्शनात्. 3 B. यस्त्वपि. 4 B. प्रतीयते. 5 B. च कीर्तितः for तथैव च. 6 B. वा for च. 7 B. शेषाण्यपि भवन्ति हि. 8 C. om. this couplet. 9 C. सधीर॰. 10 B. प्रयोक्तृभिः. 11 B. adds यथारसं यथाभावं स्त्रीणां भावप्रदर्शनम्. 12 B. भावाभिनयनं. 13 C. भावानुभावसंयुक्तं 14 C. तथाल्पकथनाच्चापि. 15 B. सन्दर्शयेन्नरः. 16 B. ॰रोमाञ्चात्.

[1]उद्वृत्तरक्तनेत्रश्च संदंशेनाधरस्य च ।
निःश्वासकम्पिताङ्गश्च क्रोधं त्वभिनयेद् बुधः ॥५२॥
बाष्पपूर्णेक्षणाच्चैव चिबुकौष्ठप्रकम्पनात् ।
शिरसः कम्पनाच्चैव [2]भ्रुकुटीकरणेन च ॥५३॥
[3]मौनेनाङ्गुलिभङ्गेन माल्याभरणवर्जनात् ।
आयतस्थानकस्थाया [4]ईर्ष्या क्रोधो भवेत् स्त्रियः ॥५४॥
निःश्वासोच्छ्वासबहुलैरधोमुखविचिन्तनैः ।
[5]आकाशवचनाच्चापि दुःखं पुंसां प्रयोजयेत् ॥५५॥
[6]रुदितैः श्वसितैश्चैव च [7]उरोऽभिहननेन च ।
भूमिघाताभिघातैश्च दुःखं स्त्रीषु प्रयोजयेत् ॥५६॥
आनन्दाश्रुसमुत्पन्नमीर्ष्यासम्भवमेव वा ।
यत्पूर्वमुक्तं [8]सहितं स्त्रीनीचेषु प्रयोजयेत् ॥५७॥
[9]संभ्रमोद्वेगचेष्टाभिः [10]शस्त्रसंपतनेन च ।
पुरुषाणां भयं कार्यं [11]धैर्योद्वेगबलादिभिः ॥५८॥
चलतारकनेत्रत्वाद् गात्रैः स्फुरितकम्पितैः ।
सन्त्रस्तहृदयत्वाच्च पार्श्वाभ्यामवलोकनैः ॥५९॥
[12]त्रातुरन्वेषणाच्चापि उच्चैराक्रन्दितेन च ।
[13]प्रियस्यालिङ्गनाच्चापि भयं कार्यं भवेत् स्त्रियाम् ॥६०॥
मदा ये विहिताः पूर्वं [14]तान् स्त्रीनीचेषु योजयेत् ।
[15]मृदुभिः स्खलितैः [16]कार्यमाकाशस्यावलम्बनम् ॥६१॥
नेत्रावघूर्णनाच्चापि [17]विलग्नैः कथितैस्तथा ।
गात्राणां कम्पनाच्चैव मदः कार्यो भवेत्स्त्रियः ॥६१॥

52-61 (C. 52-61a ; B.XXV. 54b-65a). 1 C. •रङ्गनेत्' च. 2 C. भ्रुकुटीदर्शनेन. 3 C. अङ्गुलिभागेन. 4 B. ईर्षाक्रोधे. 5 C. आकाशवीक्षणात्. 6 C. रुदितैश्च स्वितै•. 7 B. शिरो•. 8 B. रुदितं. 9 B. सम्भ्रमावेग. 10 B. •सम्पातनेन 11 B. धैर्यावेग•. 12 B. भर्त्तु. 13 C. पुरुषा. 14 B. तो for तान्. 15 C. मृदुभिर्ललितैः. 16 C. कार्यमाकारस्यावलम्बनम्. 17 Bd. विलग्नै, B. सालस्यै, C. विलापै.

अनेन विधिना कार्यः [1]प्रयोगः [2]कारणोत्थितः।
[2]पौरुषः स्त्रीकृतो वापि [3]भावाभिनयनं प्रति ॥६३॥
सर्वे तु ललिता भावाः स्त्रीणां कार्याः [4]प्रयोगतः।
धैर्यमाधुर्यसम्पन्ना भावाः कार्याश्च पौरुषाः ॥६४॥
त्रिपताकाङ्गुलिभ्यां तु [5]चलिताभ्यां प्रयोजयेत्।
शुकाश्च शारिकाश्चैव सूक्ष्मा ये चैव पक्षिणः ॥६५॥
शिखिसारसहंसाद्या स्थूला येऽपि स्वभावतः।
रेचकैरङ्गहारैश्च तेषामभिनयो भवेत् ॥६६॥
[6]खरोष्ट्राश्वतरसिंहाश्च व्याघ्रगोमहिषादयः।
गतिप्रचारैरङ्गैश्च तेऽभिनेयाः प्रयोक्तृभिः ॥६७॥
भूताः पिशाचा यक्षाश्च दानवा राक्षसास्तथा।
अङ्गहारैर्विनिर्देश्याः [7]प्रत्यक्षा भवन्ति हि ॥६८॥
[8]प्रत्यक्षास्त्वभिनेयास्तु भयोद्वेगैः सविस्मयैः।
[9]देवाः प्रणामकरणैर्भावैश्चापि विचेष्टितैः ॥६९॥
[10]अभिनेया ह्यर्थवशादप्रत्यक्षाः प्रयोगतः।
[11]पार्श्वोत्थितेन हस्तेन ह्यरालेन शिरः स्पृशेत् ॥७०॥
[12]नरेऽभिवादन ह्येतदप्रत्यक्षे विधीयते।
[13]कटकावर्धमानेन कपोताख्येन वा पुनः ॥७१॥
दैवतानि गुरूंश्चैव प्रमदाश्चाभिवादयेत्।
दिवौकसश्च पूज्याश्च प्रत्यक्षाश्च भवन्ति ये ॥७२॥

63-72 (C. 62-71; B.XXV. 65b-75a). 1 B. प्रयोगाः. 8 C. करणोत्थितः, Bd. करणान्वितः. 2 C. पौरुषस्त्रीकृतो. 3 B. भावा ह्यभिनयं प्रति. 4 B. प्रयत्नत. 5 B. वलिताभ्यां. 6 B. खरोष्ट्राश्वतरसिंहा°. 7 C. प्रस्थान. 8 C. प्रत्यक्षं त्वभिनेयाः. 9 C. देवा प्रमाणकरणै°, B. देवाश्च चिह्नैश्च. 10 C. चिह्नैरभिनेयो. 11 B. सव्योत्थितेन. 12 C. नाभिवादनं. 13 N. कटका°. C.B. खटिका°.

तान् प्रणामैः प्रभावैश्च गम्भीरार्थैः प्रयोजयेत् ।
महाजनं [1]सखिजनं विटधूर्तजनं तथा ॥७३॥
[2]परिमण्डलसंस्थेन हस्तेनाभिनयेद् बुधः ।
पर्वतान् प्रांशुयोगेन वृक्षांश्चैव [3]समुच्छ्रितान् ॥७४॥
प्रसारिताभ्यां बाहुभ्यामुत्क्षिप्ताभ्यां प्रदर्शयेत् ।
समूहं [4]सागराम्बुनां बहुविस्तीर्णमेव च ॥७५॥
पताकाभ्यां तु हस्ताभ्यां विक्षिप्ताभ्यां प्रदर्शयेत् ।
ततः शौर्यञ्च दर्पञ्च गर्वमौदार्यमुच्छ्रयम् ॥७६॥
ललाटदेशसंस्थेन [5]अरालेन विनिर्दिशेत् ।
[6]वक्षोदेशादपावृत्तौ करौ तु मृगशीर्षकौ ॥७७॥
[7]विस्तीर्णप्रद्रुतोत्क्षिप्तौ योज्यौ यत् स्यादपावृतम् ।
अधोमुखोत्तानतलौ हस्तौ किञ्चित् प्रसारितौ ॥७८॥
कृत्वा [8]निर्दर्शयेत्तद् गृहध्वान्तं बिलं गुहाम् ।
[9]कामं शापप्रहग्रस्तान् [10]ज्वरोपहतमानसः ॥७९॥
[11]तेषामभिनयः कार्यो मुखगात्रविचेष्टितैः ।
दोलाभिनयनं कार्यं दोलायास्तु विलोलनैः ॥८०॥
संक्षोभेण च गात्राणां [12]रज्वाः प्रग्रहणेन च ।
[13]तदा कम्पवती दोला भवेत्प्रत्यक्षसंश्रया ॥८१॥
[14]आसने ह्युपविष्टानां कीर्तितं तत्र दोलनम्[15] ।
आकाशवचनानीह वक्ष्याम्यात्मगतानि च ॥८२॥

73-82 (C. 71c-79a ; B XXV 76-85) 1 B. सखीजनं. 2 C. परिमण्डलसंज्ञेन. 3 C समुत्थिताम्. 4 C समूहं सागरस्नाना, B समूहसागरं सेनां. 5 C हस्तौ किञ्चित् प्रसारितौ, C om. 77b-78. 6 B. वक्षोदेशादपाविद्धौ. 7 B. विस्तीर्ण प्रद्रुतोद् क्षेपौ, C. विस्तीर्णा प्रद्रुतक्षिप्तौ. 8 B. त्वभिनयेद्वेला विलद्वारं गृहं गुहान्. 9 C. कामपाशमहग्रस्ता, B. ग्रस्तान्. 10 B. ज्वरोपहतचेतस.. 11 B. एतेषां चेष्टितं कुर्याद् दक्षाद्यैः सदृशैः बुधैः.. 12 B रज्वश्चाप्रग्रहणेन 13 B. यदा वागवती डोला प्रत्यक्षा पुस्तजा भवेद् 14 B. आसनेषु प्रविष्टाना कर्तव्यं बुधैः 15 C. दोलनम् , B. डोलनम्.

अपवारितकं चापि जनान्तिकमथापि च ।
[1]दूरस्थाभाषणं यत् स्यादशरीरनिवेदनम् ॥८३॥
परोक्षान्तरितं वाक्यमाकाशवचनं तु तत् ।
तत्रोत्तरकृतैर्वाक्यैः संलापं संप्रयोजयेत् ॥८४॥
नानाकारणसंयुक्तैः काव्यभावसमुत्थितैः ।
[2]अतिहर्षमदोन्मादरागद्वेषभयार्दितः ॥८५॥
विस्मयक्रोधदुःखार्तिवशादेकोऽपि भाषते ।
हृदयस्थं वचो यत्तु तदात्मगतमिष्यते ॥८६॥
सवितर्कं च तद्योज्यं प्रायशो नाटकादिषु[3] ।
निगूढभावसंयुक्तमपवारितकं स्मृतम् ॥८७॥
कार्यवशादश्रवणं पार्श्वगतैर्यज्जनान्तिकं तत् स्यात् ।
हृदयस्थं [3]सवितर्कं भावस्थमात्मगतमेव ॥८८॥
[4]यानि [5]गुह्यार्थयुक्तानि वचनानीह नाटके ।
[6]कर्णे निवेद्यमेवमेवमित्यभिधाय च ॥८९॥
पूर्ववृत्तं तु यत्कार्यं भूयः कथ्यं तु कारणात् ।
कर्णप्रदेशे [7]तद्वाच्यं मा गात्तत्पुनरुक्तताम् ॥९०॥
अव्यभिचारेण [8]पठेदाकाशजनान्तिकात्मगत-[पाठ्यान्][9] ।
प्रत्यक्षपरोक्षकृतानात्मसमुत्थान् परस्थांश्च[10] ॥९१॥
हस्तमन्तरितं कृत्वा त्रिपताकं प्रयोक्तृभिः ।
जनान्तिकं प्रयोक्तव्यमपवारितकं तथा ॥९२॥
संभ्रमोत्पातरोषेषु शोकावेगकृतेषु च ।
यानि वाक्यानि उच्यन्ते [11]पुनरुक्तानि तेष्विह ॥९३॥

83-93 (C. 79b-88; B.XXV. 86-94, 111). 1 C दूराधभाषणं. 2 B.C. om. 85b-86a; see K.XXV. 89b-90a. 3 CK. om. this hem 4 B. इति for यानि. 5 B. गूढार्थ॰. 6 B. जनान्तिकानि कर्णे तु तानि योज्यानि योक्तृभिः. 7 C. यद्वाक्यमगात्. 8 C. पदेराकाश॰. 9 B. आत्मगतपाठ्यम् C. ॰वाक्यैः. 10 B. परकृतांश्च. 11 K. पुनरुक्तं न तेष्विह.

[1]साध्वहो मां च हा हेति किं किं मा मा वदेति च ।
[2]एतानि वचनानीह द्विस्त्रिसंख्यानि कारयेत् ॥९४॥
प्रत्यङ्गहीनं [3]यत्काव्यं विकृतं च प्रयुज्यते ।
न [4]लक्षणकृतस्तत्र कार्यस्त्वभिनयो बुधैः ॥९५॥
भावो [5]य उत्तमानां तु न तं मध्येषु योजयेत् ।
यो भावश्चैव मध्यानां न तं नीचेषु योजयेत् ॥९६॥
पृथक् पृथग् भावरसैरात्मचेष्टासमुत्थितैः[6] ।
ज्येष्ठमध्यमनीचेषु नाट्यं रागं च [7]गच्छति ॥९७॥
[8]स्वप्नायितेषु भावाः कर्तव्या न खलु हस्तसञ्चारैः ।
[9]सूत्राभिहितैरेव तु वाक्यार्थैनैव ते साध्याः ॥९८॥
[10]मन्दस्वरसञ्चारं व्यक्ताव्यक्तद्विरुक्तवचनार्थम् ।
पूर्वानुस्मरणकृतं कार्यं स्वप्नायिते पाठ्यम् ॥९९॥
वृद्धानां योजयेत् पाठ्यं गद्गदस्खलिताक्षरम् ।
असमाप्ताक्षरञ्चैव बालानां तु कलस्वनम् ॥१००॥
प्रशिथिलगुरुकरणाक्षरघंटानुस्वरितवाक्यगद्गदवत्[11] ।
[12]हिक्काश्वासोपेतां काकु कुर्यान्मरणकाले ॥१०१॥
[13]हिक्काश्वासोपेतां मूर्च्छापगमे तु मरणवत् कथयेत् ।
[14]अतिमत्तेष्वपि कार्यं [15]पाठ्यं पुनरुक्तसंयुक्तम् ॥१०२॥

94-102 (C. 89-97a, B.XXV. 112-115, 95-98, K.XXV. 114, 115, 118, 99). 1 B. K. साध्वहो सुष्ठ (B. मा च) हा हेति C. न त्वहो साधु. 2 B. एवंविधानि कार्याणि. 3 C. यद्वाक्यं, K. यत्कार्यं. 4 C. लक्षणकृते 5 B. यत्रोत्तमानां. 6 C. चेष्टासमन्वितैः. 7 C. वाञ्छति for गच्छति. 8 B. स्वप्नायितवाक्यार्थस्त्वभिनेया न खलु हस्तप्रचारैः. 9 C. सत्त्वाभिनयनैरेव तु वाक्यार्थैनैव ते साध्याः. 10 B. मन्दस्वरसंचारैर्व्यक्ताव्यक्तं पुनरुक्तवचनार्थम्. 11 B. ०गद्गदजः. 12 C. हिक्काश्वाससरफां 13 C. हिक्काश्वासोपेतमनवेक्षितमूर्च्छनं मरणम् कथनीयं. 14 C. om. this hem. We follow K. 15 B. तद्वत् स्वप्नायिते यथा पाठ्यम्.

[1]नानाभावोपगतो [2]मरणाभिनयो बहुप्रकारस्तु ।
विक्षिप्तहस्तपादैर्निभृतैः[3] सन्नैस्तथा गात्रैः[4] ॥१०३॥
व्याधिप्लुते तु मरणं निषण्णगात्रेण संप्रयोक्तव्यम् ।
हिक्काश्वासोपेतमनवेक्षितगात्रसञ्चारं [च][5] ॥१०४॥
विषपीतेऽपि च मरणं कार्यं विक्षिप्तगात्रकरचरणम् ।
विषवेगसंप्रयुक्तं विस्फुरिताङ्गक्रियोपेतम् ॥१०५॥
प्रथमे वेगे [6]कार्श्यं त्वभिनेयं वेपथुर्द्वितीये तु ।
दाहस्तथा तृतीये [7]हिक्कां कुर्याच्चतुर्थे तु ॥१०६॥
फेनश्च पञ्चमे वै ग्रीवाभङ्गं तथैव षष्ठे तु ।
जडता तु सप्तमे वै प्रोक्तं मरणं तथाष्टमे चैव ॥१०७॥
प्रविष्टतारके नेत्रे कपोलाधरमेव च ।
अंसोदरभुजानां तु कृशता कार्श्यरूपणम्[8] ॥१०८॥
हस्तयोः पादयोर्मूर्ध्नि युगपत् पृथगेव वा ।
कम्पनेन यथायोगं वेपथुं संप्रयोजयेत्[9] ॥१०९॥
[10]सर्वाङ्गक्षेपणोद्वेजनेन कण्डूयनात्तथाऽङ्गानाम् ।
[11]विक्षिप्तहस्तगात्रैर्दाहश्चैवाभिनेतव्यः ॥११०॥
उद्वृत्तनिमेषत्वादुद्गारच्छर्दनैस्तथाक्षेपैः ।
अव्यक्ताक्षरकथनैर्हिक्कामेवं[12] त्वभिनयेत्तु ॥१११॥
उद्गारवमनयोगैः [13]शिरसश्च विलोलनैरनेकविधैः ।
[14]फेनस्यादभिनेतव्यो निःसंज्ञतयाऽनिमेषाच्च[15] ॥११२॥

103-112 (C. 97-105; B.XXV. 100-109a). 1 C. नानाभावगो (B. भावोपगतं). 2 B. मरणाभिनये बहुधैविदं तु. 3 B. स्थिरतः for निवृत्तः सन्नैः. 4 B. कार्यम् for गात्रैः 5 B. तथा पराधीनगात्रसञ्चारम्. 6 C. कार्यं. 7 B. विनलिका स्यान्. 8 B. reads 108 as एत प्रथमवेगे तु क्षामकपोलता कृशत्वेऽभिनयकार्ये वास्यानामल्पभाषणम्. 9 B. om. 109. 10 B. सर्वाङ्गवेपथुं च कण्डूयनं तथाङ्गानाम्. 11 B. विक्षिप्तहस्तगात्रं 12 B. विलक्षिकाम्. 13 B. शिरसश्च विलोलनैरनेकविधैः. 14 C. om. 112b. 15 B. निमेषैश्च.

[1]अंसकपोलस्पर्शाद् ग्रीवाभङ्गो [2]विवर्तनाच्छिरसः ।
सर्वेन्द्रियसम्मोहाज्जडतामेवं प्रयुञ्जीत[3] ॥११३॥
[3a]सम्मीलितनेत्र[तया] [4]व्याधिविवृद्धौ भुजङ्गदंशाद्वा ।
एवं हि नाट्यधर्मे मरणानि बुधैः प्रयोज्यानि ॥११४॥
एतेऽभिनयविशेषाः कर्तव्याः सत्त्वभावयुक्ताः स्युः ।
अन्येऽपि लौकिका ये ते सर्वे [5]लोकतः साध्याः ॥११५॥
नानाविधैर्यथापुष्पैर्माल्यं ग्रथ्नाति माल्यकृत् ।
[6]अङ्गोपाङ्गै रसैर्भावैस्तथा नाट्यं प्रयोजयेत् ॥११६॥
या यस्य लीला नियता गतिश्च रङ्गप्रविष्टस्य [7]विधानतस्तु ।
तामेव कुर्यादविमुक्तसत्त्वो यावन्न रङ्गात्प्रतिनिःसृतः[8] सः ॥११७॥
एवमेते मया प्रोक्ता [9]वागङ्गाभिनयाः क्रमात् ।
[10]नोक्ता ये च मया तत्र [11]लोकाद् ग्राह्यास्तु ते बुधैः ॥११८॥
लोको [12]वेदास्तथाध्यात्मं प्रमाणं त्रिविधं स्मृतम् ।
वेदाध्यात्मपदार्थेषु प्रायो नाट्यं प्रतिष्ठितम् ॥११९॥
वेदाध्यात्मोपपन्नं तु शब्दच्छन्दःसमन्वितम् ।
लोकसिद्धं भवेत्सिद्धं नाट्यं लोकस्वभावजम् ॥१२०॥
[13]तस्मान्नाट्यप्रयोगे तु प्रमाणं लोक इष्यते ।
देवतानामृषीणाञ्च राज्ञामथ कुटुम्बिनाम् ॥१२१॥
[14]कृतानुकरणं लोके नाट्यमित्यभिधीयते ।
लोकस्य चरितं यत्त नानावस्थान्तरात्मकम् ॥१२२॥

113-122 (C. 106-115a ; B.XXV. 108-110, 116-117). 1 C. om. 112a 2 B. विनामनं शिरोऽपाग. 3 B. त्वभिनयेत्. 3a Mss. सम्मीलितनेतत्वाद्. 4 B. व्याधिविवृद्धया. 5 B. लोकवत् कार्याः. 6 C. अङ्गोपाङ्गरसभावैः 7 B. निधानयुक्तः. 8 B. प्रतिनिर्वृत्तः. 9 B. नाट्येऽभिनयाः. 10 B. अन्ये तु लौकिका. 11 C लोकमाह्या. 12 C. तथाध्यात्म. 13 B om. 121. 14 B. om. 122.

¹तद्रङ्गाभिनयोपेतं नाट्यमित्यभिसंज्ञितम् ।
एवं लोकस्य या वार्ता नानावस्थान्तरात्मिका ॥१२३॥
²सा नाट्ये संविधातव्या नाट्यवेदविचक्षणैः ।
यानि शास्त्राणि ये धर्मा यानि शिल्पानि याः क्रियाः ॥१२४॥
लोकधर्मप्रवृत्तानि तानि नाट्यं प्रकीर्तितम् ।
न च शक्यं हि लोकस्य स्थावरस्य चरस्य च ।१२५॥
शास्त्रेण निर्णयं कर्तुं भावचेष्टाविधिं प्रति ।
नानाशीलाः प्रकृतयः शीले नाट्यं प्रतिष्ठितम् ॥१२६॥
तस्माल्लोकप्रमाणं हि कर्तव्यं नाट्ययोक्तृभिः ।
* ³एवं भावानुकरणे नानाप्रकृतिसम्भवे ।
* भावाङ्गसत्त्वसंयुक्तो यत्नः कार्यः प्रयोक्तृभिः ॥१२७॥
⁴एभिः कर्मैर्योऽभिनयं तु सम्यग्
विज्ञाय रङ्गे मनुजः ⁵प्रयुज्यात् ।
स नाट्यतत्त्वाभिनयप्रयोक्ता⁶
सम्मानमग्र्यं लभते हि लोके ॥१२८॥
ज्ञेयास्त्वभिनया ह्येते वाङ्नेपथ्याङ्गसंश्रयाः⁷ ।
प्रयोगज्ञेन कर्तव्या नाटके सिद्धिमिच्छता ॥१२९॥

इति भारतीये नाट्यशास्त्रे चित्राभिनयो नाम
षड्विंशोऽध्यायः ॥२६॥

123-129 (C. 115b-122; K. XXV. 125-128; B. XXV. 122-125). 1 B. om. 123. 2 B. om. 124-125a. 3 B. om. 127. 4 C. येऽभिकर्मैर्योऽभिनयं तु, B. एतान् विधीं चाभिनयस्. 5 B. प्रयुंक्ते. 6 C. प्रयोगः. 7 संश्रयाः for संभवा-.

सिद्धीनां तु प्रवक्ष्यामि लक्षणं नाटकाश्रयम् ।
यस्मात्प्रयोगः सर्वोऽयं सिद्ध्यर्थे संप्रतिष्ठितः[1] ॥१॥
सिद्धिस्तु द्विविधा ज्ञेया [2]वाक्सत्त्वाङ्गसमुद्भवा ।
दैविकी मानुषी चैव नानाभावरसाश्रया[3] ॥२॥
दशाङ्गा मानुषी सिद्धिर्दैविकी द्विविधा स्मृता[4] ।
नानासत्त्वाश्रयकृता [5]शारीरी वाङ्मयी तथा ॥३॥
[6]स्मितार्धहासातिहासा साध्वहो कष्टमेव च ।
प्रवृद्धनादा च तथा ज्ञेया सिद्धिस्तु वाङ्मयी ॥४॥
पुलकैश्च सरोमाञ्चैरभ्युत्थानैस्तथैव च ।
चेलदानाङ्गुलिक्षेपैः शारीरी सिद्धिरिष्यते ॥५॥
[7]किञ्चिच्छ्लिष्टो रसो हास्यो नृत्यद्भिर्यः प्रयुज्यते ।
स्मितेन [8]स परिग्राह्यः प्रेक्षकैर्नित्यमेव तु ॥६॥
किञ्चिदस्पष्टहास्यं यत्तथा वचनमेव वा ।
[9]अर्धहास्येन तद्ग्राह्यं प्रेक्षकैर्नित्यमेव तु ॥७॥
[10]विदूषको[त्सेक]कृतं भवेच्छिल्पकृतं तु यत् ।
अतिहास्येन तद् ग्राह्यं प्रेक्षकैर्नित्यमेव हि[11] ॥८॥
यद् धर्मपदसंयुक्तं तथातिशयसम्भवम् ।
तत्र साध्विति [12]वाक्यं तु प्रयोक्तव्यं हि साधकैः ॥९॥

1-9 (C. B. *same*). 1 B. संप्रदर्शितः. 2 B. वाङ्मनोऽङ्गसमुद्भवा. 3 B. ॰भावसमुत्थिता. 4 C. ॰श्रया for ॰स्मृता. 5 B. वाङ्नेपथ्यशरीरजा. 6 B. स्मितापहासिनी हासा. 7 B ॰च्छिष्टो. 8 B. सपरिग्राह्यः, सुपरिग्राह्यः; Bp. संपरिग्राह्यः. 9 B. अर्धहास्येन. 10 C. विदूषकोच्छेद॰, K. विदूषकोच्छेक॰. 11 After this B. places 10a. 12 B. यद्वाक्यं for ॰वाक्यं तु.

अह्नोकारस्तथा कार्यो नृणां प्रकृतिसंभवः ।
[1]विस्मयादिषु भावेषु [2]प्रह्वर्षार्थेषु चैव हि ॥१०॥
करुणे तु प्रयोक्तव्यं [3]सास्रं कष्टेति चैव हि ।
[4]प्रवृद्धनादः कर्तव्यो विस्मयार्थेषु नित्यशः ॥११॥
[5]साधिक्षेपेषु वाक्येषु प्रस्पन्दिततनूरुहैः ।
[6]कुतूहलान्तरावेशं बहुमानेन साध्यते ॥१२॥
[7]दीतम[द्वेषं] काव्यं यच्छेद्यभेद्याहवात्मकम् ।
सविद्रवमथोत्पातं[8] तथा [9]लघुनियुद्धकम् ॥१३॥
सकम्पितांसकशिरः सास्रं [10]सोच्छ्वासमेव च ।
तत् प्रेक्षकैस्तु कुशलैः साध्यमेवं विधानतः ॥१४॥
एवं साधयितव्यैषा तज्ज्ञैः सिद्धिस्तु मानुषी ।
दैविकीञ्च तथा सिद्धिं कीर्त्यमानां निबोधत ॥१५॥
सा [11]सत्त्वातिशया ज्ञेया भावयुक्ता तथैव च ।
नाट्ये संप्रेक्षकैर्ज्ञेया नित्यं सिद्धिस्तु दैविकी ॥१६॥
न शब्दो नैव च क्षोभो न चोत्पातनिदर्शनम् ।
सम्पूर्णता च रङ्गस्य सा सिद्धिर्दैविकी स्मृता ॥१७॥
[12]एवं सिद्धिस्तु विज्ञेया प्रेक्षकैर्दिव्यमानुषी ।
अत ऊर्ध्वं प्रवक्ष्यामि घातान् दैवसमुत्थितान् ॥१८॥
दैवात्मपरसमुत्थास्त्रिविधा [13]घाता बुधैस्तु विज्ञेयाः ।
औत्पातिकश्चतुर्थः कदाचिदपि सम्भवत्येव[14] ॥१९॥

10-197 (C. *same*; B. 91, 10b-19) 1 B. विस्मयाविष्ट 2 C. प्रहाराद्भुतविक्रमैः. 3 B. कष्टं शास्त्रकृतेन तु. 4 B. प्रह्वर्नादा च तथा. 5 BC. साधिक्षेपेषु. Bp. अविच्छेदेषु. 6 B. कुतूहलोत्तरावेशः, N. C. कुतूहलान्तरावेशं (N °वेधं). 7 B. दीप्तप्रदेशकाव्यं, B. दीप्तप्रदेशं यत् काव्यं. 8 C अथात्पात, B. अथोत्फुल्ल'. 9 B युद्धनियुद्धकम्. 10 B. सोत्थानमेव । 11 B. भावातिशयोपेता ज्ञेया भावयुक्ता. 12 B. दैवी च मानुषी चैव सिद्धिरेषा मयोदिता. 13 C. घातका बुधैर्ज्ञेया. 14 B. सम्भवत्येषु.

वातान्निवर्षकुञ्जरभुजङ्गसंक्षोभवज्रपतनानि[1] ।
कीटव्यालपिपीलक[2]पशुविशमनानि [2a]दैविका घाताः ॥२०
[3]अभिपठितविस्फोटितानि विकृष्टनालिकापाताः ।
[4]गोमयलोष्टतृणोपलविक्षेपाश्च स्युः परसंभूताः ॥२१॥
मात्सर्याद् द्वेषाद्वा तत्पक्षत्वात्तथार्थभेदाद्वा ।
एते परप्रयुक्ता ज्ञेया घाता बुधैर्नित्यम् ॥२२॥
[5]औत्पातिकास्तथा स्युः क्षितिकम्पोल्कादिवातनिर्घाताः ।
पुनरात्मसमुत्था ये [6]घातांस्तांस्तान् संप्रवक्ष्यामि ॥२३॥
[7]वैलक्ष्यमन्यचेष्टितविभूमिरन्ध्रवस्मृतिप्रमोक्षाः[8] स्यु ।
अन्यवचनं च [9]कान्वे तथार्तनादो निहलत्वम् ॥२४॥
[10] * * * * * *
[11]मुकुटाभरणप्रपतनपुष्करवाग्भीतिदोषाश्च ॥२५॥
[12]अतिहसितरुदितानि सिद्धिबाधप्रमाणकरणानि[13] ।
कीटपिपीलकपाताः निर्घ्नि सर्वात्मना घ्नन्ति[14] ॥२६॥
मुकुटाभरणनिपातः प्रबद्धनादश्च नाशनो भवति ।
[15]पशुविशसनमपि ज्ञेयं बाधाजननं प्रयोगस्य ॥२७॥

20-27 (C. *same*, B. 20 30). 1 B ॰भुजङ्गनरेन्द्रपनिपाता.. 2 B. पशुप्रवेशनाश्च. 2a B. दैवकृता. 3 B. अतिहसितरुदितविस्फोटितान्यथोत्कृष्टनालिकापाताः 4 B गोमयलोष्टपिपीलिकाविक्षेपाश्चारिसंभूताः 5 C. औत्पत्तिकान्यथा B. औपत्तिकाश्च घाता नत्तोन्मत्तप्रवेशातिदङ्कत 6 B. घातान्यास्तान् प्रवक्ष्यामि. 7 B. वैलक्ष्यमचेष्टितम्. 8 B ॰स्मृतिप्रमोष. 9 B. काव्द 10 C. reads 25a as पुनरात्मसमुत्था ये घातास्ताश्चाया., B अतिहसितरुदितविस्वरपिपीलिका-कीटपशुविरावाश्च, K आरनटितरुदित etc. 11 B मुकुटाभरणनिपाता पुष्करजा-वाग्दोषाश्च 12 C. अतिहसितरुदितसिद्धिवादे 13 B. सिद्धेर्बाधक्य दूषकानि स्यु॰. 14 B reads C. 32, after this. 15 B पशुविशसनं तथा स्याद्बहुवचनं प्रयोगेषु, C पशुविशसनमवज्ञेय

[1][मुकुट]प्रपतनमुल्कापातं स्वैरञ्चेत्तथैव पादमा ।
वाग्मीतिर्भाण्डदोषाः सिद्धिं सर्वात्मना घ्नन्ति ॥२८॥
ज्ञेयौ तु काव्ययुक्तौ द्वौ दोषावप्रतिक्रियौ नित्यम् ।
प्रकृतिव्यसनसमुत्थः शेषोदकनालिकात्यश्च ॥२९॥
पुनरुक्तं ह्यसमासो विभक्तिभेदो विसन्धयोऽपार्थाः ।
त्रिलिङ्गजाश्च दोषाः प्रत्यक्षपरोक्षसंमोहः ॥३०॥
छन्दोवृत्तत्यागो गुरुलाघवसङ्करो यतेर्भेदः ।
[2]एतानि यथा[स्थू]लं घातस्थानानि काव्यस्य ॥३१॥
[3]विस्वरमज्ञातरागं वर्णस्वरसम्पदा च परिहीणम् ।
अप्रज्ञातस्थानलयं [4]स्वरगतमेवं विधिं हन्यात् ॥३२॥
विषमं मार्गविहीनं विमार्जनं [5]व्याकुलप्रहारं च ।
अविभक्तग्रहमोक्षं [6]पुष्करगतमीदृशं हन्यात् ॥३३॥
[7]अप्रतिभासस्खलितं विस्वरमुच्चारणं च काव्यस्य ।
अस्थानभूषणत्वं [8]मुकुटनिपातश्च भूषणाग्रहणम् ॥३४॥
[9]रथनागवाजिकुञ्जरखरोष्ट्रशिबिकाविमानयानानाम् ।
आरोहणावतरणेष्वनभिज्ञातत्वं विहस्तत्वम् ॥३५॥
प्रहरणकवचानां [10]वाऽयथावद्ग्रहणं साधनं वापि ।
[11]अमुकुटभूषणयोगो रङ्गे तु [12]चिरप्रवेशो वा ॥३६॥
एभिः स्थानविशेषैर्घाता लक्ष्यास्तु सूरिभिः कुशलैः ।
[13]यूपाग्निचयनदर्भैश्च भाण्डपरिग्रहांस्त्यक्त्वा ॥३७॥

28–37 (C. 28–37; B. 34, 32, 33, 29). 1 B om. 2 C. एतानि स्थूलानि, B. यथा स्थूलं. 3 C. विस्वरविरक्तरागं स्वरसम्पदा. 4 B. स्वरगतमेव विधं. 5 C. व्याकुलकारं. 6 C. पुष्करगतं मार्गिं हन्यात्. 7 B. अप्रतिभागं स्खलनं. 8 B. पतनं मुकुटस्य विभ्रंशः. 9 C. reads भ्रंशं before this. 10 B. अन्यथाग्रहणं विधारणं वापि. 11 C. अनुकूलभूषणता वा. 12 C. चिरप्रवेशे. 13 C. यूपानि.

[1]सिद्धेर्भिन्नो घातः सर्वगतश्चैकदेशजोऽपि ।
[2]नाट्यकुशलैः संलेख्या [3]नैव हि सिद्धिर्न घातश्च ॥३८॥
[4]सिद्धिर्वा घातो वा सर्वगतो व्यक्तलक्षणो बहुशः ।
[5]यस्त्वेकदेशजातं न प्रत्यवरोहिल्लेख्यस्तु ॥३९॥
[6]जर्जरमोक्षस्यान्तर्नालीकासिद्धिश्च लेख्यसिद्धिश्च ।
[7]कर्तव्या त्विह सततं नाट्येऽस्मिन् प्राश्निकैः सम्यक् ॥४०॥
योऽन्यस्य महे [8]मूढो नान्दीश्लोकं पठेद्धि [9][अन्य]स्य ।
[10]देवस्य पूर्वरङ्गे च [11]घातस्तस्यापि विलेख्यः स्यात् ॥४१॥
योऽन्यस्य कवेः काव्यं काव्येन मिश्रयेत्तथाऽन्येन ।
तस्यापि बलाद्रङ्गे तज्ज्ञैर्घातो विलेख्यस्तु ॥४२॥
[12]योऽन्यस्य कवेर्नाम्ना काव्येन मिश्रयेन्मोहात् ।
निर्दिष्टदोषतोऽस्मिन् सिद्धश लेख्यो बुधैः क्रमशः ॥४३॥
यो [13]देशवेषभाषाव्यपेतमपि च प्रयोजयेत् काव्यम् ।
[14]तस्यापि विलेख्य. स्याद् [15]घातोद्देशविधौ [च] तज्ज्ञैः ॥४४॥
कः शक्तो नाट्यविधौ यथावदुपपादने[16] प्रयोगे च[17] ।
[18]धृष्टो व्यग्रमना वा यथावदुक्तं परिज्ञातुम् ॥४५॥
तस्माद्गम्भीरार्थाः शब्दा ये लोकवेदसंसिद्धाः ।
सर्वजनेन ग्राह्याः [19]संयोज्या नाटके विधिवत् ॥४६॥

38-46 (C. 38-46; B. 39. 41. 43, 44). 1 C. सिद्धैः B. सिद्धघा. 2 C. नाट्य कुशलेन लेख्या, B. नाट्यकुशलैः सलेख्या. 3 सिद्धिर्वा स्याद्विघातो वा. 4 B. नालेख्यो बहुदिनजः सर्वगतोऽन्यक्त लक्षणविशेषः. 5 B. यस्त्वेवदिवसजातस्स प्रत्यवरोहिरेख्यः स्यात्. 6 B. जर्जरमोक्षस्यान्ते सिद्धेर्मोक्षस्तु नालिकायास्तु. 7 B. कर्तव्यस्त्विह सततं नाट्यज्ञैः प्राश्निकैर्विधिना. 8 B. मूर्खो. 9 C मूटस्ये, B. देवस्य. 10 C. दैवस्य पूर्वरङ्गो, B. स्वयंेन पूर्वरङ्गे. 11 B. सिद्धेर्घातः प्रयोगस्य. 12 B. om. 43. 13 B. देशनावरहितं भाषाकाव्यं प्रयोजयेद्बुद्धया. 14 B. तस्याभिलेख्य स्याद्घातो देश. प्रयोगज्ञैः. 15 C. घातोद्देशे विधौ तज्ज्ञः. 16 B. उपपादनं. 17 B. प्रयोगस्य. 18 B. कर्तुं. 19 B. ते योज्याः.

न च किञ्चित् गुणहीनं दोषैः परिवर्जितं न वा किञ्चित् ।
तस्मान्नाट्यकृतो दोषा [1]नात्यर्थतो ग्राह्याः ॥४७॥
नाऽनादरस्तु कार्यो नटेन गीतवागङ्गसत्त्वनेपथ्ये[2] ।
[3]रसभावनृत्तगीत आतोद्ये लोकयुक्तां तु ॥४८॥
एवमेतद्धि विज्ञेयं सिद्धीनां लक्षणं बुधैः ।
अत ऊर्ध्वं प्रवक्ष्यामि [4]प्रेक्षकानां तु लक्षणम् ॥४९॥
चारित्राभिजनोपेताः [5]शान्तवृत्ताः श्रुतान्विताः ।
[6]यशोधर्मरताश्चैव मध्यस्था वयसान्विताः ॥५०॥
षडङ्गनाट्यकुशलाः प्रबुद्धाः शुचयः समाः ।
चतुरातोद्यकुशला [7]नेपथ्यज्ञाः सुधार्मिकाः ॥५१॥
देशभाषाविधानज्ञाः कलाशिल्पविचक्षणाः ।
[8]चतुर्धाभिनयज्ञाश्च [9]सूक्ष्मज्ञा रसभावयोः ॥५२॥
शब्दच्छन्दोविधानज्ञाः नानाशास्त्रविचक्षणाः ।
एवंविधास्तु कर्तव्याः [10]प्रेक्षका नाट्यदर्शने ॥५३॥
अव्यग्रैरिन्द्रियैः शुद्ध ऊहापोहविशारदः ।
[11]त्यक्तदोषोऽनुरागी च स नाट्ये प्रेक्षकः स्मृतः ॥५४॥
[12]यस्तुष्टे तुष्टिमायाति शोके शोकमुपैति च ।
दैन्ये दीनत्वमभ्येति स नाट्ये प्रेक्षकः स्मृतः ॥५५॥
न चैवैते गुणाः [13]सर्वे एकस्मिन् प्रेक्षके स्मृताः ।
[14]तस्माद्बहुत्वात् ज्ञानानामल्पत्वादायुषस्तथा ॥५६॥

47-56 (C. 47-49; B. 47-55). 1 B. नाट्यार्थतो. 2 C. ॰नैपथ्यैः. 3 C. ॰गीतैरातोद्यलोकयुक्त्या. 4 B. प्राश्निकानां. 5 C. शान्तिवृत्तश्रुतान्विता., B. शान्तवृत्ता. कृतश्रमाः. 6 B. यशोधर्मपराश्चैव मध्यस्थवयसान्विताः. 7 B. ज्ञान्तरदर्शिनः. 8 B. चतुर्धाभिनयोपेता, C. चतुराभि. 9 B. रसभावविकल्पकाः. 10 B प्राश्निकाः दशरूपके. 11 C. व्यक्तदोषो. 12 B. ha 55 after 40. 13 B. सम्यक् सर्वस्मिन् प्रेक्षके स्मृताः. 14 B. om. 56b.

[1]उत्तमाधममध्यानां संकीर्णायां तु पर्षदि ।
न हास्यमधमैर्ज्ञातुमुत्तमानां विचेष्टितम् ॥५७॥
यद्यस्य शिल्पं नेपथ्यं [2]कर्म वाक् चेष्टितं तथा ।
[3]तस्य तेनैव तत् साध्यं स्वकर्मविषयाश्रयम् ॥५८॥
[4]नानाशीलाः प्रकृतयः शीले नाट्यं प्रतिष्ठितम् ।
उत्तमाधममध्यानां वृद्धबालिशयोषिताम्[5] ॥५९॥
तुष्यन्ति तरुणाः कामे विदग्धाः समयाश्रिते[6] ।
अर्थेष्वर्थपराश्चैव [7]मोक्षेष्वथ विरागिणः ॥६०॥
[8]शूरा बीभत्सरौद्रेषु नियुद्धेष्वाहवेषु च ।
धर्माख्यानपुराणेषु वृद्धास्तुष्यन्ति नित्यशः ।
बाला मूर्खाः स्त्रियश्चैव हास्यनैपथ्ययोः सदा[9] ॥६१॥
एवं [10]भावानुकरणे यो यस्मिन् प्रविशेन्नरः ।
प्रेक्षकस्तु स मन्तव्यो गुणैरेतैरलङ्कृतः ॥६२॥
एवं तु प्रेक्षका ज्ञेयाः प्रयोगे [11]नाट्यसंश्रये ।
सद्रूपे च[12] समुत्पन्ने प्राश्निकान् संनिबोधत ॥६३॥
यज्ञविन्नर्तकश्चैव [13]छन्दोविच्छन्दविन्नृप ।
[14]इष्व[स]चित्रविद्वेश्या [15]गन्धर्वो राजसेवकः ॥६४॥
यज्ञविद्यज्ञयोगे च नर्तकोऽभिनये तथा ।
[16]छन्दोविद्वृत्तबन्धे तु शब्दवित् पाठ्यविस्तरे ॥६५॥

56-65 (C. 56-61, 60b, 59-61, B. 60a, 55-59, 61-65).
1 B. विज्ञेयस्याप्रमेयत्वात् संकीर्णाना च पर्षदि (C संसदि) 2 B. कर्मचेष्टितमेव वा. 3 B. वत्तथा तेन यत्नेन तु स्वकर्मविषयं प्रति. 4 C. reads this hem. as its 60b. 5 C. वृद्धबालस्त्र्योषिताम् 6 B. समयान्विते. 7 B. मोक्षे चाथ. 8 B. शूरास्तु वीररौद्रेषु. 9 B.N read here 55 slightly altered. 10 B. भावानुकरणे. 11 B. दशरूपत.. 12 B तु. 13 B. °च्छब्दवित्तया, C °च्छेद-वित्तया. 14 C. इष्वस्त्रचित्र°, B. अस्त्र- विचित्रज्ञ 15 B. गान्धर्वो. 16 C. छन्दो वृत्तबन्धे तु.

[1]विभूतिगुणसंयोगे तथान्तःपुरचेष्टिते ।
राजात्मचरिते च [2]स्यादिष्वासः सौष्ठवे तथा ॥६६॥
[3]प्रणामकृतिचेष्टासु वस्त्राभरणयोजने ।
[4]नाट्यमूले च नेपथ्ये चित्रकृत् संमतास्तते ॥६७॥
कामोपचारे वेश्या च [5]गन्धर्वः स्वरतालयोः ।
सेवकस्तूपचारे च ह्येते प्राश्निकाः स्मृताः ॥६८॥
[6]एभिर्धर्ममभिप्रेक्ष्य दोषा वाच्यास्तथा गुणाः ।
[7]अशास्त्रमे विवादो हि यदा भवति कर्मतः ।
[8]तदैते प्राश्निका ज्ञेया गदिता ये मयानघाः ॥६९॥
[9]शास्त्रज्ञाने यदा तु स्यात् संघर्षः शास्त्रसंश्रयः ।
[10]शास्त्रप्रमाणनिर्माणो व्यवहारो भवेत्ततः ॥७०॥
[11]स्वामिनियोगादन्योन्यविग्रहस्पर्धया च भरतानाम् ।
अर्थपताकाहेतोः सङ्घर्षो नाम संभवति ॥७१॥
[12]तेषां व्यवहारगतावपक्षपातेन दर्शनं कार्यम् ।
कृत्वा पणं [13]पताकासंव्यवहारं गमयितव्यम् ॥७२॥
[14]तैः सम्भावितमतिभिः सुखोपविष्टैर्विशुद्धभावैश्च ।
[15]लेखकगणकसहायैः सिद्धयोगाः समभिलेख्याः ॥७३॥
नात्यासन्नैर्न च दूरस्थितिभिः प्रेक्षकैश्च भवितव्यम् ।
[16]तेषामासनयोगो द्वादशहस्तस्थितिः कार्या ॥७४॥

66-74 (C. 66-74 ; B. 66-73). 1 B. om. 66 2 C. स्यादिष्वाद् 3 B. om. 67a. 4 B. इष्वस्त्रवित् सौष्ठवे तु नेपथ्ये चैव चित्रकृत्. कोठा, 5 C. गान्धर्वस्वर॰, B. गान्धर्वः. 6 B. एभि दृष्टान्तसंयुक्तै. 7 B. अशास्त्रज्ञा विवादेषु यथा प्रकृतिकर्मतः. 8 B. अथैते. 9 B. शास्त्रज्ञानायदा. 10 B प्रमाणनिर्माणैः 11 B. भर्तृनियोगाद्. 12 B. तेषां कार्यं व्यवहार दर्शनं पक्षपातविरहेण. 13 B. पताकां व्यवहारः स भवितव्यस्तु. 14 B. सर्वैरनन्यमतिभिः सुखोपविष्टैश्च शुद्धभावैश्च. 15 C. लोके for लेखक. 16 C. तेषामासनयावद्.

यानि विहितानि पूर्वं सिद्धिस्थानानि तानि लक्ष्याणि।
[1]घाताश्च लक्षणीया [2]यथोत्थिता नाट्ययोगे तु ॥७५॥
[3]दैवोत्पातसमुत्थाः परोत्थिता वा बुधैर्न लिखितव्याः।
घाता[4] नाट्यसमुत्था ह्यात्मसमुत्थास्तु लेख्या स्युः[5] ॥७६॥
घाता यस्य स्वल्पा [6]संख्याताः सिद्धयश्च बहुधाः स्युः।
विदितं कृत्वा राज्ञे तस्मै देया पताका तु ॥७७॥
[7]समकर्मगुणाः स्युस्तस्मिन् भरताः प्रयोगे[तथा][8] कुशलाः[9]।
[10]सिद्ध्यधिके तु पताका [11]समसिद्धौ चाज्ञया नृपतेः ॥७८॥
अथ नरपतिः समः [12]स्यादुभावपि तु लम्भनीयौ तौ।
[13]एवं [14]विधिज्ञैर्द्रष्टव्यं [15]व्यवहारसमञ्जसम् ॥७९॥
स्वस्थचित्तैः सुखासीनः सुविशिष्टैर्गुणादद्भिः।
विमृश्य प्रेक्षकैर्ग्राह्यं सर्वरागपराङ्मुखैः ॥८०॥
साधनं दूषणाभासं प्रयोगसमयाश्रितैः।
समत्वमङ्गमाधुर्यं पाठ्यं प्रकृतयो रसाः ॥८१॥
गानं वाद्यं सनेपथ्यमेतज्ज्ञेयं प्रयत्नतः।
[16]ध्रुवानां गानयोगे तु कालान्तरकलासु च ॥८२॥
यदङ्गं क्रियते नाट्य [17]समन्तात् सममुच्यते।
अङ्गोपाङ्गसमायोगं[18] गीततालल्याान्वितम्[19] ॥८३॥

75-82 (C. 76b-78a, 75, 78b, 80, 81, B. 74-82). 1 C. याः काश. 2 B. प्रयोगतो नाट्ययोगे 3 C. दैवोत्पन्नसमर्था॰ पताकोत्थिता; B. दैवाद्वात-समुत्थाः परोत्थिता॰ वा बुधैर्न वै लेख्या॰. 4 C. यात्वा *for* घाता. 5 C. add प्रथमं to this. (C. 78b) 6 C. संघातसिद्धयश्च. 7 See note 5 above. 8 C कुशला before 79a. 9 See note 3 above. 10 See note 9 above. 11 C. समसिद्धा वा ज्ञेया, B. समसिद्धौ पार्थिवाज्ञया. 12 B. स्यादुभयोरपि सा तदा देया. 13 C. om. 79b-81 and reads instead एवं विधिं तु दृष्टा कार्यो पाठ्यं प्रकृतयो रसा॰. 14 K. द्रष्टव्यौ, B सिद्धव्यौ) 15 B. व्यवहारः समञ्जसाम्. 16 C. ध्रुवानाट्यप्रयोगे. 17 C. समर्थं॰. 18 B. समायुक्तं. 19 B. गीतवादित्रतालेन.

'भाण्डवाद्य' समं चैव यस्मिंस्तन् सममुच्यते ।
'अनिर्भुग्नमुरः कृत्वा 'चतुरश्रायतौ भुजौ ॥८४॥
ग्रीवाञ्चिना तथा कार्या अङ्गमाधुर्यमुच्यते ।
पूर्वोक्तानीह शेषाणि यानि 'साध्यानि साधकैः ॥८५॥
'वाद्यं प्रकृतयो गानं 'वक्ष्यमाणानि 'निर्दिशेत् ।
यानि स्थानानि सिद्धीनां तैः सिद्धिं तु प्रकाशयेत् ॥८६॥
दर्पादङ्गसमुद्भूतां नानारससमुत्थिताम् ।
'वारः कालश्च विज्ञेयो विविधो नाट्ययोक्तृभिः ॥८७॥
दिवसश्चैव रात्रिश्च 'विशेषाश्चानयो स्मृताः ।
पूर्वाह्णस्त्वथ मध्याह्नस्त्वपराह्णस्तथैव च" ॥८८॥
''दिनासमुत्थिनावेतौ नाट्यचारौ प्रकीर्तितौ ।
''प्रादोषिक [अ]र्धरात्रश्च तथा प्राभातिकोऽपि च ।८९॥
नाट्यवारा भवन्त्येते 'रात्रिगर्भसमाश्रिताः ।
एतेषां ''तु यथायोग्यं नाट्यं कार्यं रसाश्रयम् ॥९०॥
तदहं संप्रवक्ष्यामि ''वारं कालसमुत्थितम्
यच्छ्रोत्ररमणीयं स्यात् ''धर्माख्यानकृतं तथा ॥९१॥
तत् पूर्वाह्णे बुधैः कार्यं शुद्धं तु विकृतं तथा ।
सत्त्वोत्थानगुणैर्युक्तं वाद्यभूयिष्ठमेव च ॥९२॥

84-92 (C 82-90a; B. 83a-92a) 1 B गानवाद्य॰ 2 B. सनिर्भुग्नम्. 3 B. चतुरश्रकृतौ करौ. 4 B. द्रव्याणि. 5 C वाद्यप्रकृतयोद्गानां. 6 C. वक्ष्यमाणानि दर्शयेत्. 7 B. 85 is practically a repetitions of 83b with slight variations. 8 C. पुरः for वारः, B वारकालास्तु. 9 B. वयवारान् निबोधत. 9a पौर्वाह्णिकस्तथा ज्ञेया आपराह्णिक एव,च. 10 B. दिवासमुत्था विज्ञेया नाट्यवाराः प्रयोगतः. 11 B. अर्धरात्रिश्च, C. ऽर्धरात्रं च. 12 B. रात्राविसनुपूर्वशः. 13 B. यत्र यथोज्यं नाट्यकार्यं रसाश्रयम्. 14 B. वारकालसमुत्थितम्. 15 B. धर्मोत्थानकृतं.

पुष्कलं [1]सिद्धियुक्तं तु अपराह्णे प्रयोजयेत् ।
कैशिकीवृत्तिसंयुक्तं शृंगाररससंश्रयम् ॥९३॥
[1a]गीतवादित्रभूयिष्ठं प्रदोषे नाट्यमिष्यते ।
[2]यन्नर्महास्यसंयुक्तं करुणप्रायमेव च ॥९४॥
प्रभातकाले तत्कार्यं नाट्यं निद्राविनाशनम् ।
अर्धरात्रे [3]न युञ्जीत न मध्याह्ने तथैव च ॥९५॥
सन्ध्याभोजनकाले च नाट्यं न च कदाचन ।
एवं कालञ्च देशञ्च प्रसमीक्ष्य [4]ससंश्रयम् ॥९६॥
[5]नाट्यदारं प्रयुञ्जीत यथाभावं यथारसम् ।
अथवा देशकालौ तु न परीक्ष्यौ कदाचन ॥९७॥
यत्र चाज्ञापयेद्भर्ता तत्र योज्यमसंशयम् ।
[6]तदा समुदिताश्चैव प्रयोगा नाटकाश्रयाः ॥९८॥
पात्रं [7]प्रयोगमृद्धिश्च विज्ञेयास्तु त्रयो गुणाः ।
[8]बुद्धिसत्त्वस्वरूपं च लयतालज्ञता तथा ॥९९॥
रसभावज्ञता चैव वयःस्थत्वं कुतूहलम् ।
ग्रहणं धारणं चैव [9]गानं नाट्यकृतं तथा ॥१००॥
[10]जितसाध्वसतोत्साहाविति पात्रगतो विधिः ।
सुवाद्यता सुगानत्वं सुपाठ्यत्वं तथैव च ॥१०१॥
शास्त्रकर्मसमायोगः प्रयोगः [11]स तु संज्ञितः ।
[12]सुविभूषणता या तु सुमाल्याम्बरता तथा ॥१०२॥

93-102 (C 90b-100a; B. 92b-102a). 1 B. सत्त्वयुक्तं. 1a B. नृत्तवादित्रगीताढ्यं. 2 C. यत्तु माहात्म्यसंयुक्तं, Ck यन्नर्महास्यबहुलं. 3 B. नियुञ्जीत 4 B. बलाबलम्. 5 B. नित्यं नाट्यं. 6 B. तथा समुदिताश्चैव विज्ञेया नाटकाश्रिता यथा समुदयश्चैव प्रयोगाश्च समृद्धय. 7 C. प्रयोगमर्थश्च. 8 C. बुद्धिसत्त्वस्वरूपं च, B. बुद्धिमत्त्वं सुरूपत्वं. 9 B, गानादैक्यनयनैव च. 10 B. निजसाध्वसतोत्साह इति. 11 B. इति for स तु. 12 B. सुविभूषणताया तु माल्याभरणवाससाम्.

[1]या त्वङ्गरचना चैव समृद्धिरिति [2]सा स्मृता ।
यदा सर्वे समुदिता एकीभूता भवन्ति हि ॥
अलङ्कारः [3]स तु तथा मन्तव्यो [4]नाट्ययोक्तृभिः ॥१०३॥
एतदुक्तं [5]मया सम्यक् सिद्धीनां लक्षणं [6]द्विजाः ।
अत ऊर्ध्वं प्रवक्ष्यामि [7]आतोद्यानां विकल्पनम् ॥१०४॥

इति भारतीये नाट्यशास्त्रे सिद्धिव्यञ्जको नाम
सप्तविंशोऽध्यायः ॥

103-104 (C. 100b-102; B. 102b-104). 1 B. विचित्ररचना. 2 B. संहिता. 3 B. सङ्कुलधा. 4 B. नाटकाश्रया. 5 B. द्विजश्रेष्ठा. 6 B. मया 7 B. आतोद्यानां च, C. ह्यातोद्यानां.

# CORRECTIONS for Chapters I-XI

| Page | Line | | |
|---|---|---|---|
| xix | 11 | from the bottom | Read *Nāṭyaśāstra*. |
| xxxiii | 9 | | „ 'corrupt' for 'corrpupt'. |
| „ | 7 | from the bottom | „ 'whenever' for 'when ever'. |
| xxiv | 7 | from the bottom | „ 'the' for 'thh'. |
| xl | 8 | | „ 'dramaturgy' for 'drmaturgy'. |
| xlvii | 18 | | „ 'like any'. |
| lv | 5 | from the bottom | „ 'Prof.' for 'Peof'. |
| lviii | 4 | | „ 'or' for '(or'. |
| lx | 9 | from the bottom | „ 'was' for 'were' |
| lxii | 15 | | „ 'earliest' before 'Prakrit'. |
| lxxiii | 16 | | „ 'madhyama' for 'madgyama'. |
| lxxix | 1 | from the bottom | „ 'Hiuen' for 'Hieven'. |
| 6 | 15 | | Omit the asterisk. |
| 7 | 7 | from the bottom | Read विन्नाः for विन्ना. |
| 15 | 12 | „ „ | „ रज्ज्वा for रज्वा. |
| 18 | 2 | | „ दोषा for दौषा. |
| 19 | 14-16 | | Put an asterisk before the lines. |
| 20 | 12 | | Read चात्ममोगजम् for चात्ममोगजम्. |
| 20 | 5 | from the bottom | „ वाद्यत for वाद्यत. |
| 23 | 7 | | „ नाट्यत्वाद्वैऽस्वतान्वरः. |
| 25 | 2 | from the bottom | „ 6 B सूर्येन्द्र सगुदकान्. |
| 25 | 13 | „ „ | „ प्रस्थानथ सहानुगान्. |
| 30 | 6 | „ „ | „ रैहखदुन्दुभिन्न |

| Page | Line | | |
|---|---|---|---|
| 32 | 12 | | ,, सुरैर्गत्वा. |
| 37 | 4-5 | | Cancel the two lines. |
| 39 | 11 | | Read हस्तैर्मत्तल्ल्युदाहृतम्. |
| 39 | 13 | | ,, हस्तैर्मत्तल्लिमादिशेत्. |
| 40 | 6 | from the bottom | ,, करणं for चरणं. |
| 43 | 6 | ,, ,, | ,, करण for चरणं. |
| 45 | 8 | ,, ,, | ,, रेचितावविद्धौ. |
| 47 | 12 | | ,, चैव for च. |
| 49 | 3, 12 | | ,, मत्तल्लिकरण. |
| 50 | 6 | | , मण्डल चैव |
| 50 | 6 | from the bottom | ,, तथा चैव, |
| 53 | 6 | | ,, मृदङ्गनेरोपटहैः |
| 61 | 9 | | ,, विगत प्ररोचना च for त्रिकं प्ररोचना चापि. |
| 61 | 16 | | ,, वहुपाणिर्विधीयते. |
| 62 | 16 | | ,, सोत्तवहने च गीते for नोपोहने समिर्गीते |
| 62 | 18 | | ,, उद्गीतं for निर्गीत |
| 72 | 9 | | ,, तालप्रमाणं. |
| 81 | 4 | from the bottom | ,, धर्मीति द्विविधाः स्तवा for धर्मी तु द्विविध स्तव. |
| 85 | 12 | from the bottom | ,, पुरप्रमदायुक्त. |
| 88 | 5 | | ,, राक्षसदानवदर्पेना. |
| 104 | 10 | from the bottom | ,, ०चक्र for ०चत्व०. |
| 127 | 11 | ,, ,, | ,, ०रोपज[ना]दिषु. |
| 134 | 6 | ,, | स्पर्शान्हतुर्न. |

# CORRECTIONS for Chapters XII-XXVII

| Page | Line | | |
|---|---|---|---|
| 12 | 12 | | Read पाद्दैर्नि शब्द०. |
| 20 | 10 | | ,, नवजह्वा. |
| 21 | 5 | | ,, विज्ञेनममम्बद्ध०. |
| 21 | 6 | from the bottom | Put an asterisk before the line |
| 32 | 14 | ,, ,, | Read द्रेषणिकाश्चापि. |
| 94 | 4 | | ,, यत्प्रम्याः ह्य इति भ्यथ्यज्ञाना भवति. |
| 95 | 1 | | ,, १८, २६-३४ for १७, २६-२४ |
| ,, | 6 | | ,, त्रिविधा for द्विविधा. |
| ,, | 6 | from the bottom | ,, 5 BC द्विविधा for त्रिविधा. |
| 98 | 3 | | ,, नायकादाना for नायिकादीना |
| 100 | 1 | | ,, १६, ११-२१ for १८, ११-२१ |
| 101 | 1 | | ,, १६, २२-३० for १८, २२-३०. |
| 103 | 12 | from the bottom | ,, करुणवीभत्सभयानके for करुणवाभत्स्य लक्षणम्. |
| 126 | 7 | | ,, मन्वोनामिह्लक्षणम् for वृत्तीनामिह०. |
| 126 | 1 | from the bottom | ,, इतिवृत्त द्विविधानं मन्धिविलक्षणं वक्षेत् for इतिवृत्त etc. |
| 142 | 14 | | ,, जयन्युदधिनी. |
| 150 | 10 | | ,, सादह्वतानां. |
| 160 | 10 | | ,, रक्षोदानवदैत्यानां |
| 161 | 14 | | ,, ०न्तराधर्म. |
| 182 | 12 | | ,, ०दुर्लोङ्गनुभरिवोदरा |
| 189 | 6 | from the bottom | ,, योज्या for योज्यं. |
| 190 | 10 | | ,, वा प्रयोक्तृभि० for वीयता नृपः |

| | | | |
|---|---|---|---|
| 191 | 2 | | ,, वाऽसमागमे for वा समागमे |
| 194 | 11 | from the bottom | ,, संहर्षाचात for संघर्षाचात्र. |
| 194 | 2 | ,, ,, | Omit C. संहर्षाचात |
| 196 | 7 | ,, ,, | Read हृष्टा for हृष्ट्वा. |
| 204 | 2 | from the bottom | ,, C. निष्टम्भं after 10. |
| 204 | 13 | ,, ,, | ,, निष्ट[म्भा]. |
| 204 | 2 | ,, ,, | ,, C. निष्टम्भ |
| 209 | 9 | ,, ,, | ,, उदयास्तम[ने]. |
| 216 | 11 | ,, ,, | ,, रज्ज्वा for रज्वा . |
| 220 | 6 | ,, ,, | ,, यत्तु for यत्त |
| 231 | 4 | ,, ,, | Put C. after 9a and read श्रापराह्निकः. |

## CORRECTIONS for Vol. II. (Chapters XXVIII-XXXVI)

| Page | Line | |
|---|---|---|
| 21 | 3 | Read कार्यं for कार्यं. |
| 31 | 19 | „ आविद्धधातु॰ for आविद्धधातु. |
| 32 | 16 | „ आविद्धकरण॰ „ आविद्धकरण |
| 35 | 3 | „ „ „ „ |
| 37 | 4 | „ „ „ „ |
| 47 | 9 | „ आमारितानां „ आमारितां |
| 49 | 10 | „ शरीरमहारा॰. |
| 84 | 15 | „ वितन्तनिम्नलेखाञ्च. |
| 91 | 15 | „ एताः स्थिता अप्रहृष्टासु. |
| 109 | 10-11 | This couplet is corrupt. |
| 109 | 10-17 | Put an asterisk before the lines. |
| 110 | 11, 13, 14, 15 | „ „ „ „ |
| 111 | 5, 7, 9, 11, 13, 15, 17, 19 | „ „ „ „ |
| 150 | 7 | „ अनुमृतविच्युतः for विच्युतः. |
| 156 | 19 | „ दर्दुरप्रहारा for दर्दुदप्रहारा. |
| 177 | 14 | „ ततानुबद्धसंज्ञ॰. |
| 187 | 17-18 | Put two stars before the lines. |
| 191 | 16-17 | „ „ „ „ |
| 204 | 13-14 | „ „ „ |
| 205 | 15-16 | „ „ |
| 207 | 12 | Read वि[दु]मिञ्चयनी, |